गृहस्थस्य तु धर्मोऽग्र्यस् सम्प्राप्तोऽतिथिपूजनम् ॥ ८७

अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति ।
[1]नास्मात् परो धर्म इति ब्रह्मन् मम मनीषितम् ॥ ८८

प्राणाश्च मम दाराश्च यच्चान्यद्विद्यते वसु ।
अतिथिभ्यो मया देयम् इति मे व्रतमाहितम् ॥ ८९

निस्सन्दिग्धं मया वाक्यम् एतत्ते समुदाहृतम् ।
ततोऽहं विप्र सत्येन स्वयमात्मानमालभे ॥ ९०

पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ।
बुद्धिरात्मा मनः कालो दिशश्चैतास्तथा दश ॥ ९१

नित्यमेतानि पश्यन्ति देहिनां देहसंश्रिताः ।
सुकृतं दुष्कृतं चापि कर्म कर्मवतां वर ॥ ९२

यथैषा नानृता वाणी मयाऽद्य समुदाहृता ।
तेन सत्येन मां देवाः पालयन्तु दहन्तु वा ॥ ९३

भीष्मः—

ततो नादस्समभवद् दिक्षु सर्वासु भारत ।
असकृत् सत्यमित्येव नैतन्मिथ्येति सर्वशः ॥ ९४

उटजान् तु ततस्तस्मान्निश्चक्राम स वै द्विजः ।
वपुषा खं च भूमिंच व्याप्य वायुरिवोद्गतः ॥ ९५

---

1. क-ख-घ—न हि तस्मात् परो धर्म इति प्राहुर्मनीषिणः । [पाठान्तरम्]

स्वरेण विप्रशक्येन त्रींल्लोकाननुनादयन् ।
उवाच चैनं धर्मज्ञं पूर्वमामन्त्र्य नामतः ॥ ९६

मृत्युः—

धर्मोऽहमस्मि भद्रं ते जिज्ञासार्थं तवानघ ।
प्राप्तस्सत्यं च ते ज्ञात्वा प्रीतिर्हि परमा त्वयि ॥ ९७

विजितश्च त्वया मृत्युर् एष त्वामनुगच्छति ।
रन्ध्रान्वेषी तव सदा त्वया धृत्या वशीकृतः ॥ ९८

न चास्ति शक्तिस्त्रैलोक्ये कस्यचित् पुरुषोत्तम ।
[1]पतिव्रतामिमां भार्यां तव वीक्षितुमच्युत ॥ ९९

रक्षिता त्वद्गुणैरेषा पातिव्रत्यगुणादपि ।
अधृष्या यदियं ब्रूयात् तथा तन्नान्यथा भवेत् ॥ १००

[2]एषा हि तपसा स्वेन संयुता ब्रह्मवादिनी ।
पावनार्थं तु लोकस्य सरिच्छ्रेष्ठा भविष्यति ॥ १०१

अर्धेनौघवती नाम त्वामर्धेनानुयास्यति ।
शरीरेण [3]महाभागा योगो ह्यस्या वशे स्थितः ॥ १०२

अनया सह लोकांश्च गन्तासि तपसाऽऽर्जितान् ॥ १०२॥

---

1. अ—अर्धद्वयं नास्ति　　2. ख—इदमर्धं नास्ति

3. क—महाभाग

यत्र नावृत्तिमभ्येति शाश्वतांस्ताननुत्तमान् ।
अनेन चैव देहेन लोकांस्त्वमनुवत्स्यसे ॥ १०३॥

निर्जितश्च त्वया मृत्युर् ऐश्वर्यं च तवोत्तमम् ।
पञ्चभूतान्यतिक्रान्तस् स्ववीर्याच्च मनोभवात् ॥ १०४॥

गृहस्थधर्मेणानेन कामक्रोधौ च ते जितौ ॥ १०५

स्नेहो रागश्च तन्द्री च लोभो द्रोहश्च केवलः ।
तव शुश्रूषया राजन् राजपुत्र्या च निर्जिताः ॥ १०६

भीष्मः—

शुक्लानां तु सहस्रेण वाजिनां रथमुत्तमम् ।
युक्तमारुह्य भगवान् यमस्साक्षाज्जगाम ह ॥ १०७

मृत्युरात्मा च लोकाश्च जिता भूतानि पञ्च च ।
बुद्धिः कालो मदो मोहः कामक्रोधौ तथैव च ॥ १०८

तस्माद् गृहाश्रमस्थस्य [1]नान्यदैवतमस्ति वै ।
[2]ऋतेऽतिथिं नरव्याघ्र मनसैतद्विचारय ॥ १०९

अतिथिः पूजितो यद्धि मनसा ध्यायते शुभम् ।
न तत् क्रतुशतेनापि तुल्यमाहुर्मनीषिणः ॥ ११०

पात्रं चातिथिमासाद्य शीलाढ्यं यो न पूजयेत् ।

---

1. क-घ—नान्यदेव तपोऽस्ति वै

2. क—आतिथ्यात् तु नर घ—ऋतेऽतिथेर्नर

सुदत्तं सुकृतं वाऽपि [1]क्षपयेदप्यनर्चितः ॥ १११

एतत्ते कथितं पुत्र मयाऽऽख्यानमनुत्तमम् ।
यथा विनिर्जितो मृत्युर् गृहस्थेन पुराऽभवत् ॥ ११२

धन्यं यशस्यमायुष्यम् इदमाख्यानमुत्तमम् ।
[2]यः पठेच्छृणुयाद्वाऽपि सर्वपापप्रणाशनम् ॥ ११३

[3]य इदं कथयेन्नित्यम् अहन्यहनि पार्थिव ।
सुदर्शनस्य चरितं पुण्याँल्लोकानवाप्नुयात् ॥ ११४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ११४ श्लोकाः ]

---

1. क-घ—कम्पयेदप्ययाचितः
2. क-ख-घ—बुभूषता हि वक्तव्यं सर्वदुश्चरितापहम् । [ पाठान्तरम् ]
3. अ-क—नास्तीदमर्धम्

## ॥ तृतीयोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मण्यस्य क्षत्रियादिदौर्लभ्ये दृष्टान्ततया मतङ्गोपाख्यानकथनारम्भः ॥ १ ॥ तत्रेन्द्रमतङ्गसंवादानुवादारम्भः ॥ २ ॥ मतङ्गेन ब्राह्मण्यप्राप्तये वर्षशतं तपश्चरणम् ॥ ३ ॥ तं प्रतीन्द्रेण प्राणिनां कथंचिन्मानुषत्वलाभेऽपि नानानीचयोनिषु परिभ्रमणपूर्वकं क्रमेण त्रैवर्णिकत्वमात्रप्राप्तिकथनेन ब्राह्मण्यस्य दुर्लभत्वोक्तिः ॥ ४ ॥ इन्द्रेण पुनर्ब्राह्मण्यप्राप्तये तपस्यते मतङ्गाय ब्राह्मण्यस्य दुष्प्रापत्वकथनपूर्वकमितराभीष्टवरदानम् ॥ ५ ॥

---

युधिष्ठिरः—

प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च यथा भवान् ।
गुणैस्समुदितस्सर्वैर् वयसा च समन्वितः ॥ १
सर्वेषां चैव जन्तूनां सतामेतन्न संशयः ॥ १॥
तस्माद्भवन्तं पृच्छामि धर्मं धर्मभृतां वर ॥ २
क्षत्रियो यदि वा वैश्यश् शूद्रो वा राजसत्तम ।
ब्राह्मण्यं प्राप्नुयात् केन तन्मे ब्रूहि पितामह ॥ ३
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
ब्राह्मण्यमथ चेदिच्छेत् कथं शक्यं पितामह ॥ ४

भीष्मः—

ब्राह्मण्यमतिदुष्प्रापं वर्णैः क्षत्रादिभिस्त्रिभिः ।
परं हि सर्वभूतानां स्थानमेतद्युधिष्ठिर ॥ ५

बह्वीस्तु संसरन् योनीर् जायमानः पुनः पुनः ।
पर्याये नाम कस्मिंश्चिद् ब्राह्मणो नाम जायते ॥ ६

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
मतङ्गस्य च संवादं गर्दभ्याश्च युधिष्ठिर ॥ ७

द्विजातेः कस्यचित् पार्थ तुल्यवर्णः पुनस्सुतः ।
पुरा मतङ्गो नाम्नाऽऽसीन् सर्वैस्समुदितो गुणैः ॥ ८

स यज्ञकारणात् पार्थ पित्रा सृष्टश्शुभाननः ।
त्वरया तं खरैर्युक्तम् आस्थाय रथमाव्रजत् ॥ ९

स बालं गर्दभी पुत्रं [1]वहन्तं मातुरन्तिके ।
निरविध्यन् प्रतोदेन नासिकायां पुनः पुनः ॥ १०

तं दृश्य नासिनिर्भिन्नं [2]गर्दभं पुत्रगृद्धिनी ।
उवाच मा शुचः पुत्र चण्डालस्त्वाऽभिविध्यति ॥ ११

ब्राह्मणो दारुणो नास्ति मैत्रो ब्राह्मण उच्यते ।
आचार्यस्सर्वभूतानां शास्ता किं प्रहरिष्यति ॥ १२

अयं च पापप्रकृतिर् बाले न कुरुते दयाम् ।
स्वां योनिं मानयंस्त्वेतां भावं भावोऽधिगच्छति ॥ १३

एतच्छ्रुत्वा मतङ्गस्तु करुणं रासभीवचः ।

---

1. क-ख—वसन्तम्
2. क-ख—गर्दभो

अवतीर्य रथात् तूर्णं तामिदं प्रत्यभाषत ॥　　१४

मतङ्गः—

ब्रूहि रासभि तत्त्वेन जननी येन दूषिता ।
केन मां वेत्थ चण्डालं ब्राह्मण्यं केन मेऽनशत् ॥　　१५

तत्त्वेन मे महाप्राज्ञे ब्रूहि सर्वमशेषतः ॥　　१५॥

रासभी—

ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन वै ।
जातस्ततोऽसि चण्डालो ब्राह्मण्यं तेन तेऽनशत् ॥　　१६॥

भीष्मः—

एवमुक्तो मतङ्गस्तु प्रत्युपायाद्गृहं पुनः ।
तमागतमभिप्रेक्ष्य पिता पुत्रमथाब्रवीत् ॥　　१७॥

यस्त्वं यज्ञार्थसंसिद्धौ नियुक्तो गुरुकर्मणि ।
कस्मात् प्रतिनिवृत्तोऽसि कच्चिन्न कुशलं तव ॥　　१८॥

मतङ्गः—

अयोनिरग्र्ययोनिर्वा यस्स्यात् स कुशली भवेत् ।
कुशलं तु कुतस्तस्य यस्येयं जननी भवेत् ॥　　१९॥

ब्राह्मण्यां वृषलाज्जातं [1]खरी वेदयते हि माम् ।
अमानुषी गर्दभीयं तपस्तप्स्ये महावने ॥　　२०॥

---

1. क-ख—सन्निवे

भीष्मः—

[1]एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः ।
ततो गत्वा महारण्यम् अतप्यत महत्तपः ॥ २१॥
ततस्सन्तापयामास विबुधांस्तपसाऽन्वितः ।
मतङ्गस्सुसुखं प्रेप्सुस् स्थानं सुचरितादथ ॥ २२॥
तं तथा तपसा युक्तम् उवाच हरिवाहनः ॥ २३

इन्द्रः—

मतङ्ग तप्यसे किं त्वं भोगानुत्सृज्य मानुषान् ॥ २३॥
वरं ददामि ते हन्त वृणीष्व त्वं यदिच्छसि ।
यदवाप्यं च यत् किञ्चित् सर्वमेव वृणीष्व तत् ॥ २४॥

मतङ्गः—

ब्राह्मण्यं कामयानोऽहम् इदमारब्धवांस्तपः ।
गच्छेयं तदवाप्यैतद् वर एष वृतो मया ॥ २५॥

भीष्मः—

एतच्छ्रुत्वा तु वचनं तमुवाच पुरन्दरः ॥ २६

इन्द्रः—

ब्राह्मण्यं प्रार्थयानस्त्वम् अप्राप्य विनशिष्यसि ॥ २६॥
श्रेष्ठं यत् सर्वभूतेषु तपो यदतिवर्तते ।
तदुक्तं प्रार्थयानस्त्वं मतङ्ग विनशिष्यसि ॥ २७॥

1. ख—अर्धद्वयं नास्ति

देवतासुरमर्त्यानां वरं विश्वस्य यत् सुखम् ।
चण्डालयोनौ जातेन न तत् प्राप्यं कथञ्चन* ॥ २८॥

भीष्मः—

एवमुक्तो मतङ्गस्तु संशितात्मा महाव्रतः ।
[1]अतिष्ठदेकपादेन शतं वै परिवत्सरान् ॥ २९॥

तमुवाच सहस्राक्षः पुनरेव महायशाः ॥ ३०

इन्द्रः—

मतङ्ग परमं स्थानं प्रार्थयानो महाव्रत ।
मा कृथास्साहसं तात नैष धर्मपथस्तव ॥ ३१

विमार्गेतो मार्गमाणस् सर्वथा न भविष्यसि ।
[2]मतङ्ग परमं स्थानं वार्यमाणो मयाऽसकृत् ॥ ३२

चिकीर्षस्येव तपसा सर्वथा न भविष्यसि ॥ ३२॥

तिर्यग्योनिगतस्सर्वो मानुष्यं यदि गच्छति ।
अजाविकश्वपाको वा चण्डालो वा कदाचन ॥ ३३॥

[3]मल्लकः पुल्कसो वाऽपि ये चान्ये हीनजातिषु ।
तस्यामधमयोनौ स्म सततं परिवर्तते ॥ ३४॥

ततो दशगुणे काले लभते शूद्रतामपि ॥ ३५

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. अ-क—अर्धत्रयं नास्ति

2. ख—इदमर्धद्वयं नास्ति

3. क-घ—मल्लुकः

शूद्रतायाश्चिरं कालं तत्रैव परिवर्तते ॥ ३५॥
[1-2]ततश्च त्रिशते काले लभते वैश्यतामपि ।
वैश्यकश्च चिरं कालं तत्रैव परिवर्तते ॥ ३६॥
ततष्षष्टिगुणे काले राजन्यो नाम जायते ।
राजन्ये तु चिरं कालं तत्रैव परिवर्तते ॥ ३७॥
ततस्त्रिशद्गुणे काले लभते ब्रह्मबन्धुताम् ।
[3]ब्रह्मबन्धुश्चिरं कालं तत्रैव परिवर्तते ॥ ३८॥
ततश्च द्विगुणे काले लभते काण्डपृष्ठताम् ।
काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्तते ॥ ३९॥
[4]ततश्च त्रिशते काले लभते द्विजतामपि ।
द्विजतायां चिरं कालं तत्रैव परिवर्तते ॥ ४०॥
ततश्चतुश्शते काले श्रोत्रियो नाम जायते ।
श्रोत्रियत्वे चिरं कालं तत्रैव परिवर्तते ॥ ४१॥
तदेनं क्रोधहर्षौ तु कामद्वेषौ तथैव च ।
विचिकित्साऽ[5]भिमानश्च ह्यपवादश्च विन्दति ॥ ४२॥

---

1. अ-क—इदमाद्यर्धचतुष्टयं नास्ति
2. ख—ततस्त्रिंशद्गुणे काले　घ—ततश्च त्रिगुणे काले
3. अ-क-घ—अर्धत्रयं नास्ति
4. क-घ—इदमर्धं नास्ति
5. क-घ—तिमानश्च रतिमानश्च　ख—तिवादश्च तन्द्री मानश्च

तांश्चेच्छत्रूञ्जयत्येव प्राप्नोति परमां गतिम् ।
अथ ते वै जयन्त्येनं तालं पक्वमिवापतेत् ॥ ४३॥

मतङ्ग सम्प्रधार्यैतद् यदहं त्वामचोदयम् ।
वृणीष्व काममन्यं वै नैतच्छक्यमिति त्वया ॥* ४४॥

भीष्मः—

एवमुक्तो मतङ्गस्तु दुःखशोकपरायणः ।
अतिष्ठत [1]गयां गत्वा सोऽङ्गुष्ठेन शतं समाः ॥ ४५॥

सुदुष्करं वहन् योगं कृशो धमनिसन्ततः ।
त्वगस्थिभूतो धर्मात्मा स ततापेति नश्श्रुतम् ॥ ४६॥

तं तपन्तमभिद्रुत्य पाणिं जग्राह वासवः ।
वराणामीश्वरो दाता सर्वभूतहिते रतः ॥ ४७॥

इन्द्रः—

मतङ्ग ब्राह्मणत्वं तैस् संवृतं परिपन्थिभिः ।
पूजयन् सुखमाप्नोति दुःखमाप्नोत्यपूजयन् ॥ ४८॥

ब्राह्मणे सर्वभूतानां योगक्षेमस्समाहितः ॥ ४९

ब्राह्मणा ननु तृप्यन्ति पितरो देवतास्तथा ।
ब्राह्मणस्सर्वभूतानां मतङ्ग पर उच्यते ॥ ५०

ब्राह्मणः कुरुते तद्धि योऽसौ यद्यदिहेच्छति ॥ ५०॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. क-च—गवा स्नात्वा योगं गोष्ठे

बह्वीस्स्म संसरन् योनीर् जायमानः पुनः पुनः ।
पर्याये तात कस्मिंश्चिद् ब्राह्मण्यमिह विन्दति ॥ ५१॥

किं नु शोचसि दुःखार्त्वं मृतं किमनुशोचसि ।
तं न शोचसि यो लब्ध्वा ब्राह्मण्यमिह पातयेत् ॥ ५२॥

ब्राह्मण्यं यत्तु दुष्प्रापं त्रिभिर्वर्णैर्दुरासदम् ।
सुदुर्लभं च तन् प्राप्य नानुतिष्ठन्ति मानवाः ॥ ५३॥

ये पापेभ्यः पापतमास् तेषामधम एव सः ।
ब्राह्मण्यं योऽवजानीते धनं लब्ध्वा सुदुर्लभम् ॥ ५४॥

दुष्प्रापमिति ब्राह्मण्यं प्राप्तं तदनुपालनम् ।
दुरवापमवाप्यैतन्नानुतिष्ठन्ति ब्राह्मणाः ॥ ५५॥

मतङ्गः—

एकाराम एकरतिर् निर्द्वन्द्वोऽहं वने मुनिः ।
अहिंसादमदानस्थो नैव ब्राह्मणतां लभे ॥ ५६॥

परं वरं वृणे देव म मे सिध्येत वासव ।
यथा कामविहारी स्यां कामरूपी विहङ्गमः ॥ ५७॥

ब्रह्मक्षत्रानुरोधेन लभे पूजां मनीषिभिः ।
एवं ममाक्षया प्रीतिर् भवत्विह पुरन्दर ॥ ५८॥

इन्द्रः—

मतङ्ग गम्यतां शीघ्रम् एवमेतद्भविष्यति ॥ ५९

स्त्रियस्सर्वास्त्वया लोके यक्ष्यन्ते भूतिकर्मणि ।

एवं तवाक्षया कीर्तिर् भविष्यति तपोधन ॥ ६०

छन्ददेव इति ख्यातस् स्त्रीभिः पूज्यो भविष्यसि ॥ ६०॥

भीष्मः—

एतत् तस्मै वरं दत्त्वा वासवोऽन्तरधीयत ।

ब्रह्म त्यक्त्वा मतङ्गोऽपि प्राप तत्स्थानमुत्तमम् ॥ ६१॥

एवमेव परं स्थानं मर्त्यानां भरतर्षभ ।

ब्राह्मण्यं नाम दुष्प्रापम् इन्द्रेणोक्तं महात्मना ॥ ६२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ६२॥ श्लोकाः ]

## ॥ चतुर्थोऽध्यायः

युधिष्ठिरेण भीष्मं प्रति सविस्तरं विश्वामित्रेतिहासानुवादपूर्वकं तस्य ब्राह्मण्यप्राप्तिहेतुप्रश्नः ॥ १ ॥ भीष्मेण युधिष्ठिरं प्रति विश्वामित्रस्योत्पत्तिप्रकारकथनेनैव ब्राह्मण्यप्राप्तिप्रकारकथनम् ॥ २ ॥

---

युधिष्ठिरः—

ब्राह्मण्यं यदि दुष्प्राप्यं त्रिभिर्वर्णैर्नराधिप ।
कथं प्राप्तं महाराज क्षत्रियेण महात्मना ॥ १
विश्वामित्रेण धर्मात्मन् ब्राह्मणत्वं नरर्षभ ॥ १॥
श्रोतुमिच्छामि तत्त्वेन तन्मे ब्रूहि पितामह ॥ २

तेन ह्यमितवीर्येण वसिष्ठस्य महात्मनः ।
हतं पुत्रशतं सद्यस् तपसा च पितामह ॥ ३

यातुधानाश्च बहवो राक्षसास्तिग्मतेजसः ।
मन्युनाऽऽविष्टदेहेन सृष्टाः कालान्तकोपमाः ॥ ४

महान् कुशिकवंशश्च ब्रह्मर्षिशतसङ्कुलः ।
स्थापितो नरलोकेऽस्मिन् विद्वद्ब्राह्मणसंस्तुतः ॥ ५

ऋचीकस्यात्मजश्चैव शुनश्शेफो महातपाः ।
विमोक्षितो महासत्रात् पशुतामप्युपागतः ॥ ६

हरिश्चन्द्रः क्रतौ देवांस् तोषयित्वाऽऽत्मतेजसा ।

पुत्रतामनुसम्प्राप्तो विश्वामित्रस्य धीमतः ॥ ७
नाभिवादयते ज्येष्ठं देवरातो नराधिप ।
पुत्राः पञ्चशतं चापि शप्ताश्श्वपचतां गताः ॥ ८
त्रिशङ्कुर्बन्धुसन्त्यक्त ऐक्ष्वाकः प्रीतिपूर्वकम् ।
अवाक्शिरा दिवं नीतो दक्षिणामाश्रितो दिशम् ॥ ९
विश्वामित्रस्य भगिनी नदी राजर्षिसेविता ।
[1]कौशिकीति कृता पुण्या ब्रह्मर्षिगणसेविता ॥ १०
तपोविघ्नकरी चैव पञ्चचूडा सुसम्मता ।
रम्भा नामाप्सराश्शापाद् अस्य शैलत्वमागता ॥ ११
तथैवास्य भयाद्बद्ध्वा वसिष्ठस्सलिले पुरा ।
आत्मानं मज्जयामास विपाशः पुनरुत्थितः ॥ १२
तदाप्रभृति पुण्या सा विपाशा वै महानदी ।
विख्याता कर्मणा तेन वसिष्ठस्य महात्मनः ॥ १३
वश्यश्च भगवान् येन देवसेनाग्रगः प्रभुः ।
स्तुतः प्रीतमनाश्चासीत् पश्चाच्चैनममोचयन् ॥ १४
ध्रुवस्यौत्तानपादस्य ब्रह्मर्षीणां तथैव च ।
मध्ये ज्वलति यो नित्यम् उदीचीमाश्रितो दिशम् ॥ १५
तस्यैतानि च कर्माणि तथाऽन्यानि च कौरव ।

1. ञ—नास्त्रीदमधंम्

क्षत्रियस्येत्यतो जातान्यतिकौहनूलं हि मे ॥ १६
किमेतदिति तत्त्वेन प्रब्रूहि भरतर्षभ ।
देहान्तरमनासाद्य कथं स ब्राह्मणोऽभवत् ॥ १७
एतत् तत्त्वेन मे राजन् सर्वमाख्यातुमर्हसि ।
मतङ्गस्य यथा तत्त्वं तथैवैतद्ब्रवीहि मे ॥ १८
स्थाने मतङ्गो ब्राह्मण्यं नालभद्भरतर्षभ ।
चण्डालयोनौ जातस्य कथं ब्राह्मण्यमुच्यते ॥ १९

भीष्मः—

श्रूयतां पार्थ तत्त्वेन विश्वामित्रो यथा पुरा ।
ब्राह्मणत्वं गतस्तात राजर्षित्वं तथैव च ॥ २०
भरतस्यान्ववाये वै मिथिलो नाम पार्थिवः ।
बभूव भरतश्रेष्ठ सत्यधर्मभृतां वरः ॥ २१
तस्य पुत्रो महानासीज् जह्नुर्नाम जनेश्वरः ।
दुहितृत्वमनुप्राप्ता गङ्गा यस्य महात्मनः ॥ २२
तस्यात्मजस्तुल्यगुणस् सिन्धुद्वीपो महायशाः ।
सिन्धुद्वीपाश्च राजर्षिर् बलाकाश्वो महाबलः ॥ २३
[1]पल्वलस्तस्य तु सुतस् साक्षाद्धर्म इवापरः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1 क-घ—पल्लवस्तस्य तनयः  ख—पर्वतस्तस्य तनयः

कुशिकस्तस्य तनयस् सहस्राक्षसमद्युतिः ॥ २४
कुशिकस्यात्मजश्श्रीमान् गाधिर्नाम जनेश्वरः ।
अपुत्रस्स महाबाहुर् वनवासमुपागमत् ॥ २५
कन्या जज्ञे सुता तस्य वने निवसतस्ततः ।
नाम्ना सत्यवती नाम रूपेणाप्रतिमा भुवि ॥ २६
तां वव्रे भार्गवश्श्रीमांश् च्यवनस्यात्मजः प्रभुः ।
ऋचीक इति विख्यातो विपुले तपसि स्थितः ॥ २७
स तां न प्रददौ तस्मै ऋचीकाय महात्मने ।
दरिद्र इति मन्वानो गाधिश्शत्रुनिबर्हणः ॥ २८
प्रत्याख्याय तु तं यान्तम् अब्रवीद्राजसत्तमः ।
शुल्कं प्रदीयतां ब्रह्मन् ततो वेत्स्यसि मे सुताम् ॥ २९

ऋचीकः—

किं प्रयच्छामि राजेन्द्र तुभ्यं शुल्कमिदं नृप ।
दुहितुर्ब्रूह्यसंसक्तो मा तेऽन्या भूद्विचारणा ॥ ३०

गाधिः—

चन्द्ररश्मिप्रकाशानां हयानां वातरंहसाम् ।
एकतश्श्यामकर्णानां सहस्रं दिश भार्गव* ॥ ३१

भीष्मः—

ततस्स भृगुशार्दूलश् च्यवनस्यात्मजः प्रभुः ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

वरुणं चाब्रवीद्देवम् आदित्यं पतिमम्भसाम् ॥ ३२

ऋचीकः—

[1]एकतश्श्यामकर्णानाम् अश्वानां वातरंहसाम् ।
सहस्रमिन्दुवर्णानां भिक्षे त्वां देवसत्तम ॥ ३३

भीष्मः—

तथेति वरुणो देव आदित्यो भृगुसत्तमम् ।
उवाच यत्र ते च्छन्दस् तत्रोत्थास्यन्ति वाजिनः ॥ ३४

ध्यातमात्रे त्वृचीकेन हयानां चन्द्रवर्चसाम् ।
गङ्गाजलादुदतिष्ठत् सहस्रं विपुलौजसाम् ॥ ३५

अदूरे कान्यकुब्जस्य गङ्गायास्तीर उत्तरे ।
अश्वतीर्थं तदद्यापि मानवाः परिचक्षते ॥ ३६

तत् तथा गाधये तात सहस्रं वाजिनां शुभम् ।
ऋचीकः प्रददौ प्रीतश् शुल्कार्थं वदतां वर ॥ ३७

ततस्स विस्मितो राजा गाधिश्शापभयेन च ।
ददौ तां समलङ्कृत्य कन्यां भृगुसुताय ह ॥ ३८

जग्राह पाणिं विधिना तस्या ब्रह्मर्षिसत्तमः ।
सा चैनं वरमासाद्य परं हर्षमवाप ह ॥ ३९

तुतोष विप्रर्षिस्तस्यास् सुवृत्तेन च भारत ।
छन्दयामास चैवैनां वरेण वरवर्णिनीम् ॥ ४०

1. क—इदमर्धं नास्ति

मात्रे तत् सर्वमाचख्यौ सा कन्या राजसत्तम ।
अथ तामब्रवीन्माता सुतां किञ्चिदवाङ्मुखीम् ॥ ४१

गाधिपत्नी—

ममापि पुत्रि भर्ता ते प्रसादं कर्तुमर्हति ।
अपत्यस्य प्रदानेन समर्थस्स महातपाः ॥ ४२

भीष्मः—

ततस्सा त्वरितं गत्वा तत् सर्वं प्रत्यवेदयत् ।
मातुश्चिकीर्षितं राजन् ऋचीकस्तामथाब्रवीत् ॥ ४३

ऋचीकः—

गुणवन्तमपत्यं वै त्वं च साऽथ जनिष्यथः ।
जनन्यास्तव कल्याणि मा भूद्वै प्रणयोऽन्यथा ॥ ४४

तथैव च गुणश्लाघी पुत्र उत्पत्स्यते शुभे ।
अस्मद्वंशकरश्श्रीमांस् तव भ्राता च वंशकृत् ॥ ४५

ऋतुस्नाता च साऽश्वत्थं त्वं च वृक्षमुदुम्बरम् ।
परिष्वजेथां कल्याणि तत इष्टमवाप्स्यथः ॥ ४६

चरुद्वयमिदं चैव मन्त्रयुक्तं शुचिस्मिते ।
त्वं च सा चोपयुञ्जाथां ततः पुत्राववाप्स्यथः ॥ ४७

भीष्मः—

ततस्सत्यवती हृष्टा मातरं प्रत्यभाषत ।
यदृचीकेन कथितं तच्चाचख्यौ चरुद्वयम् ॥ ४८

तामुवाच ततो माता सुतां सत्यवतीं तदा ॥ ४८॥

सत्यवतीमाता—

पुत्रि मूर्ध्नि प्रपन्नायाः कुरुष्व वचनं मम ॥ ४९

भर्त्रा य एष दत्तस्ते चरुर्मन्त्रपुरस्कृतः ।
एतं प्रयच्छ मह्यं त्वं मदीयं त्वं गृहाण च ॥ ५०

वृक्षयोरपि व्यत्यासं कुर्याश्च वरवर्णिनि ।
यदि प्रमाणं वचनं मम मातुरनिन्दिते ॥ ५१

व्यक्तं भगवतश्चात्र कृतमेव भविष्यति ॥ ५१॥

ततो मे त्वच्चरौ भावः पादपे च सुमध्यमे ।
कथं विशिष्टो भ्राता ते भवेदित्येव मा चिरम् ॥ ५२॥

भीष्मः—

तथा च कृतवत्यौ ते माता सत्यवती च सा ।
पृथग् गर्भमनुप्राप्ते [1]तत एव युधिष्ठिर ॥ ५३॥

दृष्ट्वा गर्भमनुप्राप्तां भार्यां स भगवानृषिः ।
उवाच तां सत्यवतीं दुर्मना भृगुसत्तमः ॥ ५४॥

ऋचीकः—

व्यत्यासेनोपयुक्तस्ते चरुर्व्यक्तं भविष्यति ।
पादपे चापि व्यत्यासस् सुव्यक्तं ते कृतश्शुभे ॥ ५५॥

---

1. अ—अयं पादोऽनन्तरश्च न स्तः

मया च विश्वं यद्ब्रह्म त्वच्चरौ विनिवेशितम् ।
क्षत्रवीर्यं च सकलं चरौ तस्या निवेशितम् ॥ ५६॥

त्रिलोकविख्यातगुणं त्वं विप्रं जनयेरिति ।
सा च क्षत्रं विशिष्टं वै तत एतत् कृतं मया ॥ ५७॥

व्यत्यासस्तु कृतो यस्मात् त्वया मात्रा तथैव च ।
तस्मात् सा ब्राह्मणं श्रेष्ठं माता ते जनयिष्यति ॥ ५८॥

क्षत्रियं तूग्रकर्माणं भद्रे त्वं जनयिष्यसि ।
न हि मे तत्कृतं साधु मातृस्नेहेन भामिनि ॥ ५९॥

भीष्मः—

सा श्रुत्वा शोकसन्तप्ता पपात वरवर्णिनी ।
भूमौ भगवती राजंश्छिन्नमूला यथा लता ॥ ६०॥

प्रतिलभ्य ततस्संज्ञां शिरसा प्रणिपत्य च ।
उवाच भार्या भर्तारं गाधेयी ब्राह्मणर्षभम् ॥ ६१॥

ऋचीकपत्नी—

प्रसादयन्त्यां भार्यायां मयि ब्रह्मविदां वर ।
प्रसादं कुरु विप्रर्षे न मे स्यात् क्षत्रियस्सुतः ॥ ६२॥

कामं ममोग्रकर्मा वै पौत्रो भवितुमर्हति ।
न मे स स्यात् सुतो ब्रह्मन्नेष मे दीयतां वरः ॥ ६३॥

भीष्मः—

एवमस्त्विति होवाच स्वां भार्यां सुमहातपाः ।

ततस्सा जनयामास जमदग्निं सुतं शुभम् ॥ ६४॥

विश्वामित्रं त्वजनयद्गाधेर्भार्या यशस्विनी ।
ऋषिप्रभावाद्राजेन्द्र ब्रह्मर्षिं ब्रह्मवादिनम् ॥ ६५॥

ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः ।
क्षत्रियस्सन्नपि तथा ब्रह्मवंशस्य कारकः ॥ ६६॥

तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्धनाः ।
तपस्विनो ब्रह्मविदो गोत्रकर्तार एव च ॥ ६७॥

मधुच्छन्दश्च भगवान् देवरातश्च वीर्यवान् ।
[1]कुक्षिरत्रिश्शकुन्तश्च बभ्रुः कालपथस्तथा ॥ ६८॥

याज्ञवल्क्यश्च विख्यातस् तथा स्थूणः परावतः ।
उलूकोऽ[2]थ मधूकश्च तथाऽक्षस्सैन्धवा[3]ननः ॥ ६९॥

पर्णजङ्घश्च भगवान् गावलश्च महानृषिः ।
ऋषिर्वज्रस्तथा सालस् सालङ्कायन एव च ॥ ७०॥

ललाटो नारदश्चैव तथा कूर्ममुखस्स्मृतः ।
ऊर्ध्वलिर्मुसलश्चैव रक्षोग्रीवस्तथैव च ॥ ७१॥

अह्निवानेकभृत्यश्च शिलायूपस्सितश्शुचिः ।

1. क—त्रिशङ्कुश्शङ्कुरत्रिश्च घ—निशङ्कुः—कुक्षिरिति शकुन्तिश्च बधस्तथा
2. ख—यमलूकश्च अ—धर्मलूकश्च
3. क-घ— नयः—

[1]चक्रतो मानमन्तऽयो वातऽयश्श्वेतवाहनः ॥ ७२॥
श्यामायनाऽथ गार्ग्यश्च जाबालिस्सुश्रुतस्तथा ।
कार्षीरथश्च संश्रुत्यो गुरवो वरदस्तथा ॥ ७३॥
महानृषिश्च कपिलस् तथर्षिस्तारकायणः ।
तथैव रोपगहनस् तथर्षिश्चार्जुनो [2]मयः ॥ ७४॥
मार्गमन्त्री हिरण्याक्षो जङ्घारिर्बभ्रुवाहनः ।
[3]भूतिर्विभूतिस्सूतिश्च सुरङ्गश्च तथैव च ॥ ७५॥
आराधिर्नामयश्चैव चण्डयोर्जुनयोस्तथा ।
उपामन्तुर्मङ्गशिखी शिवो निर्जतिरेव च ॥ ७६॥
गोरुण्ड[4]श्चातिमत्स्यश्च [5]शिथिहोताऽथ गार्दभिः ।
[6]मज्जयोनिरजापेक्षी नारदस्तु महानृषिः ॥ ७७॥
विश्वामित्रात्मजास्सर्वे ऋषयो ब्रह्मवादिनः ॥ ७८
स नैव क्षत्रियो राजन् विश्वामित्रो महातपाः ।

---

1. क—धामवन्तव्या वाततुः ख—चक्रलोमा तु वन्तव्यो यातक्य
घ—चक्रतो मावमन्तव्य बातत्यश्श्वेतवाहनः ।
2. ख—यमः
3. क—स्तुतिर्विभूतिस्सूतिश्च ख-सूतिर्विभूतिस्सूतिश्च सुरागश्च
घ—ख्यितिर्विभूतिस्सूतिश्च सुरांश्चैव
4. क-घ—श्चारुम घ-भेरुण्डश्चारुमद्रश्च
5. क—कथहो अथ ख-शिखधीबोध घ-शिक्थहो अथ
6. क—ऊर्जे ख-घ—उज्ज

ऋचीकेनाहितं ब्रह्म परमेतद्युधिष्ठिर ॥ ७९

एतत्ते सर्वमाख्यातं तत्त्वेन भरतर्षभ ।
विश्वामित्रस्य वै राजन् सोमसूर्याग्नितेजसः ॥ ८०

यत्र यत्र च सन्देहो भूयस्ते राजसत्तम ।
तत्र तत्र च मां ब्रूहि वक्तास्मि तव संशयान् ॥ ८१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये ८१ श्लोकाः ]

---

## ॥ पञ्चमोऽध्यायः ॥

---

भीष्मेण युधिष्ठिरं प्रति वीतहव्यस्य ब्राह्मण्यप्राप्तिप्रकारकथनम् ॥

---

युधिष्ठिरः—

विश्वामित्रो महाराज राजा ब्राह्मणतां गतः ।
कथितं भवता सर्वं विस्तरेण पितामह ॥ १

तच्च राजन् मया सर्वं श्रुतं बुद्धिमतां वर ।
आगमो हि परोऽस्माकं त्वत्तः कौरवनन्दन ॥ २

वीतहव्यस्तु राजर्षिर् विश्रुतो वै पितामह ।

ब्राह्मणत्वमनुप्राप्त इति राजन् महायशाः ॥ ३
स केन कर्मणा प्राप ब्राह्मण्यं राजसत्तमः ।
वरेण तपसा वाऽपि तन्मे ब्रूहि पितामह ॥ ४

भीष्मः—

शृणु राजन् यथा राजा वीतहव्यो महायशाः ।
क्षत्रियस्स पुनः प्राप ब्राह्मण्यं लोकसत्कृतम् ॥ ५
मनोर्महात्मनस्तात प्रजेशस्य प्रजापतेः ।
बभूव पुत्रो धर्मात्मा [1]यशसाऽतीव विश्रुतः ॥ ६
तस्यान्ववायजौ राजन् राजानौ धर्मदर्शिनौ ।
हैहयस्तालजङ्घश्च वत्सेषु नृपती पुरा ॥ ७
हैहयस्य तु पुत्राणां दशसु स्त्रीपु भारत ।
शतं बभूव प्रख्यातं वीराणामनिवर्तिनाम् ॥ ८
तुल्यरूपप्रभावानां विदुषां युद्धशालिनाम् ।
महारथानां वेदे च धनुर्वेदे च योगिनाम् ॥ ९
काशिष्वथ तदा राजा दिवोदासपितामहः ।
हर्यश्व इति विख्यातो राजराज इवापरः ॥ १०
स वीतहव्यस्य सुतैरागत्वा पार्थिवर्षभः ।
युद्धे विनिर्जितो राजन् गङ्गायमुनयोरनु ॥ ११

1 ख—शय्यातिरिति

तं च हत्वा नरवरं हैहयास्ते महारथाः ।
प्रतिजग्मुः पुरीं रम्यां वत्सानामकुतोभयाः ॥ १२

हर्यश्वस्य च दायादः काशिराज्येऽभिषेचितः ।
सुदेवो देवसङ्काशस् साक्षाद्धर्म इवापरः ॥ १३

स पालयन्नेव महीं धर्मात्मा काशिनन्दनः ।
स वीतहव्यैरागत्य युधि सर्वैर्विनिर्जितः ॥ १४

तमप्याजौ विनिर्जित्य प्रतियाता यथागतम् ॥ १४॥
सौदेविस्त्वथ काशीशो दिवोदासोऽभ्यषिच्यत ॥ १५

सौदेविस्त्वथ विज्ञाय वीर्यं तेषां महात्मनाम् ।
वाराणसीमुपादाय दिवोदासो विनिर्ममे ॥ १६

विप्रक्षत्रियसम्बाधां वैश्यशूद्रसमाकुलाम् ।
नैकद्रव्योच्चयवतीं समृद्धविपणापणाम् ॥ १७

गङ्गाया उत्तरे कूले वप्रान्ते राजसत्तम ।
गोमत्या दक्षिणे चैव रम्यां देवपुरीमिव ॥ १८

तत्र तं राजशार्दूलं निवसन्तं महाद्युतिम् ।
आगत्य हैहया भूयः प्रबाधन्ते पुनः पुनः ॥ १९

सन्निपात्य ददौ युद्धं तेषां राजा महाबलः ।
देवासुरसमं भीमं दिवोदासो महायशाः ॥ २०

स तु युद्ध्वा महाराजो दिनानां दशतीर्दश ।

हतवाहनभूयिष्ठो राजा दैन्यमुपागमत् ॥ २१

हतयोधस्स राजर्षिः क्षीणकोशश्च भारत ।
दिवोदासः पुरीं हित्वा पलायनपरोऽभवत् ॥ २२

स चाश्रममुपागम्य भरद्वाजस्य धीमतः ।
प्रपद्य चरणौ तस्य मूर्ध्ना च निपपात ह ॥ २३

उवाच भगवन्तं तं पुत्रमाद्यं बृहस्पतेः ॥ २३॥

दिवोदासः—

भगवन् वैतहव्यैर्मे युद्धे वंशः प्रणाशितः ।
अहमेकः परिद्यूनश् शरणं त्वामुपागतः ॥ २४॥

शिष्यस्नेहेन भगवंस् त्वं मां रक्षितुमर्हसि ।
निश्शेषो हि कृतो वंशो मम तैः पापकर्मभिः ॥ २५॥

भीष्मः—

तमुवाच महातेजा भरद्वाजः प्रतापवान् ।
पुरोधास्तस्य राजेन्द्रः दिवोदासस्य धीमतः ॥ २६॥

भरद्वाजः—

न भेतव्यं न भेतव्यं सौदेव व्येतु ते भयम् ॥ २७

अहमिष्टिं च ते राजन् करोमि सुतकारिकाम् ।
वैतहव्यसहस्राणि यया त्वं प्रहरिष्यसे ॥ २८

भीष्मः—

तत इष्टिं चकारर्षिस् तस्य वै पुत्रकारिकाम् ।
अथास्य तनयो जज्ञे दैवोदासिः प्रतर्दनः ॥ २९

स जातमात्रो ववृधे समास्सद्यस्त्रयोदश ।
वेदं चाध्यगमत् कृत्स्नं धनुर्वेदं च कृत्स्नशः ॥ ३०

योगेन तु समाविष्टो भरद्वाजेन धीमता ।
कृत्स्नं हि तेजो यल्लोके तदेतद्देहमाविशत् ॥ ३१

ततस्स कवची धन्वी बाणी दीप्त इवानलः ।
प्रययौ स धनुर्धुन्वन् विवर्षिषुरिवाम्बुदः ॥ ३२

तं दृष्ट्वा परमं हर्षं सौदेविरुपपद्यते ।
मेने च मनसा दग्धान् वैतहव्यान् स पार्थिवः ॥ ३३

ततो वै यौवराज्येन स्थापयित्वा प्रतर्दनम् ।
कृतकृत्यं तदाऽऽत्मानम् स राजा प्रत्यपद्यत ॥ ३४

ततश्च वैतहव्यानां वधाय स महीपतिः ।
पुत्रं प्रस्थापयामास प्रतर्दनमरिन्दमम् ॥ ३५

सरथस्स समुत्तीर्य गङ्गां गङ्गासमानधीः ।
प्रययौ वीतहव्यानां पुरीं परपुरञ्जयः ॥ ३६

वैतहव्यास्तु तं श्रुत्वा रथघोषं समास्थितम् ।
निर्ययुर्नगराच्छीघ्रं रथैस्तैर्नगरोपमैः ॥ ३७

निष्क्रम्य ते नरव्याघ्रा दंशिताश्चित्रयोधिनः ।
प्रतर्दनं समाजघ्नुश्च शरवर्षैरुदायुधाः ॥ ३८

अस्त्रैश्च विविधैर्वीराश् शस्त्रैश्च भरतर्षभ ।
प्रावर्षन् वैतहव्यास्ते शीघ्रं शैलमिवाम्बुदाः ॥ ३९

अस्त्रैरस्त्राणि संवार्य तेषां राजन् प्रतर्दनः ।
जघान तान् महातेजा वज्रवेगसमैश्शरैः ॥ ४०

हृतोत्तमाङ्गास्ते राजन् भल्लैश्शतसहस्रशः ।
पतिता रुधिरार्द्रास्तु निकृत्ता इव किंशुकाः ॥ ४१

हतेषु तेषु सर्वेषु वीतहव्यसुतेष्वथ ।
प्राद्रवन्नगरीं हित्वा भृगोराश्रममच्युत ॥ ४२

ययौ भृगुं स शरणं वीतहव्यो नराधिपः ।
अभयं च ददौ तस्मै वीतहव्याय भार्गवः ॥ ४३

आसनं शिष्यमध्ये च भृगुरन्यत् समादिशत् ॥ ४३॥

अथानुपदमेवाशु तत्रागच्छत् प्रतर्दनः ।
आश्रमं सोऽथ सम्प्राप्य दैवोदासिरभाषत ॥ ४४॥

प्रतर्दनः—

भो भो केऽत्राश्रमे सन्ति भृगोश्शिष्या महात्मनः ॥ ४५

भीष्मः—

तमभ्यनन्दद्भगवान् सत्कारेण स्वयं भृगुः ।
उवाच चैनं भगवान् किं कार्यमिति सत्कृतम् ॥ ४६

तमुवाच ततो राजा दैवोदासिः प्रतर्दनः ॥ ४६॥

प्रतर्दनः—

एषोऽत्र क्षत्रियो ब्रह्मन् वीतहव्यो विसृज्यताम् ।

अस्य पुत्रैर्महान् वंशः कृत्स्नोऽस्माकं प्रणाशितः ॥ ४७॥

उत्सादितश्च विषयः काशीनां राज्यसंहितः ॥ ४८

एतस्य बलदृप्तस्य हतं पुत्रशतं मया ।

अस्येदानीं वधाद्ब्रह्मन् भविष्याम्यनृणः पितुः ॥ ४९

भीष्मः—

तमुवाच कृपाविष्टो भृगुर्धर्मभृतां वरः ॥ ४९॥

भृगुः—

नेहास्ति क्षत्रियः कश्चित् सर्वे हीमे द्विजोत्तमाः ॥ ५०

भीष्मः—

एवमेतद्वचश्श्रुत्वा भृगोस्तथ्यं प्रतर्दनः ।

पादावुपस्पृश्य शनैः प्रहसन् सोऽब्रवीद्वचः ॥ ५१

प्रतर्दनः—

एवमप्यस्मि भगवन् कृतकृत्यो न संशयः ।

यदेष क्षत्रियो वीर्यात् स्वजातेस्त्याजितो मया ॥ ५२

ऋषेर्हि वचनं सत्यं सर्वे स्म ब्राह्मणा इति ।

अनुजानीहि मां ब्रह्मन् ध्यायस्व च शिवेन माम् ॥ ५३

त्याजितो हि मया जाते राजैष भृगुसत्तम ॥ ५३॥

भीष्मः—

भृगुणा सोऽभ्यनुज्ञातो ययौ राजा प्रतर्दनः ।
[1]यथागतं गतिं कान्तां दैवोदासिः प्रतापवान् ॥ ५४॥
भृगोर्वचनमात्रेण सोऽपि ब्राह्मणतां गतः ।
वीतहव्यो महाराज ब्रह्मवादित्वमेव च ॥ ५५॥
तस्य गृत्समदः पुत्रो वीतहव्य इवापरः ।
शक्रस्त्वमिति यो दैत्यैर् गृहीतः किल पूर्वजैः ॥ ५६॥
ऋग्वेदे वर्तते चाग्र्या श्रुतिरत्र विशां पते ।
यत्र गार्त्समदं ब्रह्मन् ब्राह्मणैस्समुदाहृतम् ॥ ५७॥
स ब्रह्मवादी विप्रर्षिश् श्रीमान् गृत्समदोऽभवत् ।
पुत्रो गृत्समदस्यापि विप्रस्सावैनसोऽभवत् ॥ ५८॥
सावैनसस्य पुत्रौ वै वितस्त्यस्तस्य चात्मजः ।
वितस्त्यस्य सुतस्तस्य शिवस्तस्यात्मजोऽभवत् ॥ ५९॥
[2]श्रवास्तस्य सुतश्चापि श्रवसश्चाभवत् तमः ।
तमसश्च प्रकाशोऽभूत् तनयो द्विजसत्तम ॥ ६०॥
प्रकाशस्य च वागिन्द्रो वागिन्द्राद्ब्रह्मवादिनः ।
बभूव प्रीतिमांस्तस्य पुत्रो वेदविदां वरः ॥ ६१॥
घृताच्यां तस्य पुत्रस्तु रुरुर्नामोदपद्यत ॥ ६२
प्रमद्वरायां तु रुरोः पुत्रस्समुदपद्यत ।

---

1. ख—इदमर्धद्वयं नास्ति 2. क-घ—श्रियस्तस्य सुतश्चापि

शुनको नाम विप्रर्षिर् यस्य पुत्रस्स शौनकः ॥ ६३

एवं ब्राह्मणतां प्राप्य वीतहव्यो महातपाः ।
भृगोः प्रसादाद्राजेन्द्र क्षत्रियः क्षत्रियर्षभ ॥ ६४

एष ते कथितो वंशो राजन् गार्त्समदो यथा ।
विस्तरेण कुरुश्रेष्ठ किमन्यदिह वर्तताम् ॥ ६५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये ६५ श्लोकाः ]

## ॥ षष्ठोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति सदृष्टान्तप्रदर्शनं दैवादपि पुरुषकारस्य प्राबल्यप्रतिपादनम् ॥

युधिष्ठिरः—

पितामह महाप्राज्ञ [1]विदितास्त्र महाबल ।
दैवे पुरुषकारे च किं स्याच्छ्रेष्ठतरं मतम् ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
वसिष्ठस्य च संवादं ब्रह्मणश्च युधिष्ठिर ॥ २

1. क-ख—अधीता

दैवमानुषयोः किंस्वित् कर्मणोश्श्रेष्ठमित्युत ।
पुरा वसिष्ठो भगवान् पितामहमुवाच ह ॥ ३

ततः पद्मोद्भवो देवो देवानां सम्भवो निधिः ।
उवाच सुशुभां वाणीं शुभैस्तां हेतुभिर्युताम् ॥ ४

ब्रह्मा—

बीजतो ह्यङ्कुरोत्पत्तिर् अङ्कुरात् पर्णसम्भवः ।
पर्णान्नालाः प्रसूयन्ते नालात् स्कन्धः प्रवर्तते ॥ ५

स्कन्धात् प्रवर्तते पुष्पं पुष्पान्निर्वर्तते फलम् ।
[1]फलान्निर्वर्त्यते बीजं [2]बीजं नाफलमुच्यते ॥ ६

नाबीजाज् जायते किञ्चिद् बीजेन न विना फलम् ।
बीजाद्बीजं भवत्येव नाबीजं विद्यते फलम् ॥ ७

यादृशं वपते बीजं क्षेत्रमासाद्य [3]पालकः ।
[4]सुकृते दुष्कृते वाऽपि तादृशं लभते फलम् ॥ ८

यथा बीजं विना क्षेत्रं वन्ध्यं भवति निष्फलम् ।
तथा पुरुषकारेण विना दैवं न सिध्यति ॥ ९

क्षेत्रं पुरुषकारस्तु दैवं बीजमुदाहृतम् [5]।

---

1. ख-घ—अर्धत्रयं नास्ति
2. क—बीजात् स्यात्संभवः पुनः
3. क-घ—वापकः
4. अ-क—अर्धचतुष्टयं नास्ति
5. घ—नाबीजाज्जायते किञ्चिद् बीजेन न विना फलम् ।
बीजाद्बीजं भवत्येव नाबीजं विद्यते फलम् ॥ [अधिकः पाठः]

क्षेत्रबीजसमायोगात् ततस्सस्यं समृद्ध्यते ॥ १०

कर्मणा फलनिर्वृत्तिं स्वयमश्नाति कारकः ।
प्रत्यक्षं दृश्यते लोके कृतस्याप्यकृतस्य वा ॥ ११

शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ।
कृतं सर्वत्र लभते नाकृतं भुज्यते क्वचित् ॥ १२

कृती सर्वत्र लभते प्रतिष्ठां भाग्यवीक्षिताम् ।
नाकृती लभतेऽभीष्टं क्षते क्षारावसेचनम् ॥ १३

तपसा रूपसौभाग्यं रत्नानि च धनानि च ।
प्राप्यते कर्मणा सर्वं न दैवादकृतात्मनाम् ॥ १४

दैवं स्वर्गश्च भोगश्च निष्ठा या च मनीषिता ।
सर्वं पुरुषकारेण कृतेनेहोपलभ्यते ॥ १५

ज्योतींषि त्रिदशा नागा यक्षाश्चन्द्रार्कमारुताः ।
सर्वे पुरुषकारेण मानुषा देवतां गताः ॥ १६

अर्थो वा मित्रवर्गो वा ऐश्वर्यं वा कुलान्वितम् ।
श्रीश्चापि दुर्लभा भोक्तुं तथैवाकृतकर्मभिः ॥ १७

शौचेन लभते विप्रः क्षत्रियो विक्रमेण हि ।
वैश्यः पुरुषकारेण शूद्रश्शुश्रूषया श्रियम् ॥ १८

नादातारं भजन्त्यर्था न क्लीबं नापि निष्क्रियम् ।

नाकर्मशीलं [1]नाशूरं तथा नैवातपस्विनम् ॥ १९

येन लोकास्त्रयस्सृष्टा दैत्यास्सर्वाश्च देवताः ।
स एष भगवान् विष्णुस् समुद्रे तप्यते तपः ॥ २०

स्वं च कर्मफलं न स्यात् सत्यमेव फलं [2]भवेत् ।
लोको दैवं समालम्ब्य उदासीनो भवेद्यदि ॥ २१

अकृत्वा मानुषं कर्म यो दैवमनुवर्तते ।
वृथा [3]श्राम्यति दुर्मेधाः पतिं क्लीबमिवाङ्गना ॥ २२

न तथा मानुषे लोके फलमस्ति शुभाशुभे ।
यथा त्रिदशलोके वै फलमल्पेन जायते ॥ २३

कृतं पुरुषकारं तु दैवमेवानुवर्तते ।
न दैवमकृते किञ्चित् कस्यचिद्दातुमर्हति ॥ २४

यथा स्थानान्यनित्यानि दृश्यन्ते दैवतेष्वपि ।
कथं कर्म विना देवं [4]स्थाप्यते स्थापयिष्यति ॥ २५

न दैवतानि लोकेऽस्मिन् व्यापारं यान्ति कस्यचित् ।
[5]भयं सञ्जनयन्त्युग्रम् आत्मानिर्भयशङ्कया ॥ २६

1. क-घ—नानर्थि
2. क—व्रजेत् ख—लभेत् घ—सत्यमेवाफलं व्रजेत्
3. क-घ—श्रा
4 क—कस्यते स्थापयिष्यति ख—स्थास्यते स्थापयिष्यते
घ—कस्य वै स्थापयिष्यति
5. क-ख-घ—एवं

ऋषीणां देवतानां च सदा भवति विग्रहः ।
कस्य वाचाऽप्यदैवं हि यतो दैवं प्रवर्तते ॥ २७

[1]कथं चास्य समुत्पत्तिर् यथा दैवं प्रवर्तते ।
यथा त्रिदशलोकेऽपि प्राप्यते वा बहुच्छलम् ॥ २८

आत्मैव ह्यात्मनो बन्धुर् आत्मैव रिपुरात्मनः ।
आत्मैव ह्यात्मनस्साक्षी कृतस्याप्यपकृतस्य च ॥ २९

कृतं च विकृतं किञ्चित् सिद्ध्यते गुरुवर्मणा ।
सुकृतं च कृतं कर्म अकृतार्थं विपद्यते ॥ ३०

देवानां शरणं पुण्यं सर्वं पुण्यैरवाप्यते ।
पुण्यहीनं नरं प्राप्य किं दैवं प्रकरिष्यति ॥ ३१

पुरा ययातिर्विभ्रष्टो व्योमतः पतितः क्षितौ ।
पुनरारोपितस्स्वर्गं दौहित्रैः पुण्यकर्मभिः ॥ ३२

पुरूरवा वै राजर्षिर् द्विजैरभिहितः पुरा ।
ऐल इत्यभिविख्यातस् स्वर्गं प्राप्तो महीपतिः ॥ ३३

अश्वमेधादिभिर्यज्ञैस् सत्कृतः कोसलाधिपः ।
महर्षिशापात् सौदासः पुरुषादत्वमागतः ॥ ३४

अश्वत्थामा च रामश्च ऋषिपुत्रौ धनुर्धरौ ।
नागच्छतस्स्वर्गलोकं वेददृष्टेन कर्मणा ॥ ३५

---

1. क—इदमर्धं नास्ति

वसुर्यज्ञशतैरिष्ट्वा द्वितीय इव वासवः ।
मिथ्याभिधानेनैकेन रसातलतलं गतः ॥ ३६

बलिर्वैरोचनिर्बद्धो धर्मपाशेन दैवतैः ।
विष्णोः पुरुषकारेण पातालशयनः कृतः ॥ ३७

शक्रस्याथ रथोपस्थे विष्ठितो जनमेजयः ।
द्विजस्त्रीणां वधं कृत्वा किं स दैवेन वार्यते ॥ ३८

अज्ञानाद्ब्राह्मणीं हत्वा स्पृष्टो बालवधेन सः ।
वैशम्पायनविप्रर्षिः किं दैवेन निवारितः ॥ ३९

गोप्रदानेन मिथ्या वै ब्राह्मणेभ्यो महामखे ।
नृगश्चैव महाराजः कृकलासत्वमागतः ॥ ४०

धुन्धुमारश्च राजर्षिस् सत्रेष्वेव जरां गतः ।
प्रतिरङ्गं परित्यज्य सुष्वाप स गिरिव्रजे ॥ ४१

पाण्डवानां हृतं राज्यं धार्तराष्ट्रैर्महाबलैः ।
पुनः प्रत्याहृतं चैव न दैवा[1]द्भुजसंश्रयात् ॥ ४२

तपोनियमसंयुक्ता मुनयस्संशितव्रताः ।
किं ते दैवबलाच्छापम् उत्सृजन्ते न कर्मणा ॥ ४३

पापमुत्सृजतां नृणां धर्मं प्राहु[2]स्सुदुर्लभम् ।
लोभमोहवशापन्नं न दैवं त्रायते नरम् ॥ ४४

---

1. क-ख – द्भुजसं 2. ख—न दुर्लभम्

[1]यथाऽग्निः पवनोद्धूतस् सुसूक्ष्मो भविता महान् ।
[2]तथा कर्म समावृत्तं दैवं साधु विशिष्यते ॥ ४५

यथा तैलक्षये दीपः प्रम्लानमुपगच्छति ।
तथा कर्मक्षये दैवं प्रम्लानमुपगच्छति ॥ ४६

विपुलमपि धनौघं वाहनं वा गृहं वा
पुरुष इह न शक्तः कर्महीनोपभोक्तुम् ।
सुविहितमपि चार्थं दैवतै रक्ष्यमाणम्
अवगुणमपि साधुं कर्मणा संश्रयन्ते ॥ ४७

भवति मनुजलोकाद्दैवलोको विशिष्टो
बहुतनयसमृद्ध्या मानुषाणां गृहाणि ।
त्रिभुवनभवनाभं दृश्यते वापराणाम्
[3]अनुफलति च कर्म त्वेव लोके न दैवम् ॥ ४८

व्यपनयति विमार्गं नास्ति दैवप्रभुत्वं
गुरुमिव कृतमग्र्यं कर्म संयाति दैवम् ।
अनुवहनमदीनं कर्मकारेण दैवं
[4]नयति पुरुषकारस्सञ्चितस्तत्र तत्र ॥ ४९

1. अ—इदमर्धं नास्ति
2. अ—इदमाद्यर्धत्रयं नास्ति
3. क—अनुफलमिति कर्मत्वेव　ख—अनुभवति हि
4. अ-ख—न भवति पुरुषः क

भीष्मः—

एतदाख्यानमाख्यातं सदृशं नात्र संशयः ।
फलं पुरुषकारस्य यः पश्यति हि तत्त्वतः ॥ ५०

अभ्युत्थानेन दैवस्य समारभ्येन केनचित् ।
विधिना कर्मणा चैव स्वर्गमार्गमवाप्नुयात् ॥ ५१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये ५१ श्लोकाः ]

## ॥ सप्तमोऽध्यायः ॥

भीष्मेण युधिष्ठिरंप्रति शुभाशुभकर्मफलप्रतिपादनम् ॥

युधिष्ठिरः—

कर्मणां मे समस्तानां फलिनां भरतर्षभ ।
फलानि भरतश्रेष्ठ प्रब्रूहि परिपृच्छतः ॥ १

भीष्मः—

रहस्यं यदृषीणां तु तच्छृणुष्व युधिष्ठिर ।
या गतिः प्राप्यते येन प्रेत्यभावे चिरेप्सिता ॥ २

येन येन शरीरेण यद्यत् कर्म करोत्ययम् ।
तेन तेन शरीरेण तत्फलं प्रतिपद्यते ॥ ३

यस्यां यस्यामवस्थायां यत् करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत्फलं प्रतिपद्यते ॥ ४

न पश्यति कृतं कर्म चित्तपञ्चेन्द्रियैरिह ।
तान्यस्य साक्षिणो नित्यं षष्ठ आत्मा शुभाशुभे ॥ ५

चक्षुर्दद्यान्मनो दद्याद् वाचं दद्यात् सुभाषिताम् ।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः ॥ ६

यो दद्यादपरिक्लिष्टम् अन्नमध्वनि वर्तते ।
श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं महत् ॥ ७

स्थण्डिले शयमानानां गृहाणि शयनानि च ।
[1]चीरवल्कलसंवीते वासांस्याभरणानि च ॥ ८

वाहनासनयानानि योगात्मनि तपोधने ।
अग्नीनुपशयानस्य राजन् पौरुषमुच्यते ॥ ९

रसानां प्रतिसंहारात् पशून् पुत्रांश्च विन्दति ।
अवाक्शिरास्तु यो लम्बेद् उदवासं च यो वसेत् ॥ १०

मण्डूकशायी च नरो लभते चेप्सितां गतिम् ॥ १०॥

पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयम् ।
दद्यादतिथिपूजार्थं स यज्ञः पञ्चदक्षिणः ॥ ११॥

वीरासनं वीरशय्यां वीरस्थानमुपासतः ।

1. अ—इदमर्धं नास्ति

अक्षयास्तस्य वै लोकास् सर्वकामोपगास्तथा ॥ १२॥
धनं प्राप्नोति दानेन मौनेनाज्ञां विशां पते ।
उपभोगांश्च तपसा जीवितं ब्रह्मचर्यया ॥ १३॥
रूपमैश्वर्यमारोग्यम् अहिंसाफलमश्नुते ।
फलमूलाशिनां राज्यं स्वर्गः पर्णाशिनस्तथा ॥ १४॥
प्रायोपवेशनाद्राज्यं सर्वत्र सुखमुच्यते ।
सत्येन लभते स्वर्गं दीक्षया कुलमुच्यते ॥ १५॥
गवाढ्यश्शाकदीक्षायास् स्वर्गकामी तृणाशनात् ॥ १६
स्थितस्त्रिषवणस्नाने वायुं पीत्वा शतक्रतोः ।
सलिलाशो भवेद्यश्च स मुनिस्सत्कृतो द्विजः ॥ १७
मरुत्साधयतो राज्यं नाकपृष्ठमनाशिने ॥ १७॥
उपवासं च दीक्षायाम् अभिषेकं च पार्थिव ।
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते ॥ १८॥
अधीत्य सर्ववेदान् वै सद्यो दुःखात् प्रमुच्यते ।
तत्पाठधारणात् स्वर्गम् अर्थज्ञानात् परां गतिम् ॥ १९॥
वितृष्णानां वेदजपात् स्वर्गमोक्षफलं स्मृतम् ॥ २०
या दुस्त्यजा दुर्मतिभिर् या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस् तां तृष्णां त्यजतस्सुखम् ॥ २१
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।

एवमेव कृतं कर्म कर्तारमनुगच्छति ॥ २२

अचोद्यमानानि पुनः पुष्पाणि च फलानि च ।
स्वकालमनुवर्तन्ते तथा कर्म कृतं पुरा ॥ २३

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुश्श्रोत्रे च जीर्येते तृष्णैका न तु जीर्यते ॥ २४

येन प्रीणन्ति पितरस् तेन प्रीतः प्रजापतिः ।
माता तु येन प्रीणाति अतिथिस्तेन पूजितः ॥ २५
येन प्रीणात्युपाध्यायस् तेन स्याद्ब्रह्म पूजितम् ॥ २५॥

सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ २६॥

वैशम्पायनः—

भीष्मस्यैतद्वचश्श्रुत्वा विस्मिताः कुरुपुङ्गवाः ।
आसन् प्रहृष्टमनसः प्रीतिमन्तोऽभवंस्तदा ॥ २७॥

भीष्मः—

यन्मन्त्रे भवति वृथा प्रयुज्यमाने
यत् सोमे भवति वृथाप्रसूयमाने ।
यच्चाग्नौ भवति वृथा च हूयमाने
तत् सर्वं भवति वृथाऽभिधीयतेऽत्र ॥ २८॥

इत्येतदृषिणा प्रोक्तम् उक्तवानस्मि भारत ।
शुभाशुभफलप्राप्तौ [1]किमतश्श्रोतुमिच्छसि ॥ २९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये २९॥ श्लोकाः]

## ॥ अष्टमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति शुकवासवसंवादानुवादेनानृशंस्यप्रशंसनम् ॥

युधिष्ठिरः—

आनृशंस्यस्य धर्मज्ञ गुणान् भक्तजनस्य च ।
श्रोतुमिच्छामि कार्त्स्न्येन तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

विषये काशिराजस्य ग्रामा[2]न्निष्क्रम्य लुब्धकः ।
[3]सविषं काण्डमादाय मृगयामास वै मृगम् ॥ २

तत्र चामिषलुब्धेन लुब्धकेन महावने ।
अविदूरे मृगं दृष्ट्वा बाणः प्रतिसमाहितः ॥ ३

तेन दुर्वारितास्त्रेण निमित्तविफलेषुणा ।

1. क-ख—क्रमतः
2. क-ख—न्विक्रम्य
3. क-ख—विषमं

दुरात्मना तरुर्विद्धो मृगं तत्र जिघांसता ॥ ४
स तीक्ष्णविषदिग्धेन शरेणातिबलात्कृतः ।
उत्सृज्य फलपत्राणि पादपश्शोषमागतः ॥ ५
तस्मिन् वृक्षे तथाभूते कोटरेषु चिरोषितः ।
शुको न जहते वासं तस्य भक्त्या वनस्पतेः ॥ ६
निष्प्रचारो निराहारो ग्लानश्शिथिलभाषणः ।
कृतज्ञस्स हि धर्मात्मा वृक्षेणात्मा[1]प्यशुष्यत ॥ ७
तमुदारं महासत्त्वम् अतिमानुषचेष्टितम् ।
[2]समदुःखं शुकं दृष्ट्वा विस्मितः पाकशासनः ॥ ८
ततश्चिन्तामुपगतश् शक्रः कथमयं द्विजः ।
तिर्यग्योन्यामसम्भाव्यम् आनृशंस्यं समास्थितः ॥ ९
अथवा नात्र चित्रं हीत्यभवद्वासवस्य तु ।
प्राणिनामिह सर्वेषां सर्वं सर्वत्र पश्यति ॥ १०
ततो ब्राह्मणवेषेण मानुषं रूपमास्थितः ।
अवतीर्य महीं शक्रस् तं पक्षिणमुवाच ह ॥ ११

इन्द्रः—

शुक भोः पक्षिणां श्रेष्ठ दाक्षेयी सुप्रजास्त्वया ।
पृच्छे त्वां [3]शुकमेवं तु कस्मान्न त्यजसे द्रुमम् ॥ १२

1. क—न तुष्यति ख—प्यतुष्यत
2. क-ख—सम्मुखं तं शुकं ज्ञात्वा 3. ख—शुष्कमेवं तु

भीष्मः—

अथ पृष्टश्शुकः प्राह मूर्ध्ना तमभिवाद्य च ॥ १२॥

शुकः—

स्वागतं देवराजाय विज्ञातं तपसा मया ॥ १३

भीष्मः—

ततो दशशताक्षेण साधु साध्विति भाषितम् ।
अहो विज्ञानमस्येति तपसा पूजितस्ततः ॥ १४

तमेव शुभकर्माणं शुकं परमधार्मिकम् ।
जानन्नपि च तत् पापं पृच्छते पाकशासनः ॥ १५

इन्द्रः—

निष्पत्रमफलं शुष्कम् अशरण्यं पतत्रिणाम् ।
किमर्थं सेवसे वृक्षं यदा महदिदं वनम् ॥ १६

अन्येऽपि बहवो वृक्षाः पत्रसञ्छन्नकोटराः ।
शुभाः पर्याप्तसञ्चारा विद्यन्तेऽस्मिन् महावने ॥ १७

गतायुषमसामर्थ्यं क्षीणसारं हतश्रियम् ।
विमृश्य प्रज्ञया धीर जहीमं ह्यस्थिरं द्रुमम् ॥ १८

भीष्मः—

तदुपश्रुत्य धर्मात्मा शुकश्शक्रेण भाषितम् ।
सुदीर्घमतिनिश्वस्य दीनो वाक्यमभाषत ॥ १९

शुकः—

अनतिक्रमणीयानि दैवतानि शचीपते ।
यत्राभवंस्तत्र भवांस् तन्निबोध सुराधिप ॥ २०

अस्मिन् द्रुमवरे जातस् साधुभिश्च गुणैर्युते ।
बालभावे च सङ्गुप्तश् शत्रुभिश्चाप्यधर्षितः ॥ २१

किमनुक्रोशवैफल्यम् उत्पादयसि मेऽनघ ।
अनुरक्तस्य भक्तस्य संस्पृशेन्न च पावकः ॥ २२

आनृशंस्येऽभिरक्तस्य भक्तस्यानुगतस्य च ।
अनुक्रोशो हि साधूनां सदा प्रीतिं प्रयच्छति ॥ २३

त्वमेव दैवतैस्सर्वैः पृच्छ्यसे धर्म[1]संश्रयान् ।
अतस्त्वं देवदेवानाम् आधिपत्ये प्रतिष्ठितः ॥ २४

त्वमर्हसि सहस्राक्ष मां योजयतुं भक्तितः ।
तद्भक्तितस्त्याजयितुं न मामर्हसि सत्तम ॥ २५

समस्थमुपजीवन् वै विषमस्थं कथं त्यजेत् ॥ २५॥

भीष्मः—

तस्य वाक्येन सौम्येन [2]भाषितः पाकशासनः ।
शुकं प्रोवाच धर्मज्ञम् आनृशंस्येन तोषितः ॥ २६॥

वरं वृणीष्वेति तदा स च वव्रे वरं शुकः ।

1. ख—संश्रयात्    2. ख—हर्षितः

आनृशंस्यपरो नित्यम् अस्य वृक्षस्य सम्भवम् ॥ २७॥

विदित्वा च शुभां शक्रस् तां शुके शीलसम्पदम् ।
प्रीतः क्षिप्रमथो वृक्षम् अमृतेनावसिक्तवान् ॥ २८॥

ततोऽस्य फलपत्राणि शाखाश्चापि मनोहराः ।
शुकस्य दृढभक्तित्वाच् छ्रीमत्त्वं चाप स द्रुमः ॥ २९॥

शुकश्च कर्मणा तेन आनृशंस्यकृतेन ह ।
आयुषोऽन्ते महाराज प्राप शक्रसलोकताम् ॥ ३०॥

एवमेव मनुष्येन्द्र भक्तिमन्तं समाश्रितः ।
सर्वार्थसिद्धिं लभते शुकं प्राप्य यथा द्रुमः ॥ ३१॥

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[ अस्मिन्नध्याये ३१॥ श्लोकाः ]

## ॥ नवमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणप्रशंसनम् ॥

युधिष्ठिरः—

यथैव ते नमस्कार्याः प्रोक्ताश्शक्रेण मानद ।
तथैव मयि चाचक्ष्व येषां स्पृहयसे नृप ॥ १

उत्तमापद्गतस्यापि यत्र ते वर्तते मनः ।
मनुष्यलोके सर्वत्र यदमुत्रेह चाच्युतम ॥ २

भीष्मः—

स्पृहयामि द्विजातीनां येषां ब्रह्म परं धनम ।
येषां सम्प्रत्ययस्स्वर्गस् तपस्स्वाध्यायसाधनम् ॥ ३

येषां वृद्धाश्च बालाश्च पितृपैतामहीं धुरम् ।
उद्वहन्ति न सीदन्ति तेषां वै स्पृहयाम्यहम् ॥ ४

[1]विद्यास्वभिविनीतानां दान्तानां मृदुभाषिणाम् ।
श्रुतवृत्तोपपन्नानां पदाक्षरविदां सताम ॥ ५

संसत्सु वदतां तान हंसानामिव सङ्घशः ॥ ५॥

[2]मङ्गल्यरूपरुचिरा व्योम्नि जीमूतनिस्स्वनाः ।
[3]सम्युगुच्चरिता वाचश् श्रूयन्ते ह्यतिपावनाः ॥ ६॥

1 अ—इदमर्धं नास्ति  2. ख—इदमर्धं नास्ति
3 ख ज्ञानविज्ञानयुक्तानां तेषां च स्पृहयाम्यहम् । [ अधिकः पाठः ]

शुश्रूषमाणे नृपतौ प्रेत्य चेह सुखावहाः ॥ ७

येषां च तेषां दातारस्[1] सदा सदसि सम्मताः ।
विज्ञानगुणसम्पन्नास् तेषां च स्पृहयाम्यहम् ॥ ८

[2]सुसंस्कृतानि प्रयतश् शुचीनि गुणवन्ति च ।
दद्यादन्नानि तृप्त्यर्थं ब्राह्मणेभ्यो युधिष्ठिर ॥ ९

ये चापि येषां दातारस् तेषां च स्पृहयाम्यहम् ॥ ९॥

शक्यं यैश्चाहवे योद्धुं न दातुमनसूयितुम् ।
शूरा वीराश्च शतशस् सन्ति लोके युधिष्ठिर ॥ १०॥

तेषां संख्यायमानानां दानशूरो विशिष्यते ॥ ११

भद्रं तु जन्म सम्प्राप्य भूयो ब्राह्मणको भवेत् ।
बन्धुमध्ये कुले जातस् सुदुरापमवाप्नुयात् ॥ १२

न मे त्वत्तः प्रियतमो [3]लोकेऽस्मिन् पाण्डुनन्दन ।
त्वत्तश्च मे प्रियतरा ब्राह्मणा एव भारत ॥ १३

यथा च मे प्रियतरा विप्रास्त्वत्तः कुरूद्वह ।
तेन सत्येन गच्छेयं लोकान् यत्र च शन्तनुः ॥ १४

न मे पिता प्रियतरो ब्राह्मणेभ्यस्तथा भवान् ।
न मे पितुः पिता वाऽपि ये चान्येऽपि सुहृज्जनाः ॥ १५

---

1. घ - अयं पादोऽनन्तरश्च न स्तः 2. घ - अर्धमेतयं नास्ति
3. अ-क-घ—नव पादा न सन्ति

न च मे वृजिनं किञ्चिद् विद्यते ब्राह्मणेष्विह ।
अणु वा यदि वा स्थूलं विदितं साधुकर्मभिः ॥ १६

कर्मणा मनसा वाऽपि वाचा वाऽपि परन्तप ।
यन्मे कृतं ब्राह्मणेषु तेनाद्य भवितास्म्यहम् ॥ १७

ब्रह्मण्य इति मामाहुस् तया वाचाऽस्मि पावितः ।
एतदेव पवित्रेभ्यस् सर्वेभ्यः परमं स्मृतम ॥ १८

पश्यामि लोकानतुलाञ् शुचीन् ब्राह्मणतोषणान् ।
तत्र तत्र तु गन्तव्यम अह्नाय च चिराय च ॥ १९

यथा पत्याश्रयो धर्मस् स्त्रीणां लोके युधिष्ठिर ।
[1]पतिरेव गतिर्नार्याः क्षत्रियस्य तथा द्विजः ॥ २०

क्षत्रियश्शतवर्षीयो दशवर्षी च ब्राह्मणः ।
पितापुत्रौ च विज्ञेयौ तस्य हि ब्राह्मणः पिता ॥ २१

नारी तु पत्यभावे वै देवरं कुरुते पतिम् ।
पृथिवी ब्राह्मणाभावात् क्षत्रियं कुरुते पतिम् ॥ २२

[2]ब्राह्मणानुज्ञया प्राप्तं राज्यं च सपुरोहितैः ।
तद्रक्षणेन स्वर्गोऽस्य तत्कोपान्नरकोऽक्षयः ॥ २३

[3]पुत्रवच्चैव ते रक्ष्या उपास्या गुरुवच्च नः ।

---

1. क-ख-ग--सदैव हि

2. अ—इदमर्धद्वयं नास्ति

3. अ—नास्तीदमर्धम्

अग्निवच्चोपचार्या वै ब्राह्मणाः कुरुसत्तम ॥ २४

[1]ऋजून् सतस्सत्यशीलान् सर्वभूतहिते रतान् ।
आशीविषानिव क्रुद्धान् द्विजानुपचरेत् सदा ॥ २५

तेजसस्तपसश्चैव नित्यं बिभ्येद्युधिष्ठिर ।
दूरतो मातृवत् पूज्याः विप्रदारास्सुरक्षया ॥ २६

हन्युः क्रुद्धा महाराज ब्राह्मणाश्च तपस्विनः ॥ २६॥
अकोपनापराधेन भूयो नरकमश्नुते ॥ २७

ब्राह्मणेषु स्थितं ब्रह्म क्षत्रियः परिपालयेत् ।
पितेव पुत्रान् रक्षेत ब्राह्मणान् ब्रह्मतेजसः ॥ २८

गृहं चैषामवेक्षेथाः कच्चिदस्तीह जीवितम् ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि नवमोऽध्यायः ॥ ९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि नवमोऽध्यायः ॥ ९ ॥
[ अस्मिन्नध्याये २८॥ श्लोकाः ]

---

1. क—अर्धत्रयं नास्ति  ख—अर्धद्वयं नास्ति

## ॥ दशमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति क्रमेण क्रोधस्यातिथेश्च निन्दाप्रशंसनपरवेदचतुष्टयसंवादानुवादः ॥ १ ॥ भीष्मेण युधिष्ठिरं प्रति ब्राह्मणानां पतिव्रतानां च महिमप्रतिपादकेन्द्राम्यर्यादिसंवादानुवादः ॥ २ ॥

---

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
चतुर्णामपि वेदानां संवादं पुत्र तच्छृणु ॥ १

ऋग्वेदः—

गृहानाश्रयमाणस्य अग्निहोत्रं च जुह्वतः ।
सर्वं सुकृतमादत्ते यस्सायं [1]नुद्यतेऽतिथिः ॥ २

यजुर्वेदः—

न स्कन्दते न व्यथते नास्योर्ध्वं सर्पते रजः ।
वरिष्ठमग्निहोत्राच्च ब्राह्मणस्य मुखे हुतम् ॥ ३

सामवेदः—

न चेद्धन्ति पितरं मातरं वा
न ब्राह्मणं नोपवासं करोति ।
यत किञ्चिदन्यद्वृजिनं करोति
प्रीतोऽतिथिस्तदुपहन्ति पापम ॥ ४

1. ख—नार्च्य　　घ—नाद्यते

अथर्ववेदः—

यत् क्रोधनो यजते यद्दाति
यद्वा तपस्तप्यति यज्जुहोति ।
वैवस्वतो हरते सर्वमस्य
मोघं चेष्टं भवति क्रोधनस्य* ॥ ५

भीष्मः—

भूयस्त्वं शृणु राजेन्द्र धर्मान् धर्मभृतां वर ॥ ५॥
अत्राभ्युदाहरन्तीमम् इतिहासं पुरातनम् ।
इन्द्राग्न्योस्सूर्यशच्योश्च तन्मे निगदतश्शृणु ॥ ६॥

इन्द्रः—

राज्ये विप्रान् प्रपश्यामि कामक्रोधविवर्जितान् ।
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ॥ ७॥

अग्निः—

[1]यथाऽहं तत्र नाश्नामि यत्र नाश्नन्ति वै द्विजाः ।
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ॥ ८॥

सूर्यः—

[2]यथा गोब्राह्मणस्यार्थे सञ्चरामि सदा ज्वलन् ।
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ॥ ९॥

---

* सर्वेषु कोशेषु अर्धवाध्यायसमाप्तिर्दृश्यते

1. अ—अर्धद्वयं नास्ति

2. क-ख—अर्धचतुष्टयं नास्ति

शची—

कर्मणा मनसा वाचा नावमन्ये पुरन्दरम् ।
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ॥ १०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि दशमोऽध्यायः ॥ १० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि दशमोऽध्यायः ॥ १० ॥
[ अस्मिन्नध्याये १०॥ श्लोकाः ]

---

## ॥ एकादशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति भगवन्महिमप्रतिपादकव्यासवासुदेवसंवादानुवादः ॥ १ ॥ भक्तिश्रद्धादीनां मुक्तिसाधनताप्रतिपादकव्यासवाक्यानुवादः ॥ २ ॥ श्रीकृष्णमहिमप्रतिपादकव्यासमद्रराजसंवादानुवादः ॥ ३ ॥

---

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
मद्रराजस्य संवादं व्यासस्य च महात्मनः ॥ १
वैताने कर्मणि तते कुन्तीपुत्र यथा पुरा ।
उक्तो भगवता मद्रे तथा तत्राशृणोद्भवान् ॥ २

मद्रराजः—

कानि तीर्थानि भगवन् फलार्थाश्चेह के श्रमाः ।

क इज्यते कश्च यज्ञः को यूपः क्रमते च कः ॥ ३

कश्चाध्वरे शस्यते गीतिशब्दः
कश्चाध्वरे गीयते वल्गुभाषैः ।
को ब्रह्मशब्दस्स्तुतिभिस्स्तूयते च
कस्येह हविरध्वर्यवः कल्पयन्ति ॥ ४

वर्णाश्रमः किम्फलः कश्च सोमः
कश्चोङ्कारः कश्च वेदार्थमार्गः ।
पृष्टस्तन्मे ब्रूहि सर्वं महर्षे
लोकज्येष्ठं कस्य विज्ञानमाहुः ॥ ५

द्वैपायनः—

लोकज्येष्ठं यस्य विज्ञानमाहुर्
योनिज्येष्ठं यस्य वदन्ति जन्म ।
पूतात्मानो ब्राह्मणा वेदमुख्या
अस्मिन् प्रश्नो दीयतां केशवाय ॥ ६

ब्राह्मणाः—

बालो जात्या क्षत्रधर्मार्थशीलो
जातो देवक्यां शूरपुत्रेण वीरः ।
वेत्तुं वेदानर्हते क्षत्रियो वै
दाशार्हाणामुत्तमः पुष्कराक्षः ॥ ७

श्रीभगवान्—

पारशार्य ब्रूहि यद्ब्राह्मणेभ्यः
प्रीतात्मा वै ब्रह्मकल्पस्सुमेधाः ।
पृष्टो यज्ञार्थः पाण्डवस्याऽतितेजा
एतच्छ्रेयस्तस्य लोकस्य चैव ॥ ८

व्यासः—

उक्तं वाक्यं यद्भवान् मामवोचत्
प्रश्नं चित्रं नाहमत्रोत्सहेऽद्य ।
छेत्तुं स्पष्टं तिष्ठति त्वद्विधे वै
लोकज्येष्ठे विश्वरूपे सुनाभे ॥ ९

श्रीभगवान्—

तत्त्वं वाक्यं ब्रूहि तस्मिन् महर्षे
यस्मिन् कृष्णः प्रोच्यते वै यथावत् ।
प्रीतस्तेऽहं ज्ञानशक्त्या महात्मन्
निर्देशे वै कर्मणां ब्रूहि सिद्धिम् ॥ १०

वैशम्पायनः—

उक्तवाक्ये सत्तमे यादवानां
कृष्णो व्यासः प्राञ्जलिर्वासुदेवम् ।
विप्रैस्साधं पूजयन् देवदेवं
कृष्णं विष्णुं वासुदेवं बभाषे ॥ ११

व्यासः—

आनन्त्यं ते विश्वकर्मंस्तवैवं
रूपं पुराणं शाश्वतं च ध्रुवं च ।
कस्ते बुद्ध्येद्वेदवादेषु चैत-
ल्लोके ह्यस्मिन् शासकस्त्वं पितेव* ॥ १२

भीष्मः—

द्वारकायां यथा प्राह पुराऽयं मुनिसत्तमः ।
वेदविप्रमयं तत्त्वं वासुदेवस्य तच्छृणु ॥ १३

यूपं विष्णुं वासुदेवं विजानन्
सर्वान् विप्रान् बोधते तत्त्वदर्शी ।
विष्णुं क्रान्तं वासुदेवं विजानन्
विप्रो विप्रत्वं गच्छते तत्त्वदर्शी ॥ १४

विष्णुर्यज्ञस्त्विज्यते चापि विष्णुः
कृष्णो विष्णुर्यश्च कृष्णः प्रभुश्च ।
कृष्णो वेदाङ्गं वेदवादाश्च कृष्ण
एवं जानन् ब्राह्मणो ब्रह्म एति ॥ १५

स्थानं सर्वं वैष्णवं यज्ञमार्गे
चातुर्होत्रं वैष्णवं तत्र कृष्णः ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

सर्वैर्भावैरिज्यते सर्वकामैः
पुण्याँल्लोकान् ब्राह्मणाः प्राप्नुवन्ति ॥ १६

सोमं सद्भावाद्ये च जातं पिबन्ति
दीप्तं कर्म ये विदानाश्चरन्ति ।
एकान्तमिष्टं चिन्तयन्तो दिविस्थास्
ते पन्थानं प्राप्नुवन्ति [1]व्रतज्ञाः ॥ १७

ओमित्येतद्ध्यायमानो न गच्छेद्
दुर्गं पन्थानं पापकर्मापि विप्रः ।
सर्वे कृष्णं वासुदेवं हि विप्राः
कृत्वा ध्यानं दुर्गतिं न प्रयान्ति ॥ १८

आज्यं यज्ञस्स्रुक्स्रुवौ यज्ञदाता
[2]इध्मा वर्तिर्यज्ञशाला हवींषि ।
इध्मं पुरोडाशं सर्वदा होतृकर्ता
कृष्णं विष्णुं संविजानंस्तमेति ॥ १९

योगे योगे कर्मणां चाभिहारे
युक्ते वैताने कर्मणि ब्राह्मणस्य ।

---

1. क-ग—प्रतिज्ञाम्  ख—कृतज्ञाः
2. ख—इच्छा पत्नी पत्नि

पुष्ट्यर्थेषु प्राप्नुयात् सर्वसिद्धिं
शान्त्यर्थेषु प्राप्नुयात् सर्वशान्तिम्* ॥ २०

द्वैपायनः—

श्रद्धां त्यागं निर्वृतिं चापि पूजां
सत्यं धर्मं यः कृतं चाभ्युपैति ।
काम[1]द्वेषौ त्यज्य सर्वेषु तुल्यश्च
श्रद्धापूतस्सर्वयज्ञेषु योग्यः ॥ २१

यस्मिन् यज्ञे सर्वभूताः प्रहृष्टास्
सर्वे चारम्भाश्शास्त्रदृष्टाः प्रवृत्ताः ।
धर्म्यैरर्थैर्ये यजन्ते ध्रुवं ते
पूतात्मानो धर्ममेकं भजन्ते ॥ २२

एकाक्षरं त्र्यक्षरमेकमेव
सदा यजन्ते नियताः प्रतीताः ।
दृष्ट्वा मनागर्चयित्वा स्म विप्रास्
सतां मार्गं तं ध्रुवं सम्भजन्ते ॥ २३

[2]पापात्मानः क्रोधरागाभिभूताः
कृष्णे भक्ता नाम सङ्कीर्तयन्तः ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. क-ख—क्रोधौ
2. अ—अयं श्लोको नास्ति

पूतात्मानो यज्ञशीलास्सुमेधा
यज्ञस्यान्ते कीर्तिलोकान् भजन्ते ॥ २४

श्रीभगवान्—

एको वेदो ब्राह्मणानां बभूव
चतुष्पादस्त्रिगुणो ब्रह्मशीर्षः ।
पादं पादं ब्राह्मणा वेदमाहुस्
त्रेताकाले तं च तं विद्धि शीर्षम् ॥ २५

द्वैपायनः—

सर्वे वेदास्सर्ववेद्यास्सशास्त्रास्
सर्वे यज्ञास्सर्व इज्याश्च कृष्णः ।
विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये
तेषां राजन् सर्वयज्ञास्समाप्ताः ॥ २६

ज्ञेयो योगी ब्राह्मणैर्वेदतत्त्वैर्
आरण्यकैस्सैष कृष्णः प्रभुत्वात् ।
सर्वान् यज्ञान् ब्राह्मणान् ब्रह्म चैव
व्याप्यातिष्ठद्देवदेवस्त्रिलोके ॥ २७

स एष देवश्शक्रमीशं [1]यजानं
प्रीत्या प्राह क्रतुयष्टारमग्र्यम् ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. ख—विरिञ्चं

न मे शक्तो वेद वेदार्थकत्वाद्
भक्तो भक्त्या शुद्धभावः प्रधानः ॥ २८

मा जानन्ते ब्रह्मशीर्षं वरिष्ठं
विश्वे विश्वं ब्रह्मयोनिं ह्ययोनिम् ।
सर्वत्राहं शाश्वतश्शाश्वतेशः
कृत्स्नो वेदो निर्गुणोऽनन्ततेजाः ॥ २९

सर्वे देवा वासुदेवं यजन्ते
ततो बुद्ध्या मार्गमाणास्तनूनाम् ।
सर्वान् कामान प्राप्नुवन्ते विशालांस्
त्रैलोक्येऽस्मिन् कृष्णनामाभिधानात् ॥ ३०

कृष्णो यज्ञैरिज्यते यायजूकैः
कृष्णो वीरैरिज्यते विक्रमद्भिः ।
कृष्णो वाक्यैरिज्यते सम्मृशानैः
कृष्णो मुक्तैरिज्यते वीतमोहैः ॥ ३१

विद्यावन्तस्सोमपा ये विपापा
इष्ट्वा यज्ञैर्गोचरं प्रार्थयन्ते ॥ ३१॥

श्रीभगवान्—

[1]सर्वे क्रान्तं देवलोकं विशालं
त्वन्ते कृत्वा मर्त्यलोकं भजन्ते ॥ ३२
एवं सर्वे त्वाश्रमास्सुव्रता ये
मां जानन्तो यान्ति लोकानदीनान् ।
यां यां दीक्षामुद्वहन्तो विपापा
ज्योतिर्भूत्वा देवलोकं भजन्ते ॥ ३३
पूज्यन्ते मां पूजयन्तः प्रहृष्टा
मां जानन्तश्श्रद्धया वासुदेवम् ।
भक्त्या तुष्टोऽहं तस्य सत्त्वं प्रयच्छे
सत्त्वस्पृष्टो वीतमोहोऽयमेति ॥ ३४

द्वैपायनः—

ज्योतींषि शुक्लानि च यानि लोके
त्रयो लोका लोकपालास्त्रयश्च ।
त्रयोऽग्नयश्चाहुतयश्च पञ्च
सर्वे देवा देवकीपुत्र एव ॥ ३५

भीष्मः—

व्यासस्यैतद्वचश्श्रुत्वा मद्रराजस्सहर्षिभिः ।
व्यासं कृष्णं च विधिवत् प्रीतात्मा प्रत्यपूजयत् ॥ ३६

1. ब-क-ब—अधिकं नास्ति

वैशम्पायनः—

[1]कविः प्रयातस्तु महर्षिपुत्रो
द्वैपायनस्तद्वचनं निशम्य ।
जगाम पृथ्वीं शिरसा महात्मा
नमश्च कृष्णाय चकार भीष्मः ॥ ३७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकादशोऽध्यायः ॥ ११ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[ अस्मिन्नध्याये ३७ श्लोकाः ]

## ॥ द्वादशोऽध्यायः ॥

श्रीकृष्णेन भीष्मं प्रति युधिष्ठिराय गरुडोपाख्यानकथनचोदना ॥ १ ॥ कश्यपेन स्वभार्ययोः कद्रूविनतयोः क्रमेण पुत्रसहस्रद्वयलाभरूपवरदानम् ॥ २ ॥ कद्र्वा अण्डसहस्रात्सर्पसहस्रविनिर्गमे उत्कण्ठितया विनतया स्वीयाण्डद्वये एकतराण्डविभेदनम् ॥ ३ ॥ अकालेऽण्डभेदनादसमग्राङ्गतया जातेनारुणेन विनतायै दास्यप्राप्तिरूपशापदानम् ॥ ४ ॥ वर्षसहस्रान्ते परिणतादण्डाद्विनिर्गतेन गरुडेन मातृपार्श्वं विहाय चिराद्देशान्तरेष्वेव सञ्चरणम् ॥ ५ ॥ कदाचन कद्रूविनताभ्यां समुद्रान्ते उच्चैश्श्रवसो हयस्य दर्शनम् ॥ ६ ॥ कद्र्वा हयस्य वर्णं पृष्टया विनतया सर्वाङ्गश्वेतत्वकथनम् । कद्र्वा तु नीलवालत्वकथनम् ॥ ७ ॥ तथा विवदमानाभ्यां ताभ्यां स्वोक्तव्यत्यासे अन्यतरयाऽन्यतरस्या दास्यवहनरूपपणबन्धनम् ॥ ८ ॥ कद्र्वा स्वपुत्रान् प्रति विनतया सह स्वस्य पणबन्धनिवेदनपूर्वकमुच्चैश्श्रवसो वाले

1. अ-ख—कविप्रधानस्तु

स्वाङ्गवेष्टनेन नैल्यसम्पादनचोदना ॥ ९ ॥ कद्वा स्ववचनतिरस्कारिणः कांश्चन पुत्रान् प्रति जनमेजयरूपैस्ले निधनरूपशापदानम् ॥ १० ॥ कैश्चन सर्पैरुच्चैःश्रवसो वाले स्वाङ्गवेष्टनेन नैल्यसम्पादनम् ॥ ११ ॥ ततः कद्रूचोदनया हयवाले नैल्यदर्शिन्या विनतया तद्दास्याङ्गीकरणम् ॥ १२ ॥नारदेन गरुडं प्रति विनतायाः कद्रूदास्यनिवेदनम् ॥ १३ ॥ तच्छ्रवणखिन्नेन तेन कद्रूं प्रति स्वमातुर्दास्यान्मोचनयाचना ॥ १४ ॥ कद्रा गरुडं प्रत्यमृतानयने मातुर्दास्यान्मोचनोक्तिः ॥१५॥ कद्राऽमृताहरणं चोदितेन गरुडेन स्वपितरि कश्यपे तन्निवेदनम् ॥ १६ ॥ तेन तस्य दुष्करत्वकथने गरुडेन स्वेन तस्य सुकरत्वोक्तिः ॥ १७ ॥ कश्यपेन गरुडं प्रति गजकच्छपवृत्तान्तकथनपूर्वकं तयोर्भक्षणाद्बलाप्यायनसम्पादनेनामृताहरणचोदना ॥ १८ ॥ गरुडेन गजकच्छपावासमेत्य चरणाभ्यां तयोर्ग्रहणम्॥ १९ ॥तथा तयोर्भक्षणाय नैमिशारण्यस्थमहातरुशाखायां वेगान्निपतनम् ॥ २० ॥ तथा स्वनिपतनमात्रेण भज्यमानशाखाया अधोभागे लम्बमानमुनिगणावलोकनात्तुण्डेन तच्छाखाग्रहणपूर्वकं पुनरुत्पतनम् ॥ २१ ॥ तथा देवदूतवचनात्समुद्रान्ते शाखाविसर्जनेन तन्निवासिनां कुविन्दानां हननम् ॥ २२ ॥ गरुडेन शैलाग्रे उपविश्य गजकच्छपयोर्भक्षणम् ॥ २३ ॥ ततस्स्वर्गेऽमृतसमीपं गतेन तेन तत्र परितो ज्वलदग्निदर्शनभयाद्ब्रह्माणं प्रति तच्छमनोपायप्रश्नः ॥ २४ ॥ ब्रह्मणा तं प्रति नवनीतप्रक्षेपेणाग्निसंशामनचोदना ॥ २५ ॥ गरुडेन नवनीतप्रक्षेपेण मन्दीभूताग्न्युल्लङ्घनपूर्वकममृतरक्षिणां पक्षप्रहारेण निराकरणम् ॥ २६ ॥ तथाऽमृतमाहृत्य वियति समुत्पतनम् ॥ २७ ॥ तथा स्वस्योपरि इन्द्रेण वज्रे विसृष्टे तत्सन्माननायैकतनूरुहविस्रंसनम् ॥ २८ ॥ गरुडेन कद्रूंप्रत्यमृतानयनकथनम् ॥ २९ ॥ कद्रा विनताया दास्यान्मोचनम् ॥ ३० ॥ गरुडेन पुनरिन्द्रायामृतप्रत्यर्पणम् ॥ ३१ ॥

---

युधिष्ठिरः—

गरुडः पक्षिणां श्रेष्ठ इति पूर्वं पितामह ।
उक्तस्त्वया महाबाहो श्वेतवाहं प्रशंसता ॥ १

अत्र कौतूहल इति श्रवणे जायते मतिः ।
कथं गरुत्मान् पक्षीणां श्रैष्ठ्यं प्राप्तः परन्तप ॥ २

सुपर्णो वैनतेयश्च केन शत्रुश्च भोगिनाम् ।
किंवीर्यः किम्बलश्चासौ वक्तुमर्हसि भारत ॥ ३

भीष्मः—

वासुदेव महाबाहो देवकीसुप्रजास्त्वया ।
श्रुतं ते धर्मराजस्य यदुहर्षविवर्धन ॥ ४

सुपर्णं शंस इत्येव मामाह कुरुनन्दनः ।
अस्य प्रवक्तुमिच्छामि त्वया पृष्टो महाद्युते ॥ ५

त्वं हि शौरे महाबाहो सुपर्णः प्रोच्यसे पुरा ।
अनादिनिधने काले गरुडश्चासि केशव ॥ ६

तस्मात् पूर्वं प्रसाद्य त्वां धर्मपुत्राय धीमते ।
गरुडं पततां श्रेष्ठं वक्तुमिच्छामि माधव ॥ ७

श्रीभगवान्—

यथैव मां भवान् वेद तथा वेद युधिष्ठिरः ।
यथा च गरुडो जातस् तथाऽस्मै ब्रूहि तत्त्वतः* ॥ ८

भीष्मः—

युधिष्ठिर महाबाहो शृणु राजन् यथातथम् ।
गरुडं पक्षिणां श्रेष्ठं वैनतेयं महाबलम् ॥ ९

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

तथा च गरुडो राजन् सुपर्णस्तु यथाऽभवत् ।
यथा च भुजगान् हन्ति तथा मे ब्रुवतश्शृणु ॥ १०

पुराऽहं तात रामेण जामदग्न्येन धीमता ।
कैलासशिखरे रम्ये मृगान्निघ्नन् सहस्रशः ॥ ११

तमहं तात दृष्ट्वैव शस्त्राण्युत्सृज्य सर्वशः ।
अभिवाद्य पूर्वं रामाय विनयेनोपतस्थिवान् ॥ १२

तमहं कथान्ते वरदं सुपर्णस्य बलौजसी ।
अपृच्छं स च मां प्रीतः प्रत्युवाच युधिष्ठिर ॥ १३

रामः—

कद्रूश्च विनता चास्तां प्रजापतिसुते उभे ।
ते धर्मेणोपयेमे च मारीचः काश्यपः प्रभुः ॥ १४

प्रादात्ताभ्यां वरं प्रीतो भार्याभ्यां सुमहातपाः ।
तत्र कद्रूर्वरं वव्रे पुत्राणां दशतीश्शतम् ॥ १५

तुल्यतेजःप्रभावानां सर्वेषां तुल्यजन्मनाम् ।
द्वौ पुत्रौ विनता वव्रे वीरौ भरतसत्तम ॥ १६

कद्रूपुत्रसहस्रेण तुल्यवेगपराक्रमौ ।
स तु ताभ्यां वरं प्रादात् तथेत्युक्त्वा महातपाः ॥ १७

जनयामास यान् पुत्रांस् ताभ्यामासीद्यथा पुरा ॥ १७॥

कद्रूः प्रजज्ञे त्वण्डानां तथैव दशतीश्शतम् ॥ १८

अण्डे द्वे विनता चैव दर्शनीयतरे शुभे ॥ १८॥
तानि त्वण्डानि तु तयोः कद्रूविनतयोर्द्वयोः ।
सोपस्वेदेषु पात्रेषु निदधुः परिचारिणः ॥ १९॥
निस्सरन्ति तदण्डेभ्यः कद्रूपुत्रा भुजङ्गमाः ।
पञ्चवर्षशते काले दृष्टाश्च सबलौजसः ॥ २०॥
विनता तेषु जातेषु पन्नगेषु महात्मसु ।
विपुत्रा पुत्रसन्तापाद् अण्डमेकं बिभेद ह ॥ २१॥
किमनेन करिष्येऽहम् इति वाक्यमभाषत ।
न हि पञ्चशते काले पुरा पुत्रं ददर्श सा ॥ २२॥
साऽपश्यदण्डान्निष्क्रान्तं विना पुत्रं मनस्विनम् ।
पूर्वकायोपसम्पन्नं वियुक्तमितरेण ह ॥ २३॥
दृष्ट्वा तु तं तथारूपम् असमग्रशरीरिणम् ।
पुत्रदुःखान्विताऽशोचन् स च पक्षी तथा गतः ॥ २४॥
अब्रवीच्च मुदा युक्तः पर्यश्रुनयनस्तथा ।
मातरं चपलाऽसीति हतोऽहमिति चासकृत् ॥ २५॥
न त्वया काङ्क्षितः कालो यावानेवाप्यगात् पुरा ।
आवां भवाव पुत्रौ तु श्वसनाद्बलवत्तरौ ॥ २६॥
ईर्ष्याक्रोधाभिभूतत्वाद् योऽहमेवं कृतस्त्वया ।
तस्मात्त्वमपि मे मातर् दासीभावं गमिष्यसि ॥ २७॥

पञ्चवर्षशतानि त्वं स्पर्धसे वै यया सह ।
दासी तस्या भवित्रीति साश्रुपातमुवाच ह ॥ २८॥

एष चैव महाभागे बली बलवतां वरः ।
मोक्षयिष्यति ते मातर् दासीभावान्ममानुजः* ॥ २९॥

विनता पुत्रशोकार्ता शापाद्भीता च भारत ।
प्रतीक्षते स्म तं कालं यः पुत्रोक्तस्तदाऽभवत् ॥ ३०॥

ततोऽप्यतीते पञ्चशते वर्षाणां कालसंयुगे ।
गरुडोऽथ महावीर्यो जज्ञे भुजगभुग्बली ॥ ३१॥

बन्धुरास्यश्शिखी पत्रकोशः कूर्मनखो महान् ।
रक्ताक्षस्संहतग्रीवो ह्रस्वपादो महाशिराः ॥ ३२॥

यस्त्वण्डात् स विनिर्भिन्नो निष्क्रान्तो भरतर्षभ ।
विनतापूर्वजः पुत्रस् सोऽरुणो दृश्यते दिवि ॥ ३३॥

पूर्वां दिशमभिप्रेत्य सूर्यस्योदयनं प्रति ।
अरुणोऽरुणसङ्काशो नाम्ना चैवारुणस्स्मृतः ॥ ३४॥

जातमात्रस्तु विहगो गरुडः पन्नगाशनः ।
विहाय मातरं क्षिप्रम् अगमत् सर्वतो दिशः ॥ ३५॥

स तथा चातिववृधे सर्वकामैरथार्चितः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

पितामहविसृष्टेन भोजनेन विशां पते ॥ ३६॥
तस्मिंश्च विहगे तत्र यथाकामं विवर्धति ।
कद्रूश्च विनता चैव गच्छतां सागरं प्रति ॥ ३७॥
ददृशाते तु ते यान्तम् उच्चैश्श्रवसमन्तिकात् ।
स्नात्वोपवृत्तं त्वरितं पीतवन्तं च वाजिनम् ॥ ३८॥
ततः कद्रूर्हसन्त्येव विनतामिदमब्रवीत् ॥ ३९

कद्रूः

हयस्य वर्णः को न्वत्र ब्रूहि यस्ते मतश्शुभे ॥ ३९॥

विनता—

एकवर्णो हयो राज्ञि सर्वश्वेतो मतो मम ।
वर्णं वा कीदृशं तस्य मन्यसे त्वं मनस्विनि ॥ ४०॥

कद्रूः—

सर्वश्वेतो मतस्तुभ्यं य एष हयसत्तमः ।
ब्रूहि कल्याणि दिव्यानि वर्णान्यत्वेन भामिनि ॥ ४१॥

विनता—

यद्ययं दीव्यसि त्वं मे कः पणो नो भविष्यति ।
सा तज्ज्ञात्वा पणेयं वै ज्ञात्वा तु विपणे त्वया ॥ ४२॥

कद्रूः—

जिता दासी भवेर्मे त्वम् अहं चाप्यसितेक्षणे ।
नैकवर्णैकवर्णत्वे विनते रोचते च ते ॥ ४३॥

विनता—

रोचते मे पणो राज्ञि दासीत्वेन न संशयः ।
सत्यमातिष्ठ भद्रं ते सत्ये स्थास्यामि चाप्यहम्* ॥ ४४॥

रामः—

विनता तु तथेत्युक्त्वा कृतसंशपथा पणे ।
कद्रूरपि तथेत्युक्त्वा पुत्रानिदमुवाच ह ॥ ४५॥

कद्रूः—

मया कृतः पणः पुत्रा मिथो विनतया सह ।
उच्चैश्श्रवसि गान्धर्वे तच्छृणुध्वं भुजङ्गमाः ॥ ४६॥

अहं ब्रुवं नैकवर्णं सैकवर्णमथाब्रवीत् ।
जिता दासी भवेत् पुत्रास् साहसं वै न संशयः ॥ ४७॥

एकवर्णश्च वाजी स चन्द्रकोकनदप्रभः ।
साऽहं दासी भविष्यामि जिता पुत्रा न संशयः ॥ ४८॥

ते यूयमश्वप्रवरम् आविशध्वमतन्द्रिताः ।
सर्वश्वेतं वालधिषु वाला भूत्वाऽञ्जनप्रभाः ॥ ४९॥

सर्पाः—

निकृत्या न जयश्श्रेयान् मातस्सत्या गिरश्शृणु ।
आयत्यां च तदात्वे च न च धर्मोऽत्र विद्यते ॥ ५०॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

सा त्वं धर्मादपेतं वै कुलस्यैवाहितं तव ।
निकृत्या विजयं मातर् मा स्म कार्षीः कथञ्चन ॥ ५१॥

यद्यधर्मेण विजयं वयं काङ्क्षामहे क्वचित् ।
त्वया नाम निवार्यास्स्म मा कुरुध्वमिति ध्रुवम् ॥ ५२॥

सा त्वमस्मानपि सतो विपापानृजुबुद्धिनः ।
कल्मषेण हि संयोक्तुं काङ्क्षसे लोभमोहिता ॥ ५३॥

ते वयं त्वां परित्यज्य द्रविष्याम दिशो दश ।
यत्र वाक्यं न ते मातः पुनश्श्रोष्याम ईदृशम् ॥ ५४॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥ ५५॥

कद्रूः—

शृणोमि विविधा वाचो हेतुमत्यस्समीरिताः ।
वक्रकामनिवृत्त्यर्थं तदहं वो न रोचये ॥ ५६॥

न च तत्पणितं मन्दाश् शक्यं जेतुमतोऽन्यथा ।
जिते निकृत्या श्रुत्वैतत् क्षमं कुरुत पुत्रकाः ॥ ५७॥

श्वोऽहं प्रभातसमये जिता धर्मेण [1]पुत्रकाः ।
शैलूषिणी भविष्यामि विनताया न संशयः ॥ ५८॥

इह चामुत्र चार्थाय पुत्रानिच्छन्ति मातरः ।

1. क-घ—पन्नगाः

साऽहं विपन्ना निरये युष्मानासाद्य सङ्गतान् ॥ ५९॥

इह वा तारयेत् पुत्रः प्रेत्य वा तारयेत् पितॄन् ।
नात्र चित्रं भवेत् किञ्चित् पुनातीति च पुत्रकः ॥ ६०॥

ते यूयं तारणार्थाय मम पुत्रा मनोजवाः ।
आविशध्वं हयश्रेष्ठं वाला भूत्वाऽञ्जनप्रभाः ॥ ६१॥

जानाम्यधर्मस्सकलो विजिता विनता भवेत् ।
निकृत्या दासभावस्तु युष्मानप्यवपीडयेत् ॥ ६२॥

निकृत्या विजयो वेति दासीत्वमवरं भवेत् ।
उभयं निश्चयं कृत्वा जयो वै धार्मिको वरः ॥ ६३॥

यद्यप्यधर्मो विजयो युष्मानेव स्पृशेत् पुनः ।
गुरोर्वचनमादाय धर्मो वस्स भविष्यति ॥* ६४॥

रामः—

श्रुत्वा तु वचनं मातुः क्रुद्धायास्ते भुजङ्गमाः ।
कृच्छ्रेणैवान्वमोदन्त केचिद्धित्वा दिशो गताः ॥ ६५॥

ये प्रतस्थुर्दिशस्तत्र क्रुद्धा तानशपद्रुशम् ।
भुजङ्गमानां माता वै कद्रूर्वैरकरी तदा ॥ ६६॥

कद्रूः—

उत्पत्स्यति हि राजन्यः पाण्डवो जनमेजयः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

चतुर्थो धन्विनां श्रेष्ठात् कुन्तीपुत्राद्धनञ्जयात् ॥ ६७॥
स सर्पसत्रमाहर्ता क्रुद्धः कुरुकुलोद्वहः ।
[1]तस्मिन् सत्रेऽग्निना युष्मान् पञ्चत्वमुपनेष्यति ॥ ६८॥

रामः—

एवं च साऽशपन्माता पन्नगान् धर्मचारिणः ।
गुरोः परित्यागकृतो दोष एतद्भविष्यति ॥ ६९॥
एवं शप्ता दिशः प्राप्ताः पन्नगा धर्मचारिणः ।
विहाय मातरं प्राप्ता गता वैरकरीं तदा ॥ ७०॥
तत्र ये वृजिनं तस्याम् उपपन्ना भुजङ्गमाः ।
ते तस्य वाजिनो वाला बभूवुरसितप्रभाः ॥ ७१॥
तान् दृष्ट्वा वालधिस्थांश्च पुत्रान् कद्रूरथाब्रवीत् ।
विनतामथ संहृष्टा हयोऽसौ दृश्यतामिति ॥ ७२॥
एकवर्णो न वा भद्रे पणो नौ सुव्यवस्थितः ।
उदकादुत्तरन्तं तं हयं चैव तु भामिनि ॥ ७३॥
सा त्ववक्रमतिर्देवी विनता जिह्मगामिनीम् ।
अब्रवीद्भगिनीं किञ्चिद् विहसन्तीव भारत ॥ ७४॥

विनता—

हन्त गच्छाव पश्याव सुकृतो नौ पणश्शुभे ।

---

1. अ—अर्धपञ्चकं नास्ति

दासी वा ते भविष्यामि त्वं वा दासी भविष्यसि ॥ ७५॥

रामः—

एवं स्थिरं पणं कृत्वा हयं ते तं ददर्शतुः ।
कृत्वा साक्षिणमात्मनं भगिन्यौ कुरुसत्तम ॥ ७६॥

सा दृष्ट्वैव हयं मन्दं विनता शोककर्शिता ।
श्वेतं चन्द्रांशुवालं तं कालवालं मनोजवम् ॥ ७७॥

तत्र सा व्रीलिता वाक्यं विनता साश्रुबिन्दुका ।
उवाच कालवालोऽयं तुरगो विजितं त्वया ॥ ७८॥

दासी मां प्रेषयस्वार्ये यथाकामवशां शुभे ।
दास्यश्च कामकारा हि भर्तॄणां नात्र संशयः ॥* ७९॥

ततः कद्रूर्हसन्तीव विनतां धर्मचारिणीम् ।
[1]दासीवत् प्रेषयामास सा च सर्वं चकार तत् ॥ ८०॥

न विवर्णा न संक्षुब्धा न च क्रुद्धा न दुःखिता ।
प्रेष्यकर्म चकारास्या विनता कमलेक्षणा ॥ ८१॥

इमा दिशश्चतस्रोऽस्याः प्रेष्यभावेन वर्तिताः ।
अथ स्म वैनतेयं वै बलदर्पौ समीयतुः ॥ ८२॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्ति दृश्यते

1. क-घ—प्रेषयामास कार्येषु

तं दर्पवशमापन्नं परिधावन्तमन्तिकात् ।
ददर्श नारदो राजन् देवर्षिर्दर्पसंयुतम् ॥ ८३॥

तमब्रवीद्देवऋषिर् नारदः प्रहसन्निव ॥ ८४

नारदः—

किं दर्पवशमापन्नो न वै पश्यसि मातरम् ।
बलेन दृप्तस्सततम् अहंमानकृतस्सदा ॥ ८५

दासीं पन्नगराजस्य मातुरन्तर्गृहे सतीम् ॥ ८५॥

रामः—

[1]तमब्रवीद्वैनतेयः कर्म किं तन्महामते ।
यज्जनित्री मयि सुते जाता दासी तपस्विनी ॥ ८६॥

अथाब्रवीदृषिर्वाक्यं दीव्यती विजिता खग ।
[2]निकृत्या पन्नगेन्द्रस्य मात्रा पुत्रैः पुरा सह ॥ ८७॥

गरुडः—

कथं जिता निकृत्याऽसौ भगवञ्जननी मम ।
ब्रूहि तन्मे यथावृत्तं श्रुत्वा वेत्स्ये ततः परम् ॥ ८८॥

रामः—

ततस्तस्य यथावृत्तं सर्वं तन्नारदस्तदा ।
आचख्यौ भरतश्रेष्ठ यथावृत्तं पतत्रिणः ॥ ८९॥

---

1. क-ख—अर्धचतुष्टयं नास्ति
2. अ—नास्तीदमर्धम्

तच्छ्रुत्वा वैनतेयस्य क्रोधो हृदि समाविशत् ।
जगर्हे पन्नगान् सर्वान् सह मात्रा परन्तप ॥ ९०॥

ततस्तु रोषाद्दुःखाच्च तूर्णमुत्प्लुत्य पक्षिराट् ।
जगाम यत्र माताऽस्य कृच्छ्रे महति वर्तते ॥ ९१॥

तत्रापश्यत् ततो दीनां जटिलां मलिनां कृशाम् ।
तोयदेन प्रतिच्छन्नां सूर्याभामिव मातरम् ॥ ९२॥

तस्य दुःखाच्च रोषाच्च नेत्राभ्यामश्रवास्रवत् ।
प्रवृत्तिं च निवृत्तिं च पौरुषे प्रतितस्थुषः ॥ ९३॥

अनुक्त्वा मातरं किञ्चित् पतत्रिवरपुङ्गवः ।
कद्रूमेव स धर्मात्मा वचनं प्रत्यभाषत ॥ ९४॥

गरुडः—

यदि धर्मेण मे माता जिता यद्यप्यधर्मतः ।
ज्येष्ठा त्वमसि मे माता धर्मस्सर्वस्स मे मतः ॥ ९५॥

इयं तु मे स्यात् कृपणा मयि पुत्रेऽम्ब दुःखिता ।
अनुजानीहि तां साधु मत्कृते धर्मदर्शिनि ॥ ९६॥

रामः—

कद्रूश्श्रुत्वाऽस्य तद्वाक्यं वैनतेयस्य धीमतः ।
उवाच वाचं दुष्प्रज्ञा दुःखक्रोधविमूर्च्छिता ॥ ९७॥

कद्रूः—

नाहं तव न ते मातुर् वैनतेय कथञ्चन ।
कुर्यां प्रियमनिष्टात्मा मां ब्रवीषि खग द्विज ॥ ९८॥

रामः—

तां तथा ब्रुवतीं वाक्यम् अनिष्टां क्रूरभाषिणीम् ।
दारुणां सूनृताभिस्ताम् अनुनेतुं प्रचक्रमे ॥ ९९॥

गरुडः—

ज्येष्ठा त्वमसि कल्याणि मातुर्मे भामिनि प्रिया ।
सोदर्या मम चासि त्वं ज्येष्ठा माता न संशयः ॥ १००॥

कद्रूः—

विहङ्गम यथाकामं गच्छ कामगम द्विज ।
सूनृताभिस्त्वया माता नादासी शक्यमण्डज ॥ १०१॥
अमृतं यद्याहरेस्त्वं विहङ्ग जननीं तव ।
अदासीं त्वमपश्येमां वैनतेय न संशयः ॥* १०२॥

रामः—

तथेत्युक्त्वा तु विहगः प्रतिज्ञाय महाद्युतिः ।
अमृताहरणे वाचं ततः पितरमब्रवीत् ॥ १०३॥

गरुडः—

कामं हि सूनृता वाचो विसृज्य च मुहुर्मुहुः ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिः

यच्चाप्यनुज्ञां मातुर्वै न च सा ह्यनुमन्यते ॥ १०४॥

सा मा बहुविधा वाचो वज्रकल्पा विसृज्य वै ।
भगवन् विनता दासी मम माता महाद्युते ॥ १०५॥

कद्रूः प्रेषयते चैव दासीयमिति चाब्रवीत् ।
आहरामृतमित्येव विनता मोक्ष्यते ततः ॥ १०६॥

सोऽहं मातुर्विमोक्षार्थम् आहरिष्य इति ब्रुवन् ।
अमृतं प्रार्थितस्तूर्णं हर्तुमप्रतिनन्द्य वै ॥ १०७॥

पिता—

अमृतं तात दुष्प्रापं देवैरपि कुतस्त्वया ।
रक्ष्यते हि भृशं पुत्र रक्षिभिस्तन्निबोध मे ॥ १०८॥

गुप्तमद्भिर्भृशं साधु सर्वतः परिवारितम् ।
अनन्तरमथो गुप्तं ज्वलता जातवेदसा ॥ १०९॥

ततश्शतसहस्राणि प्रयुतान्यर्बुदानि च ।
रक्षन्त्यमृतमत्यर्थं किङ्करा नाम राक्षसाः ॥ ११०॥

तेषां शक्तयश्च शूलाश्च शतघ्न्यः पट्टसास्तथा ।
आयुधा रक्षिणां तात वज्रकल्पाश्शिलास्तथा ॥ १११॥

ततो जालेन महता अपनद्धं समन्ततः ।
अयस्मयेन वै तात वृत्रहन्तुस्स्म शासनात् ॥ ११२॥

त्वमेवंविधं तात कथं प्रार्थयसेऽमृतम् ।

सुरक्षितं वज्रभृता वैनतेय विहङ्गम ॥ ११३॥

गरुडः—

पुत्रगृध्या ब्रवीम्येतच्छृणु तात विनिश्चयम् ।
बलवानुपायवानस्मि भूयः किं करवाणि ते ॥ ११४॥

रामः—

तमब्रवीत् पिता हृष्टः प्रहसन् वै पुनः पुनः ॥ ११५

काश्यपः—

यदि तौ भक्षयेस्तात क्रूरौ कच्छपवारणौ ।
तथा बलममेयं ते भविता तत्र संशयः ॥ ११६
अमृतस्यैव चाहर्ता भविष्यसि न संशयः ॥ ११६॥

गरुडः—

क्व तौ क्रूरौ महाभाग वर्तेते हस्तिकच्छपौ ।
भक्षयिष्याम्यहं तात बलस्याप्यायनं प्रति ॥ ११७॥

काश्यपः—

पर्वतो वै समुद्रान्ते नभस्तब्ध्वेव तिष्ठति ।
उरगो नाम दुष्प्रापः पुरा देवगणैरपि ॥ ११८॥
गोरुतानि स विस्तीर्णः पुष्पितद्रुमसानुमान् ।
तत्र पन्थाः कृतस्तात कुञ्जरेण बलीयसा ॥ ११९॥
गोरुतान्युछ्रयस्तस्य नव सप्त च पुत्रक ।
गच्छताऽऽगच्छता चैव क्षपितस्स महागिरिः ॥ १२०॥

तावान् भूमिसमस्तात कृतः पन्थास्समुत्थितः ।
तेन गत्वा स मातङ्गः पिपासुर्युद्धमिच्छति ॥ ९२१॥

तमतीत्य तु शैलेन्द्रं ह्रदः कोकनदायुतः ।
कनकेति च विख्यातस् तत्र कूर्मो महाबलः ॥ १२२॥

गोरुतानि स विस्तीर्णः कच्छपः कुञ्जरश्च सः ।
आयामतश्चाद्रिसमौ तेजोबलसमन्वितौ ॥ १२३॥

पुनरावृत्तिमापन्नौ तावेतौ मधुकैटभौ ।
जन्मान्तरे विप्रमूढौ परस्परवधैषिणौ ॥ १२४॥

यदा स नागो व्रजति पिपासुस्तं जलाशयम् ।
तदैनं कच्छपो रोषात् प्रतियाति महाबलः ॥ १२५॥

नखैश्च दशनैश्चापि निमज्ज्योन्मज्ज्य चासकृत् ।
विररादाग्रहस्तेन कुञ्जरं तं जलेचरः ॥ १२६॥

नागराडपि तोयार्थी पिपासुश्चरणैरपि ।
अग्रहस्तेन दन्ताभ्यां निवारयति वारिजम् ॥ १२७॥

स तु तोयादनुत्तिष्ठन वारिजो गजयूथपम् ।
नखैश्च दशनैश्चैव द्विरदं प्रतिषेधति ॥ १२८॥

निवारितो गजश्रेष्ठः पुनर्गच्छति स्वं वनम् ।
पिपासुः क्लिन्नहस्ताग्रो रुधिरेण समुक्षितः ॥ १२९॥

तौ गच्छ सहितौ पुत्र यदि शक्नोषि भक्षय ।

न तौ पृथक् त्वया शक्यावप्रमत्तौ जले स्थितौ* ॥ १३०॥

गरुडः—

कथं तौ भगवञ् शक्यौ मया वारणकच्छपौ ।
युगपद्ग्रहीतुं तं मे त्वम् उपायं वक्तुमर्हसि ॥ १३१॥

काश्यपः—

योद्धुकामे गते तस्मिन् मुहूर्ते स जलेचरः ।
उत्तिष्ठति जलात्तूर्णं योद्धुकामः पुनः पुनः ॥ १३२॥

जलजं निर्जलं तात प्रमत्तं चैव वारणम् ।
ग्रहीष्यसि पतङ्गेश [1]नान्यो योगोऽत्र विद्यते ॥ १३३॥

रामः—

इत्येवमुक्तो विहगस् तद्गत्वा वनमुत्तमम् ।
ददर्श वारणेन्द्रं तं मेघाचलसमप्रभम् ॥ १३४॥

तां स नागो गिरेर्वीथिं सम्प्राप्त इव भारत ।
स तं दृष्ट्वा महाभागस् सम्प्रहृष्टतनूरुहः ॥ १३५॥

विभक्षयिषतो राजन् दारुणस्य महात्मनः ।
मातङ्गं कच्छपं चैव प्रहर्षस्सुमहानभूत् ॥ १३६॥

अथ वेगेन महता खेचरस्स महाबलः ।
सङ्कुच्य सर्वगात्राणि कृच्छ्रेणैवान्वपद्यत ॥ १३७॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिः

1. क-घ—तावद्यो

तथा गत्वा तमध्वानं वारणप्रवरो बली ।
निःश्वास महाश्वासश् श्रमाद्विश्रमणाय च ॥ १३८॥

तस्य निश्वासवातेन तेन गन्धेन चैव ह ।
उदतिष्ठन्महाकूर्मो वारणप्रतिषेधकः ॥ १३९॥

तयोस्सुतुमुलं युद्धं ददर्श पतगेश्वरः ।
[1]कच्छपेन्द्रद्विरदयोर् इन्द्रप्रह्लादयोरिव ॥ १४०॥

स्पृशन्तमग्रहस्तेन तोयं वारणयूथपम् ।
दन्तैर्नखैश्च जलजो वारयामास भारत ॥ १४१॥

जलजं वारणोऽप्येवं चरणैः पुष्करेण च ।
प्रत्यषेधन्निमज्जन्तम् उन्मज्जन्तं तथैव च ॥ १४२॥

[2]मुहूर्तमभवद्युद्धं तयोर्भीमप्रदर्शनम् ।
अथ तस्माज्जलाद्राजन् कच्छपस्स्थलमास्थितः ॥ १४३॥

स तु नागः प्रभग्नोऽपि पिपासुर्न निवर्तते ।
[3]तोयगृध्नुश्शनैस्तस्माद् अपासर्पत पृष्ठतः ॥ १४४॥

तं दृष्ट्वा जलजस्तूर्णम् अपसर्पन्तमाहवे ।

---

1. अ-क-घ—अर्धपञ्चकं नास्ति
2. अ—द्विजकच्छपयोरेवम् अभवद्भीमदर्शनम् ।
   क-घ—कच्छपेन द्विजेन्द्रस्य युद्धं भीमप्रदर्शनम् ।
3. अ—अर्धद्वयं नास्ति

[1]अभिदुद्राव वेगेन वज्रपाणिरिवासुरम् ॥ १४५॥
तं रोषात् स्थलमुत्तीर्णम् असम्प्राप्तं गजोत्तमम् ।
उभावव समस्तौ तु जग्राह विनतासुतः ॥ १४६॥
चरणेन तु सव्येन जग्राह स गजोत्तमम् ।
प्रस्कन्दमानं बलवान् दक्षिणेन तु कच्छपम् ॥ १४७॥
उत्पपात ततस्तूर्णं पन्नगेन्द्रनिषूदनः ।
दिवं खं च समावृत्य पक्षाभ्यामपराजितः ॥ १४८॥
तेन चोत्पतता तूर्णं सङ्गृहीतैर्नखैर्भृशम् ।
वज्रगर्भैस्सुनिशितैः प्राणांस्तूर्णं मुमोचतुः ॥ १४९॥
तौ गृह्य बलवांस्तूर्णं स्रस्तपादशिरोधरौ ।
विवल्गन्निव खे क्रीडन् खेचरोऽभिजगाम ह ॥ १५०॥
[2]अत्तुकामस्ततो वीरः पृथिव्यां पृथिवीपते ।
निरैक्षत न चापश्यद् द्रुमं पर्याप्तमासितुम् ॥ १५१॥
नैमिशं त्वथ सम्प्राप्य देवारण्यं महाद्युतिः ।
अपश्यत द्रुमं कञ्चिच् छाखास्कन्धसमावृतम् ॥ १५२॥
हिमवच्छिखरप्रख्यं योजनद्वयमुच्छ्रितम् ।
परिणाहेन राजेन्द्र नल्वमात्रं समन्ततः ॥ १५३॥

---

1. अ—गजकच्छपयोरेवं वर्तमाने महाहवे । [ अधिकः पाठः ]

2. ख— चर्तुकाम

तस्य शाखाऽभवत् काचिद् आयता पञ्चयोजनम् ।
दृढमूला दृढस्कन्धा बहुपत्रसमाचिता ॥ १५४॥
तत्रोपविष्टस्सहसा वैनतेयो निगृह्य तौ ।
[1]अत्तुकामस्ततश्शाखां तस्य·वेगादपातयत् ॥ १५५॥
तां पतन्तीमभिप्रेक्ष्य प्रेक्ष्य चर्षिगणानधः ।
आसीनान् वसुभिस्सार्धं सत्रेण जगतीपते ॥ १५६॥
वैखानसान् नाम यतीन् वालखिल्यगणानपि ॥ १५७
तत्र भीराविशत् तस्य [2]पतगेन्द्रस्य भारत ॥ १५७॥
तान् दृष्ट्वा स यतींस्तत्र समासीनान् सुरैस्सह ।
तुण्डेन गृह्य तां शाखाम् उत्पपात खगेश्वरः ॥ १५८॥
तौ च पक्षी भुजङ्गाशो व्योम्नि क्रीडन्निवा[3]व्रजत् ॥ १५९
[4]तं दृष्ट्वा गुरुसम्भारं प्रगृह्योत्पतितं खगम् ।
ऋषयस्तेऽब्रुवन् सर्वे गरुडोऽयमिति स्म ह ॥ १६०
न त्वन्यः क्षमते कश्चिद् यथाऽयं वीर्यवान् खगः ॥ १६०॥
असौ गच्छति धर्मात्मा गुरुभारसमन्वितः ।
अयं क्रीडन्निवाकाशे तस्माद्गरुड एव सः ॥ १६१॥
एवं ते [5]समयं सर्वे वसवश्च दिवौकसः ।

---

1. अ—विशश्राम ततः
2. क-घ—पक्षिराज
3. क-घ—द्रवत्
4. अ—तदा सर्वेऽपि तं दृष्ट्वा
5. ख—मुनयः सर्वे

अकार्षुः पक्षिराजस्य गरुडेत्येव नाम ह ॥ १६२॥

स पक्षी पृथिवीं सर्वाम् परिधावंस्ततस्ततः ।
मुमुक्षुश्शाखिनश्शाखां न स्म देशमपश्यत ॥ १६३॥

स वाचमशृणोद्दिव्याम् उपर्युपरि जल्पतः ।
देवदूतस्य विस्पष्टम् आभाष्य गरुडेति च ॥ १६४॥

देवदूतः—

वैनतेय कुविन्देषु समुद्रान्ते महाबल ।
पात्यतां शाखिनश्शाखा न भीष्मे धर्मनिश्चयात् ॥ १६५॥

रामः—

तच्छ्रुत्वा गरुडस्तूर्णं जगाम लवणाम्भसः ।
उद्देशं यत्र ते मन्दाः कुविन्दाः पापकर्मिणः ॥ १६६॥

तत्र गत्वा ततश्शाखां मुमोच पततां वरः ।
तया हता जनपदास् तदा षट्त्रिंशतो नृप ॥ १६७॥

स देशो राजशार्दूल ख्यातः परमदारुणः ।
शाखापतन इत्येव कुविन्दानां दुरात्मनाम् ॥ १६८॥

हत्वा तं पक्षिशार्दूलः कुविन्दानां जनव्रजम् ।
उपोपविश्य शैलाग्रे भक्षयामास तावुभौ ॥ १६९॥

* सर्वेषु कोशेषु अयमाख्यायमस्तिः

वारणं कच्छपं चैव संहृष्टस्स पतत्रिराट् ॥ १७०

तयोस्स रुधिरं पीत्वा मेदसी च परन्तप ।
संहृष्टः पततां श्रेष्ठो लब्ध्वा बलमनुत्तमम् ॥ १७१
जगाम देवराजस्य भवनं पन्नगाशनः ॥ १७१॥

तं प्रणम्य महात्मानं पावकं विस्फुलिङ्गिनम् ।
रात्रिंदिवं प्रज्वलितं रक्षार्थममृतस्य ह ॥ १७२॥

तं दृष्ट्वा विहगेन्द्रस्य भयं तीव्रमथाविशत् ॥ १७३

न तु तोयान्न रश्मिभ्यो भयमस्योपजायते ।
पक्षित्वमात्मनो दृष्ट्वा ज्वलन्तं च हुताशनम् ॥ १७४
पितामहमथो गत्वा ददर्श भुजगाशनः ॥ १७४॥

तं प्रणम्य महात्मानं गरुडः प्रयताञ्जलिः ।
प्रोवाच तदसन्दिग्धं वचनं पक्षिराट् ततः ॥ १७५॥

गरुडः—

उद्यतं गुरुकृत्ये मां भगवन् धर्मनिश्चितम् ।
विमोक्षणार्थे मातुर्हि दासीभावादनिन्दित ॥ १७६॥

कद्रूसकाशममृतं मया हर्तव्यमीश्वर ।
तदा मे जननी देवी [1]दासीभावात् प्रमोक्ष्यते ॥ १७७॥

तत्रामृतं प्रज्वलितो नित्यमीश्वर रक्षति ।

1. क—नवाहारात्    ख—नवाहारात्

हिरण्यरेता भगवान् पाकशासनशासनात् ॥ १७८॥
तत्र मे देवदेवेश भयं तीव्रमथाविशत् ।
ज्वलन्तं पावकं दृष्ट्वा पक्षित्वं चात्मनः प्रभो ॥ १७९॥
समतिक्रमितुं शक्यः कथं स्यात् पावको मया ।
तस्याभ्युपायं वरद वक्तुमीशोऽसि मे प्रभो ॥ १८०॥

रामः—

तमब्रवीन्महाभागं तप्यमानं विहङ्गमम् ।
अग्नेस्संशमनोपायम् उत्स्मयन् स पुनः पुनः ॥ १८१॥

ब्रह्मा—

पयसा शाम्यते वत्स सर्पिषा च हुताशनः ।
शरीरस्थोऽपि भूतानां किं पुनः प्रज्वलन् भुवि ॥ १८२॥
नवनीतं पयो वाऽपि पावके त्वं समादधेः ।
ततो गच्छ यथाकामं न त्वा धक्ष्यति पावकः ॥* १८३॥

रामः—

पितामहवचश्श्रुत्वा गरुडः पततां वरः ।
जगाम गोकुलं किञ्चिन्नवनीतजिहीर्षया ॥ १८४॥
नवनीतं तथाऽपश्यन्मथितं कलशे स्थितम् ।
तदादाय ततोऽगच्छद् यतस्तद्रक्ष्यतेऽमृतम् ॥ १८५॥
स तत्र गत्वा पतगस् तिर्यक्कोयं महाबलः ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिः

[1]हुताशनमपक्रम्य नवनीतमपातयन् ॥ १८६॥

सोऽर्चिष्मान् मन्दवेगोऽभूत् सर्पिषा तेन [2]सर्वतः ।
धूमकेतुर्न जज्वाल धूममेव ससर्ज ह ॥ १८७॥

तमतीत्याशु गरुडो हृष्टात्मा जातवेदसम् ।
रक्षांसि समतिक्रामन् पक्षवातेन पातयन् ॥ १८८॥

ते पतन्ति शिरोभिश्च जानुभिश्चरणैस्तथा ।
उत्सृज्य शस्त्रावरणं पक्षिपक्षसमाहताः ॥ १८९॥

उत्पत्य पर्वतं नागं हत्वा चक्रं व्यतीत्य च ।
अरान्तरेण शिरसा भित्त्वा जालं समाद्रवत् ॥ १९०॥

स भित्त्वा शिरसा जालं वज्रवेगसमो बली ।
[3]उज्जहार ततश्शीघ्रम् अमृतं भुजगाशनः ॥ १९१॥

तदादाय द्रवच्छीघ्रं गरुडश्श्वसनो यथा ।
अथ सन्नाहमकरोद् वृत्रहा विबुधैस्सह ॥ १९२॥

ततो मातलिना युक्तं हरिभिस्स्वर्णमालिभिः ।
आरुरोह रथं शीघ्रं सूर्याग्निसमतेजसम् ॥ १९३॥

सोऽभिद्रवत् पक्षिवरं वृत्रहा पाकशासनः ।
उद्यम्य निशितं वज्रं वज्रहस्तो महाबलः ॥ १९४॥

---

1. अ—हुताशनं परिक्रम्य  2. अ-ख—तर्पितः
3. क-घ—आजहार ततः क्षिप्र

तथैव गरुडो राजन् वज्रहस्तात् समाद्रवत् ।
ततो वै मातलिं प्राह शीघ्रं वाहय वाजिनः ॥ १९५॥
अथ दिव्यं महाघोरं गरुडाय ससर्ज ह ।
वज्रं सहस्रनयनस् तिग्मवेगपराक्रमः ॥ १९६॥
उत्सिसृक्षन्तमाज्ञाय वज्रं वै त्रिदशेश्वरम् ।
तूर्णं वेगतरो भूत्वा जगाम पततां वरः ॥ १९७॥
पितामहनिसर्गेण ज्ञात्वा लब्धवरः खगः ।
आयुधानां वरं वज्रम् अथ शक्रमुवाच ह ॥ १९८॥

गरुडः—

वृत्रहन्नेष वज्रस्ते वरलब्धः पितामहात् ।
अतस्सम्मानमाकाङ्क्षन् मुञ्चाम्येकं तनूरुहम् ॥ १९९॥
एतेनायुधराजेन यदि शक्रोपि वृत्रहन् ।
हन्यास्त्वं परया शक्त्या गच्छाम्यहमनामयः ॥ २००॥

रामः—

तत्तु तूर्णं तदा वज्रं स्वेन वेगेन भारत ।
जघान परया शक्त्या न चैनमदहद्वशम् ॥ २०१॥
ततो देवर्षयो राजन् गच्छन्तो वै विहायसा ।
दृष्ट्वा वज्रं विपक्तं तं पक्षिपर्णेऽब्रुवन् वचः ॥ २०२॥

देवर्षयः—

सुपर्णः पक्षिगरुडो यस्य पर्णे वरायुधम् ।

विषक्तं देवराजस्य वृत्रहर्तुस्सनातनम् ॥ २०३॥

भीष्मः—

एवं सुपर्णो विहगो वैनतेयः प्रतापवान् ।
ऋषयस्तं विजानन्ति चाग्नेयं वैष्णवं पुनः ॥ २०४॥
वेदाभिष्टुतमत्यन्तं स्वर्गमार्गफलप्रदम् ।
तनुपर्णं सुपर्णस्य जगृहुर्बर्हिणस्तथा ॥ २०५॥
मयूरा विस्मितास्सर्वे आद्रवन्ति स्म वज्रिणम्* ॥ २०६
ततो वज्रं सहस्राक्षो दृष्ट्वा सक्तं वरायुधम् ।
ऋषींश्च दृष्ट्वा सहसा सुपर्णमिदमब्रवीत् ॥ २०७

इन्द्रः—

न ते सुपर्ण पश्यामि प्रभावं [1]येन मे भवान् ।
इत्युक्ते न मया रक्षा शक्या कर्तुमतोऽन्यथा ॥ २०८
इदं वज्रं मया सार्धं निवृत्तं हि यथागतम् ॥ २०८॥

भीष्मः—

ततस्सहस्रनयने निवृत्ते गरुडस्तथा ।
कद्रूमभ्यागमत्तूर्णम् अमृतं गृह्य भारत ॥ २०९॥

गरुडः—

तदाहृतं मया शीघ्रम् अमृतं जननीकृते ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिः दृश्यते
1. ख—तेन योधये

अदासी सा भवत्वद्य विनता धर्मचारिणी ॥ २१०॥

कद्रूः—

स्वागतं स्वाहृतं चेदम् अमृतं विनतात्मज ।

अदासी जननी तेऽद्य पुत्र कामवशा शुभा ॥ २११॥

भीष्मः—

एवमुक्ते तदा सा च सम्प्राप्ता विनता गृहम् ॥ २१२

[1]उपनीय यथान्यायं विहगो बलिनां वरः ।

स्मृत्वा निकृत्या विजयं मातुस्सम्प्रतिपद्यत ॥ २१३

वधं च भुजगेन्द्राणां ये वालास्तस्य वाजिनः ।

बभूवुरसितप्रख्या निकृत्या वै जितास्त्वया ॥ २१४

तामुवाच ततो न्याय्यं विहगो बलिनां वरः ॥ २१४॥

उज्जहारामृतं तूर्णम् उत्पपात च रंहसा ॥ २१५

तद् गृहीत्वाऽमृतं तूर्णं प्रयान्तमपराजितम् ।

कद्रूर्भुजङ्गजननी सुपर्णमिदमब्रवीत् ॥ २१६

कद्रूः—

किमर्थं वैनतेय त्वम् आहृत्यामृतमुत्तमम् ।

पुनर्हरसि दुर्बुद्धे मा जातु वृजिनं कृथाः ॥ २१७

सुपर्णः—

अमृताहरणं मेऽद्य यत्कृतं जननीकृते ।

---

1. अ-क-ब—नास्तीदमर्धम्

भवत्या वचनादेतद् आहराममृतमित्यथ ॥ २१८

आहृतं तदिदं शीघ्रं मुक्ता च जननी मम ।

हराम्येष पुनस्तत्र यत एतन्मयाऽऽहृतम् ॥ २१९

यदि मां भवती ब्रूयाद् अमृतं मे च दीयताम् ।

तथा कुर्यां न वा कुर्यां न हि त्वममृतक्षमा ॥ २२०

मया धर्मेण सत्येन विनता च समुद्धृता ॥ २२०॥

भीष्मः—

ततो गत्वाऽथ गरुडः पुरन्दरमुवाच ह ॥ २२१

गरुडः—

इदं मया वृत्रहंस्तद्धृतं तेऽमृतमुत्तमम् ।

मात्रर्थे हि तथैवेदं गृहाणामृतमाहृतम् ॥ २२२

माता च मम देवेश दासीत्वमुपजग्मुषी ।

भुजङ्गमानां मातुर्वै सा मुक्ताऽमृतदर्शनात् ॥ २२३

भीष्मः—

एतच्छ्रुत्वा सहस्राक्षस् सुपर्णमनुमन्यत ।

उवाच च मुदा युक्तो दिष्ट्या दिष्ट्येति वासवः ॥ २२४

ऋषयो ये सहस्राक्षम् उपासन्ते सुरैस्सह ।

ते सर्वे च मुदा युक्ता विश्वे देवास्तथैव च ॥ २२५

ततस्तमृषयस्सर्वे देवाश्च भरतर्षभ ।

ऊचुः [1]पुरन्दरं दृष्ट्वा गरुडो लभतां वरम् ॥ २२६

ततश्शचीपतिर्वाक्यम् उवाच प्रहसन्निव ॥ २२६॥

इन्द्रः—

[2]जनिष्यति हृषीकेशस् स्वयमेवैष पक्षिराट् ।
केशवः पुण्डरीकाक्षश् शूरपुत्रस्य वेश्मनि ॥ २२७॥

स्वयं धर्मस्य रक्षार्थं विभज्य भुजगाशनः ॥ २२८

भीष्मः—

एष ते पाण्डवश्रेष्ठ गरुडोऽथ पतत्रिराट् ।
सुपर्णो वैनतेयश्च कीर्तितो भद्रमस्तु ते ॥ २२९

तदेतद्वदतां श्रेष्ठ मयाऽऽख्यानं प्रकीर्तितम् ।
सुपर्णस्य महाबाहो किं भूयः कथयामि ते ॥ २३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[ अस्मिन्नध्याये २३० श्लोकाः ]

---

1. क–ख—परमसंहृष्टा
2. ख—भजिष्यति हृषीकेशम्

## ॥ त्रयोदशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणाय प्रतिश्रुतार्थाप्रदानस्यानर्थहेतुतायां दृष्टान्ततया सृगालवानरसंवादानुवादः ॥

युधिष्ठिरः—

ब्राह्मणानां तु ये लोके प्रतिश्रुत्य पितामह ।
न प्रयच्छन्ति लोकास्ते के भवन्ति महामते ॥ १
प्रतिश्रुत्य दुरात्मानो न प्रयच्छन्ति ये नराः ॥ १॥

भीष्मः—

यो न दद्यात् प्रतिश्रुत्य स्वल्पं वा यदि वा बहु ।
आशास्तस्य हतास्सर्वाः क्लीबस्येव प्रजाफलम् ॥ २॥
यां रात्रिं जायते पापो यां च रात्रिं विनश्यति ।
एतस्मिन्नन्तरे यद्यत् सुकृतं तस्य भारत ॥ ३॥
यच्च तस्य हुतं किञ्चित् सर्वं तस्योपहन्यते ॥ ४
अत्रैतद्वचनं प्राहुर् धर्मशास्त्रविदो जनाः ।
निशाम्य भरतश्रेष्ठ बुद्ध्या परमयुक्तया ॥ ५
अपि चोदाहरन्तीमं धर्मं धर्मविदो जनाः ।
अश्वानां श्यामकर्णानां सहस्रेण न मुच्यते ॥ ६
अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।

सृगालस्य च संवादं वानरस्य च सत्तम ॥ ७

तौ सहायौ पुरा ह्यास्तां मानुषत्वे परन्तप ।
अन्यां योनिं समुत्पन्नौ सार्गालीं वानरीं तथा ॥ ८

सम्भाषणं ततस्सख्यं तत्र तत्र परस्परम् ॥ ८॥

ततः पुरा सहायं तं सृगालं वानरोऽब्रवीत् ।
श्मशानमध्ये सम्प्रेक्ष्य पूर्वजातिमनुस्मरन् ॥ ९॥

वानरः—

किं त्वया पापकं कर्म कृतं पूर्वं सुदारुणम् ।
यत् त्वं श्मशाने मृतकान पूतिकानत्सि कुत्सितान् ॥ १०॥

भीष्मः—

एवमुक्तः प्रत्युवाच सृगालो वानरं तदा ॥ ११

सृगालः—

ब्राह्मणस्य प्रतिश्रुत्य न मया तदपाकृतम् ।
तत्कृते पापिकां योनिम् आपन्नोऽस्मि प्लवङ्गम ॥ १२

[1]तस्मादेवंविधं भक्ष्यं भक्षयामि बुभुक्षितः ॥ १२॥

भीष्मः—

[2]स चाप्याह ब्राह्मणानां फलाहारः प्लवङ्गमः ॥ १३

वानरः—

तस्मान्न ब्राह्मणस्वं तु हर्त्तव्यं विदुषा सता ।
सीमाविवादे मोक्तव्यम् दातव्यं च प्रतिश्रुतम् ॥ १४

1. क-घ—इदमर्धं नास्ति 2. क-घ—इदमर्धं नास्ति

भीष्मः—

इत्येतद्ब्रुवतो राजन् ब्राह्मणस्य मया श्रुतम् ।
[1]तथा कथां कथयतः पुण्यां धर्म्यां पुरातनाम् ॥ १५
श्रुतं चापि मया भूयः कृष्णस्यापि विशां पते ॥ १५॥

न हर्तव्यं विप्रधनं क्षन्तव्यं तेषु नित्यशः ।
बालाश्च नावमन्तव्या दरिद्राः कृपणा अपि ॥ १६॥

एवमेवेह मां नित्यम् ब्राह्मणास्सन्दिशन्ति वै ।
प्रतिश्रुतं भवेद्देयं आशाकामो हि ब्राह्मणः ॥ १७॥

ब्राह्मणो ह्याशया पूर्वं कृतया पृथिवीपते ।
सुसमिद्धो यथा दीप्तः पावकस्तद्विधस्स्मृतः ॥ १८॥

यं निरीक्षति सङ्क्रुद्ध आशया पूर्वयातया ।
प्रदहेत हि तं राजन् कक्षमक्षय्यभुग्यथा ॥ १९॥

स एष च यदा तुष्टो वचसा प्रतिनन्दति ।
भवत्यगदसङ्काशो विषये तस्य भारत ॥ २०॥

पुत्रान् पौत्रान् पशूंश्चैव बान्धवान् सचिवांस्तथा ।
पुरं जनपदं चैव शान्तिरिष्टेव पोषति ॥ २१॥

एतद्धि परमं तेजो ब्राह्मणस्येह दृश्यते ।
सहस्रकिरणस्येव सवितुर्धरणीतले ॥ २२॥

---

1. क-घ—श्रुतं कथाः कथयतो धर्मज्ञस्य पुरातनाः । [पाठान्तरम्]

तस्माद्दातव्यमित्येव प्रतिश्रुत्य युधिष्ठिर ।
यदीच्छेच्छोभनां जातिं प्राप्तुं भरतसत्तम ॥ २३॥
ब्राह्मणस्य हि दत्तेन ध्रुवं स्वर्गो ह्यनुत्तमः ।
शक्यः प्राप्तुं विशेषेण दानं हि महती क्रिया ॥ २४॥
इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
तस्माद्देयानि दानानि ब्राह्मणानां परन्तप ॥ २५॥
[1]महद्धि भरतश्रेष्ठ ब्राह्मणस्तीर्थमुच्यते ।
वेलायां न तु कस्याञ्चिद् विप्रो गच्छेदपूजितः ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[ अस्मिन्नध्याये २६॥ श्लोकाः ]

1. अ-क-ष—नास्तीदमर्धम्

## ॥ चतुर्दशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति शूद्रोपदेशस्यानर्थहेतुतायां दृष्टान्ततया मुनिशूद्रयोः कथाकथनम् ॥

युधिष्ठिरः—

मित्रसौहृदभावेन उपदेशं करोति यः ।
जात्याऽवरस्य राजर्षे दोषस्तस्य भवेन्न वा ॥ १
एतदिच्छामि तत्त्वेन व्याख्यातुं वै पितामह ।
सूक्ष्मा गतिर्हि धर्मस्य यत्र मुह्यन्ति [1]मानवाः ॥ २

भीष्मः—

अत्र ते वर्तयिष्यामि शृणु मे भरतर्षभ ।
दुरुक्तवचनं राजन् यथान्यायं यथागमम् ॥ ३
ऋषीणां वदतां पूर्वं श्रुतमासीद्यथा पुरा ॥ ३॥
उपदेशो न कर्तव्यो जातिहीनस्य कस्य चित् ।
उपदेशे महान् दोष उपाध्यायस्य उच्यते ॥ ४॥
नाध्यापयेच्छूद्रमिह तथा नैव च याजयेत् ।
निदर्शनमिदं राजञ् शृणु मे भरतर्षभ ॥ ५॥
दुरुक्तवचने राजन् यथापूर्वं युधिष्ठिर ।

1. क-ख—जन्तवः

ब्रह्माश्रमपदे वृत्तं पार्श्वे हिमवतश्शुभे ॥ ६॥

तत्राश्रमपदं पुण्यं नानावृक्षगणायुतम् ।
बहुगुल्मलताकीर्णं मृगद्विजनिषेवितम् ॥ ७॥

सिद्धचारणसङ्घुष्टं रम्यं पुष्पितकाननम् ।
व्रतिभिर्बहुभिः कीर्णं तापसैरुपशोभितम् ॥ ८॥

ब्राह्मणैश्च महाभागैस् सूर्यज्वलनसन्निभैः ।
नियमव्रतसम्पन्नैस् समाकीर्णं तपस्विभिः ॥ ९॥

दीक्षितैर्भरतश्रेष्ठ यताहारैः कृतात्मभिः ।
वेदाध्ययनघोषैश्च नादितं भरतर्षभ ॥ १०॥

वालखिल्यैश्च ऋषिभिर् यतिभिश्च निषेवितम् ॥ ११

तत्र कश्चित् समुत्साहं कृत्वा शूद्रो मुदाऽन्वितः ।
आगतो ह्याश्रमपदं पूजितश्च तपस्विभिः ॥ १२

तांस्तु दृष्ट्वा मुनिगणान् देवकल्पान् महौजसः ।
वहतो विविधा दीक्षास् सम्प्राहृष्यत भारत ॥ १३

अथास्य बुद्धिरभवत् तापस्ये भरतर्षभ ।
ततोऽब्रवीत् कुलपतिं पादौ सङ्गृह्य भारत ॥ १४

शूद्रः—

तव प्रसादादिच्छामि धर्मं चर्तुं द्विजर्षभ ।
तस्मादभिगतं त्वं मां प्रव्राजयितुमर्हसि ॥ १५

वर्णावरोऽहं भगवञ् शूद्रो जात्याऽस्मि सत्तम ।
शुश्रूषां कर्तुमिच्छामि प्रपन्नाय प्रसीद मे ॥ १६

कुलपतिः—

न शक्यमिह शूद्रेण लिङ्गमाश्रित्य वर्तितुम् ।
[1]रम्यतां यदि ते बुद्धिश् शुश्रूषानिरतो भव ॥ १७

भीष्मः—

एवमुक्तस्तु मुनिना स शूद्रोऽचिन्तयन्नृप ॥ १७॥

शूद्रः—

कथमत्र मया शक्यं व्रतं श्रद्धा परा च मे ।
विज्ञानमेव भवतु करिष्ये प्रियमात्मनः ॥ १८॥

भीष्मः—

गत्वाऽऽश्रमपदाद्दूरम् उटजं कृतवांस्तु सः ॥ १९
तत्र भूमिं च वेदिं च देवतायतनानि च ।
निवेश्य भरतश्रेष्ठ नियमस्थोऽभवन् सुखम् ॥ २०
अभिषेकांश्च नियमान् देवतायतनानि च ।
बलिं कृत्वा च हुत्वा च दैवतान्यभ्यपूजयत् ॥ २१
सङ्कल्पनियमोपेतः फलाहारो जितेन्द्रियः ॥ २१॥
नित्यं सन्निहिताभिश्च ओषधीभिः फलैस्तथा ।
अतिथीन् पूजयामास यथावत् समुपागतान् ॥ २२॥
एवं हि सुमहान् कालो व्यत्यक्रामत् स तस्य वै ॥ २३

1. क-ब— गृह्यताम्

अथास्य ऋषिरागच्छत् सङ्गत्या वै तमाश्रमम् ।
सम्पूज्य स्वागतेनर्षिं विधिवत् पर्यतोषयत् ॥ २४

अनुकूलाः कथाः कृत्वा यथावत् पर्यपृच्छत ।
ऋषिः परमतेजस्वी धर्मात्मा संयतेन्द्रियः ॥ २५

एवं स बहुशस्तस्य शूद्रस्य भरतर्षभ ।
अगच्छदाश्रममृषिश् शूद्रं द्रष्टुं नरर्षभ ॥ २६

अथ तं तापसश्शूद्रस् सोऽब्रवीद्भरतर्षभ ॥ २६॥

शूद्रः—
[1]पितृकार्यं करिष्यामि तत्र मेऽनुग्रहं कुरु ॥ २७

भीष्मः—
अथ ग्राहयितुं विप्रं शूद्रो नीवारतण्डुलान् ।
शुचिर्भूत्वा स शूद्रस्तु तस्यर्षेः पात्रमानयत् ॥ २८

अथ दर्भांश्च पर्णांश्च ओषधीर्भरतर्षभ ।
पवित्रमासनं चैव बृसीं च समुपानयत् ॥ २९

अथ दक्षिणमाश्रित्य बृसीमपरशीर्षिकाम् ।
कृतामन्यायतो दृष्ट्वा ततस्तमृषिरब्रवीत् ॥ ३०

ऋषिः—
कुरुष्वैनां पूर्वशीर्षां भव चोदङ्मुखश्शुचिः ।

भीष्मः—
स च तत् कृतवाञ् शूद्रस् सर्वं यदृषिरब्रवीत् ॥ ३१

1. अ-क-घ—अर्धचतुष्टयं नास्ति

यथोपदिष्टं मेधावी दर्भादीनि यथातथम् ।
हव्यकव्यविधिं कृत्स्नम् उक्तं तेन यशस्विना ॥ ३२
ऋषिणा [1]पितृकार्येषु सदा धर्मपथे स्थितः ॥ ३२॥
पितृकार्ये कृते चापि विसृष्टस्स जगाम ह ॥ ३३
अथ दीर्घस्य कालस्य स तप्यञ् शूद्रतापसः ।
वने पञ्चत्वमगमन् सुकृतेन कृतेन वै ॥ ३४
अजायत महाराज राजवंशे महाद्युतिः ॥ ३४॥
तथैव च ऋषिस्तात कालधर्ममवाप्य ह ।
पुरोहितकुले विप्रस् स जातोऽस्य वशानुगः ॥ ३५॥
एवं तौ तत्र सम्भूतावुभौ शूद्रमुनी तदा ।
क्रमेण वर्धितौ चापि विद्यासु कुशलावुभौ ॥ ३६॥
अथर्ववेदे वेदे च बभूवर्षिस्सुनिश्चितः ।
कल्पप्रयोगे चोत्पन्ने ज्योतिष्येव परं गतः ॥ ३७॥
साङ्ख्ये चैव परा प्रीतिस् तयोश्चापि व्यवर्धत ॥ ३८
पितर्युपरते चाथ कृतशौचस्स भारत ।
अभिषिक्तः प्रकृतिभी राजपुत्रस्स पार्थिवः ॥ ३९
अभिषिक्तेन ऋषिभिर् अभिषिक्तः पुरोहितः ॥ ३९॥
स तं पुरोधाय सुखम् अवसद्भरतर्षभ ।

1. ख—धर्मक।

राज्यं शशास धर्मेण प्रजाश्च परिपालयन् ॥ ४०॥

पुण्याहवाचने नित्यं धर्मकृत्येषु चासकृत् ।
उत्स्मयन् प्राहसच्चापि दृष्ट्वा राजा पुरोहितम् ॥ ४१॥

एवं स बहुशो राजन् पुरोधसमुपाहसन् ॥ ४२

लक्षयित्वा पुरोधाश्च बहुशस्तं नराधिपम् ।
उत्स्मयन्तं च सततं दृष्ट्वा तं मन्युमानभूत् ॥ ४३

अथ शून्ये पुरोधास्तु सह राज्ञा समागमन् ।
कथाभिरनुरूपाभी राजानमभिराधयन् ॥ ४४

ततोऽब्रवीन्नरेन्द्रं स पुरोधा भरतर्षभ ॥ ४४॥

पुरोहितः—

वरमिच्छाम्यहं त्वेकं त्वया दत्तं महाद्युते ॥ ४५

राजा—

वराणां ते शतं दद्यां किमुतैकं द्विजोत्तम ।
स्नेहाच्च बहुमानाच्च नास्त्यदेयं हि मे तव ॥ ४६

पुरोहितः—

एकं च वरमिच्छामि यदि तुष्टोऽसि पार्थिव ।
यद्वदामि महाराज सत्यं तद्वद माऽनृतम् ॥ ४७

भीष्मः—

बाढमित्येव तं राजा प्रत्युवाच युधिष्ठिर ॥ ४७॥

राजा—

यदि ज्ञास्यामि वक्ष्यामि अज्ञातं न तु संवदे ॥ ४८

पुरोहितः—

पुण्याहवाचने नित्यं धर्मकृत्येषु चासकृत् ।
शान्तिहोमेष्वपि तथा किं त्वं हससि वीक्ष्य माम् ॥ ४९
व्रीडितं मे भवति हि मनो मे हसता त्वया ।
स मया शापितो राजन् नान्यथा वक्तुमर्हसि ॥ ५०
भाव्यं हि कारणेनात्र न ते हास्यमकारणम् ।
कौतूहलं मे सुभृशं तत्त्वेन कथयस्व मे ॥ ५१

राजा—

एवमुक्ते त्वया विप्र यदवाच्यं भवेदपि ।
अवश्यमेव वक्तव्यं शृणुष्वैकमना द्विज ॥ ५२
पूर्वदेहे यथा वृत्तं निबोध द्विजसत्तम ।
[1]जातिं स्मराम्यहं ब्रह्मन्नवधानेन मे शृणु ॥ ५३
शूद्रोऽहमभवं पूर्वं तापस्ये कृतनिश्चयः ।
ऋषिरुग्रतपास्त्वं तु तदाऽभूर्द्विजसत्तम ॥ ५४
प्रीयता हि तदा ब्रह्मन् ममानुग्रहबुद्धिना ।
पितृकार्ये त्वया ब्रह्मन्नुपदेशः कृतो मम ॥ ५५
बृस्यां दर्भे च हव्ये च कव्ये च द्विजसत्तम ।
एतेन कर्मदोषेण पुरोधास्त्वमजायथाः ॥ ५६
अहं राजा च विप्रेन्द्र पश्य कालस्य पर्ययम् ।

1. ख—अर्धेलयं नास्ति

त्वत्कृतेनोपदेशेन त्वया प्राप्तमिदं फलम् ॥ ५७
एतस्मात् कारणाद्ब्रह्मन् प्रहसे त्वां द्विजोत्तम ।
न त्वां परिभवाद् ब्रह्मन् प्रहसामि गुरुर्भवान् ॥ ५८
विपर्ययेण मे मन्युस् तेन स्मयति मे मतिः ।
जातिं स्मराम्यहं ब्रह्मंस् ततस्त्वां प्रहसामि वै ॥ ५९
एवं तपो गृहीतं व उपदेशेन नाशितम् ।
पुरोहितत्वमुत्सृज्य यतस्व त्वं पुनर्भवे ॥ ६०
इतस्त्वमसमामन्यां योनिं प्राप्स्यसि स द्विज ।
गृह्यतां द्रविणं विप्र पूतात्मा भव सत्तम ॥ ६१

भीष्मः—

ततो विसृष्टो राज्ञा तु विप्रो धान्यान्यनेकशः ।
ब्राह्मणेभ्यो ददौ वित्तं भूमिं ग्रामाननेकशः ॥ ६२
कृच्छ्राणि कृत्वा च तदा यथोक्तानि द्विजोत्तमैः ।
तीर्थानि चापि गत्वा वै दानानि विविधानि च ॥ ६३
दत्त्वा गाश्चैव विप्राणां पूतात्मा सोऽभवद्द्विजः ॥ ६३॥
तमेव चाश्रमं गत्वा चचार विपुलं तपः ॥ ६४
तपस्सिद्धिं परां प्राप्तो ब्राह्मणो राजसत्तम ।
सत्तमश्चाभवत्तेषाम् आश्रमे श्रमवासिनाम् ॥ ६५
एवं प्राप्तो महन् कृच्छ्रम् ऋषिस्स नृपसत्तम ।
ब्राह्मणेन न वक्तव्यं तस्माद्वर्णावरे जने ॥ ६६

[1]वर्जयेदुपदेशं च सदैव ब्राह्मणो नृप ।
उपदेशं हि कुर्वाणो द्विजः कृच्छ्रमवाप्नुयात् ॥ ६७
नेषितव्यं सदा वाचा द्विजेन नृपसत्तम ।
न च प्रवक्तव्यमिह किञ्चिद्वर्णान्तरे जने ॥ ६८
ब्राह्मणाः क्षत्रिया वैश्यास् त्रयो वर्णा द्विजातयः ।
एतेषु कथयन् राजन् ब्राह्मणो न प्रदुष्यति ॥ ६९
तस्मान् सद्भिर्न वक्तव्यं कस्यचित् किञ्चिदग्रतः ।
सूक्ष्मा गतिर्हि धर्मस्य दुर्ज्ञेया ह्यकृतात्मभिः ॥ ७०
तस्मान्मौनानि ऋषयो दीक्षां कुर्वन्ति चानृते ॥ ७०॥
दुरुक्तस्य भयाद्राजन् नाभिभाषेत किञ्चन ॥ ७१
धार्मिका गुणसम्पन्नास् सत्यार्जवगुणान्विताः ।
दुरुक्तवाचाऽभिहिताः प्राप्नुवन्तीह किल्बिषम् ॥ ७२
उपदेशो न कर्तव्यो ह्यज्ञात्वा यस्य कस्य चित् ।
उपदेशाद्धि तत्पापं ब्राह्मणस्समवाप्नुयात् ॥ ७३
[2]विमृश्य तस्मात् प्राज्ञेन वक्तव्यं धर्ममिच्छता ।
सत्यानृतेन हि कृत उपदेशो हिनस्ति हि ॥ ७४
वक्तव्यमथ पृष्टेन विनिश्चयविपर्ययम् ।

1. ख—इदमाद्यर्धचतुष्टयं नास्ति
2. क-घ—एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि । [ अधिकः पाठः ]

स चोपदेशः कर्तव्यो येन धर्ममवाप्नुयात् ॥ ७५

एतत्ते सर्वमाख्यातम् उपदेशे कृते सति ।
महान् क्लेशो हि भवति तस्मान्नोपदिशेत् क्वचित् ॥ ७६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[ अस्मिन्नध्याये ७६ श्लोकाः ]

---

## ॥ पञ्चदशोऽध्यायः ॥

महालक्ष्म्या रुक्मिणीं प्रति स्वावासस्थलनिर्देशः ॥

---

युधिष्ठिरः—

कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ ।
श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्र ते वर्णयिष्यामि यथावृत्तं यथाश्रुतम् ।
रुक्मिणी देवकीपुत्रसन्निधौ पर्यपृच्छत ॥ २

नारायणस्याङ्कगतां ज्वलन्तीं
दृष्ट्वा श्रियं पद्मसमानवक्त्राम् ।

कौतूहलाद्विस्मितचारुनेत्रा
पप्रच्छ माता मकरध्वजस्य ॥ ३

रुक्मिणी—

कानीह भूतान्युपसेवसे त्वं
सन्तिष्ठसे कानि च सेवसे [1]त्वम् ।
तानि त्रिलोकेश्वरभूतकान्ते
तत्त्वेन मे ब्रूहि महर्षिकन्ये ॥ ४

भीष्मः—

एवं तदा श्रीरभिभाष्यमाणा
मात्रा समक्षं मकरध्वजस्य ।
उवाच वाक्यं मधुराभिधानं
मनोरमं चन्द्रमुखी प्रसन्ना ॥ ५

श्रीः—

वसामि सत्त्वे सुभगे प्रगल्भे
दक्षे नरे कर्मणि वर्तमाने ।
नाकर्मशीले पुरुषे वसामि
न नास्तिके साङ्करिके कृतघ्ने ॥ ६

[2]न भिन्नवृत्ते न नृशंसवृत्ते
न चाविनीते न गुरुष्वसूयके ॥ ६॥

1. अ—कम्  2. क-ब—न हीन

ये चाल्पतेजोबलसत्त्वसारा
हृष्यन्ति तुष्यन्ति च यत्र तत्र ।
न देवि तिष्ठामि तथाविधेषु
नरेषु सङ्क्षिप्तमनोरथेषु ॥ ७॥

यश्चात्मनि प्रार्थयते न किञ्चिद्
यश्च स्वभावोपहतान्तरात्मा ।
तेष्वप्यसन्तोषकरेषु नाहं
नरेषु नित्यं निवसामि देवि ॥ ८॥

वसामि धर्मशीलेषु धर्मज्ञेषु महात्मसु ।
[1]वृद्धसेविषु दान्तेषु सर्वज्ञेषु महात्मसु ॥ ९॥

अवन्ध्यकालेषु सदा दानशौचरतेषु च ।
ब्रह्मचर्यतपोज्ञानगोद्विजातिप्रियेषु च ॥ १०॥

[2]वसामि स्त्रीषु कान्तासु देवद्विजपरासु च ।
विशुद्धगृहभाण्डासु गोधान्याभिरतासु च ॥ ११॥

प्रकीर्णभाण्डामनवेक्ष्यकारिणीं
सदा च भर्तुः प्रतिकूलवादिनीम् ।
परस्य वेश्माभिरतामलज्जां
[3]सदाऽशनीयां परिवर्जयामि ॥ १२॥

1. अ-क-घ—नास्तीदमर्धम् 2. अ—नास्तीदमर्धम्
3. अ—सदा शयानां

लोलां मताक्षामवलेपिनीं च
व्यपेतशौचां कलहप्रियां च ।
निद्राभिभूतां सततं शयानाम्
एवंविधां स्त्रीं परिवर्जयामि ॥ १३॥

सत्यासु नित्यं प्रियदर्शनासु
सौभाग्ययुक्तासु बहु[1]श्रुतासु ।
वसामि नारीषु गुणान्वितासु
कल्याणशीलासु विभूषितासु ॥ १४॥

[2]यानेषु कन्यासु विभूषणेषु
[3]वस्त्रेषु मेघेषु च वृष्टिमत्सु ।
वसामि फुल्लासु च पद्मिनीषु
नक्षत्रवीथीषु च शारदीषु ॥ १५॥

शैलेषु गोष्ठेषु तथा वनेषु
सरस्सु फुल्लोत्पलपङ्कजेषु ।
नदीषु हंसस्वरनादितासु
क्रौञ्चान्यपुष्टस्वरनादितासु ॥ १६॥

विस्तीर्णकूलह्रदशोभितासु
तपस्विसिद्धद्विजसेवितासु ।

1. क-ख—म्रताम् 2. ख—धान्येषु
3. क-ख—वस्त्रेषु

वसामि नित्यं च बहूदकासु
सिंहैर्गजैश्चाकुलितोदकासु ॥ १७॥

मत्ते गजे गोवृषभे नरेन्द्रे
सिंहासने सत्पुरुषे च नित्यम् ॥ १८

यस्मिन् गृहे हूयति हव्यवाहो
गोब्राह्मणाश्चाच्युतदेवता च ।
काले च पुष्पैर्बलयः क्रियन्ते
तस्मिन् गृहे नित्यमुपैमि वासम् ॥ १९

स्वाध्यायशीलेषु द्विजेषु नित्यं
क्षत्रे च धर्माभिरते तथैव ।
वैश्ये च कृष्याभिरते वसामि
शूद्रे च शुश्रूषणनित्ययुक्ते ॥ २०

नारायणे त्वेकमना वसामि
[1]सर्वेण भावेन शरीरभूता ।
तस्मिन् हि धर्मस्सुमहान् निविष्टो
ब्रह्मण्यता चात्र तथा प्रियत्वम् ॥ २१

1. ख—पादषट्कं नास्ति

नाहं शरीरेण वसामि देवि
नैवं मया शक्यमिहाभिधातुम् ।
यस्मिंस्तु भावेन वसामि पुंसि
स वर्धते धर्मयशोर्थकामैः ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[ अस्मिन्नध्याये २२ श्लोकाः ]

---

## ॥ षोडशोऽध्यायः ॥

---

भीष्मेण युधिष्ठिरं प्रति कृतघ्नस्य प्रायश्चित्तविषये दृष्टान्ततया वत्सनाभमुनिचरित्रकथनम् ॥

---

युधिष्ठिरः—

प्रायश्चितं कृतघ्नानां प्रतिब्रूहि पितामह ।
मातापितॄन् गुरूंश्चैव येऽवमन्यन्ति मोहिताः ॥ १
ये चाप्यन्ये परे तात कृतघ्ना निरपत्रपाः ।
तेषां गतिं महाबाहो श्रोतुमिच्छामि तत्त्वतः ॥ २

भीष्मः—

कृतघ्नानां गतिस्तात नरके शाश्वतीस्समाः ॥ २॥
मातापितृगुरूणां च ये न तिष्ठन्ति शासने ।

क्रिमिकीटपिपीलेषु जायन्ते स्थावरेषु च ॥ ३॥
दुर्लभो हि पुनस्तेषां मानुष्ये पुनरुद्भवः ॥ ४
अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ॥ ४॥
वत्सनाभो महाप्राज्ञो महर्षिस्संशितव्रतः ।
वल्मीकभूतो ब्रह्मर्षिस् तप्यते सुमहत्तपः ॥ ५॥
तस्मिंश्च तप्यति तपो वासवो भरतर्षभ ।
ववर्ष सुमहद्वर्षं सविद्युत्स्तनयित्नुमान ॥ ६॥
तत्र सप्ताहवर्षं तु मुमुचे पाकशासनः ।
निमीलिताक्षस्तद्वर्षं प्रत्यगृह्णीत वै द्विजः ॥ ७॥
तस्मिन् पतति वर्षे तु शीतवातसमन्विते ।
विशीर्णध्वस्तशिखरो वल्मीकोऽशनिताडितः ॥ ८॥
ताड्यमाने ततस्तस्मिन् वत्सनाभे महात्मनि ।
कारुण्यात्तस्य धर्मस्त्वम् आनृशंस्यमथाकरोत् ॥ ९॥
चिन्तयानस्य ब्रह्मर्षिं तपन्तमतिधार्मिकम् ।
अनुरूपा मतिः क्षिप्रम् उपजाता स्वभावजा ॥ १०॥
स्वं रूपं माहिषं कृत्वा सुमहान्तं मनोहरम् ।
त्राणार्थं वत्सनाभस्य चतुष्पादुपरि स्थितः ॥ ११॥
यदा त्वपगतं वर्षं वृष्टिवातसमन्वितम् ।
ततो माहिषरूपी स धर्मो धर्मभृतां वर ॥ १२॥

शनैर्वल्मीकमुत्सृज्य प्राद्रवद्भरतर्षभ ॥ १३

स्थितेऽस्मिन् वृष्टिसम्पाते रक्षितस्स महातपाः ॥ १३॥

दिशस्सुविपुलास्तत्र गिरीणां शिखराणि च ।
दृष्ट्वा च पृथिवीं सर्वां सलिलेन परिप्लुताम् ॥ १४॥

जलाशयान् स तान् दृष्ट्वा विप्रः प्रमुदितोऽभवत् ॥ १५

अचिन्तयद्विस्मितश्च वर्षात् केनाभिरक्षितः ।
ततोऽपश्यत्तं महिषम् अवस्थितमदूरतः ॥ १६

तिर्यग्योनावपि कथं दृश्यते धर्मवत्सलः ।
अतो नु भद्रं महिषश् शिलापट्ट इव स्थितः ॥ १७

पीवरश्चैव शूल्यश्च बहुमांसो भवेदयम् ॥ १७॥

तस्य बुद्धिरियं जाता धर्मसंसक्तिजा मुनेः ।
कृतघ्ना नरकं यान्ति ये तु विश्वासघातिनः ॥ १८॥

निष्कृतिं नैव पश्यामि कृतघ्नानां कथञ्चन ।
ऋते प्राणपरित्यागम् धर्मज्ञानां वचो यथा ॥ १९॥

अकृत्वा भरणं पित्रोर् अदत्त्वा गुरुदक्षिणाम् ।
कृतघ्नतां च सम्प्राप्य मरणान्ता च निष्कृतिः ॥ २०॥

आकाङ्क्षायामुपेक्षायां चोपपातकमुत्तमम् ।
तस्मात् प्राणान् परित्यक्ष्ये प्रायश्चित्तार्थमित्युत ॥ २१॥

स मेरुशिखरं गत्वा निस्सङ्गेनान्तरात्मना ।
प्रायश्चित्तं कर्तुकामश् शरीरं त्यक्तुमुद्यतः ॥ २२॥
निगृहीतश्च धर्मात्मा हस्ते धर्मेण धर्मवित् ॥ २३

धर्मः—

वत्सनाभ महाप्राज्ञ बहुवर्षशतायुषः ।
परितुष्टोऽस्मि त्यागेन निस्सङ्गेन तथाऽऽत्मनः ॥ २४
एवं धर्मभृतस्सर्वे विमृशन्ति तथा कृतम् ।
न स कश्चिद्वत्सनाभो यस्य नोपहृतं मनः ॥ २५
यश्चानवद्यश्चरति शक्तो धर्मे तु सर्वशः ।
निवर्तस्व महाप्राज्ञ भूतात्मा ह्यसि शाश्वतः ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[ अस्मिन्नध्याये २६ श्लोकाः ]

---

## ॥ सप्तदशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति स्त्रीपुंसयोः समायोगे स्त्रिया एव सुखाधिक्ये संवादतया भङ्गाश्वनोपाख्यानकथनम् ॥

युधिष्ठिरः—

स्त्रीपुंसयोस्सम्प्रयोगे स्पर्शः कस्याधिको भवेत् ।
एतन्मे संशयं राजन् यथावद्वक्तुमर्हसि ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
भङ्गाश्वनेन शक्रस्य यथा वैरमभूत् पुरा ॥ २

पुरा भङ्गाश्वनो नाम राजर्षिरतिधार्मिकः ।
अपुत्रस्स नरव्याघ्रः पुत्रार्थे यज्ञमाहरत् ॥ ३

[1]अग्निष्टुन्नाम राजर्षिर् इन्द्रद्विष्टो महाबलः ।
प्रायश्चित्तेषु मर्त्यानां पुत्रकामस्य चेष्यते ॥ ४

इन्द्रो ज्ञात्वा तु तं यज्ञं तथाऽऽगत्य सुरेश्वरः ।
अन्तरं तस्य राजर्षेर् अन्विच्छत् प्रयतात्मनः ॥ ५

कस्य चित्त्वथ कालस्य मृगयामटते नृपः ।
इदमन्तरमित्येव शक्रो नृपममोहयत् ॥ ६

1. ख—इदमन्तरमित्येव शक्रो नृपममोहयत् । [अधिकः पाठः]

एकाश्वेन च राजर्षिर् भ्रान्त इन्द्रेण मोहितः ।
न दिशो विन्दति नृपः क्षुत्पिपासार्दितस्तदा ॥ ७

इतश्चेतश्च वै धावञ् श्रमतृष्णार्दितो नृप ।
सरोऽपश्यत् सुरुचिरं पूर्णं परमवारिणा ॥ ८

सोऽवगाह्य [1]सरस्तात पाययामास वाजिनम् ॥ ८॥

अथ पीतोदकं सोऽश्वं बद्ध्वा वृक्षे नृपोत्तमः ।
अवगाह्य ततस्स्नातो राजा स्त्रीत्वमवाप ह ॥ ९॥

आत्मानं स्त्रीकृतं दृष्ट्वा व्रीडितो नृपसत्तमः ।
चिन्तानुगतसर्वात्मा व्याकुलेन्द्रियमानसः ॥ १०॥

आरोहिष्ये कथं त्वश्वं कथं यास्यामि वै पुरम् ॥ ११

अग्निष्टुं नाम इष्टं मे पुत्राणां शतमौरसम् ।
जातं महाबलानां वै तान् प्रवक्ष्यामि किं न्वहम् ॥ १२

दारेषु चास्मदीयेषु पौरजानपदेषु च ।
मृदुत्वं च तनुत्वं च पराधीनत्वमेव च ॥ १३

हावभावादिलावण्यान् स्त्रीगुणाढ्या कुतूहलम् ॥ १३॥

स्त्रीगुणा ऋषिभिः प्रोक्ता धर्मतत्त्वार्थदर्शिभिः ।
व्यायामः कर्कशत्वं च वीर्यं च पुरुषे गुणाः ॥ १४॥

पौरुषं विप्रनष्टं मे स्त्रीत्वं केनापि मेऽभवत् ।

---

1. क-घ—पय

स्त्रीभावात् कथमश्वं तं पुनरारोढुमुत्सहे ॥ १५॥
महता त्वथ खेदेन आरुह्याश्वं नराधिपः ।
पुनरायात् पुरं तात स्त्रीभूतो नृपसत्तमः ॥ १६॥
पुत्रदाराश्च भृत्याश्च पौरजानपदाश्च ते ।
किं न्विदं त्विति विज्ञाय विस्मयं परमं गताः ॥ १७॥
अथोवाच स राजर्षिस् स्त्रीभूतो वदतां वरः ॥ १८

राजा—

मृगयां चास्मि निर्यातो बलैः परिवृतो दृढम् ।
उद्भ्रान्तः प्राविशं घोराम् अटवीं क्षुद्विमोहितः ॥ १९
अटव्यां च सुघोरायां तृष्णार्तो नष्टचेतनः ।
सरस्सुरुचिरप्रख्यम् अपश्यं पक्षिभिर्वृतम् ॥ २०
तत्रावगाढस्त्रीभूतो व्यक्तं दैवान्न संशयः ।
अतृप्त एव पुत्राणां दाराणां च धनस्य च ॥ २१

भीष्मः—

उवाच पुत्रांश्च ततस् स्त्रीभूतः पार्थिवोत्तमः ॥ २१॥

राजा—

सम्प्रीत्या भुज्यतां राज्यं वनं यास्यामि पुत्रकाः ॥ २२

भीष्मः—

स पुत्राणां शतं राजा अभिषिच्य वनं गतः ।
तां चाश्रमे स्त्रियं तात तापसोऽभ्यवपद्यत ॥ २३

तापसेनास्य पुत्राणाम् आश्रमेष्वभवच्छतम् ।
अथ सा तान् सुतान् गृह्य पूर्वपुत्रानभाषत ॥ २४

तापसी—

पुरुषत्वे सुता यूयं स्त्रीत्वे चेमे शतं सुताः ।
एकत्र भुज्यतां राज्यं भ्रातृभावेन पुत्रकाः ॥ २५

भीष्मः—

सहिता भ्रातरस्तेऽथ राज्यं बुभुजिरे तदा ॥ २५॥

तान् दृष्ट्वा भ्रातृभावेन भुञ्जानान् राज्यमुत्तमम् ।
चिन्तयामास देवेन्द्रो मन्युनाऽभिपरिप्लुतः ॥ २६॥

उपकारोऽस्य राजर्षेः कृतो नापकृतं मया ॥ २७

ततो ब्राह्मणवेषेण देवराजश्शतक्रतुः ।
भेदयामास तान् गत्वा नगरेषु नृपात्मजान् ॥ २८

इन्द्रः—

[1]भ्रातॄणां नास्ति सौभ्रात्रं येऽप्येकस्य पितुस्सुताः ।
राज्यहेतोर्विवदिताः काश्यपस्य सुरासुराः ॥ २९

यूयं भङ्गाश्वनापत्यं तापसस्येतरे सुताः ।
युष्माकं पैतृकं राज्यं भुज्यते तापसात्मजैः ॥ ३०

भीष्मः—

इन्द्रेण भेदितास्ते तु युद्धेऽन्योन्यमपातयन् ।
तच्छ्रुत्वा तापसी चापि सन्तप्ता भृशदुःखिता ॥ ३१

---

1. क-घ—अर्धचतुष्टयं नास्ति

पुनर्ब्राह्मणवेषेण तामिन्द्रोऽथान्वपृच्छत ॥ ३१॥

इन्द्रः—

केन दुःखेन सन्तापं करोषि त्वं वरानने ॥ ३२

भीष्मः—

ब्राह्मणं तु ततो दृष्ट्वा सा स्त्री वचनमब्रवीत् ॥ ३२॥

तापसी—

पुत्राणां द्वे शते ब्रह्मन् कालेन विनिपातिते ॥ ३३

अहं राजाऽभवं विप्र तत्र पुत्रशतं मया ।

समुत्पन्नं सुरूपाणां विक्रान्तानां द्विजोत्तम ॥ ३४

कदाचिन्मृगयाश्रान्त उद्भ्रान्तो गहने वने ।

सरोऽहमवगाढश्च स्त्रीभूतो द्विजसत्तम ॥ ३५

पुत्रान् राज्ये प्रतिष्ठाप्य वनमस्मि ततो गतः ॥ ३५॥

स्त्रियाश्च मे पुत्रशतं तापसेन महात्मना ।

आश्रमे जनितं ब्रह्मन् नीतास्ते नगरं प्रति ॥ ३६॥

तेषां च वैरमुत्पन्नं दैवयोगेन वै द्विज ।

एतच्छोचामि विप्रेन्द्र दैवेनाभिपरिप्लुता ॥ ३७॥

भीष्मः—

इन्द्रस्तां दुःखितां दृष्ट्वा अब्रवीत् परुषं वचः ॥ ३८

इन्द्रः—

पुरा सुदुस्सहं भद्रे मम दुःखं त्वया कृतम् ।

इन्द्रद्विष्टेन यजता मामनादृत्य कर्मणा ॥ ३९

इन्द्रोऽहमस्मि दुर्बुद्धे वैरं ते यातितं मया ॥ ३९॥

भीष्मः—

इन्द्रं दृष्ट्वा तु राजर्षिः पादयोश्शिरसा गतः ॥ ४०

भङ्गाश्वनः—

प्रसीद त्रिदशश्रेष्ठ पुत्रकामेन स क्रतुः ।

इष्टस्त्रिदशशार्दूल तत्र मे क्षन्तुमर्हसि ॥ ४१

भीष्मः—

प्रणिपातेन तस्येन्द्रः परितुष्टो वरं ददौ ॥ ४१॥

इन्द्रः—

पुत्रा वै कतमे राजञ् जीवन्तु तव शंस मे ।

स्त्रीभूतस्य हि ये जाताः पुरुषस्याथ येऽभवन ॥ ४२॥

भीष्मः—

तापसी तु ततश्शक्रम् उवाच प्रयताञ्जलिः ॥ ४३

तापसी—

स्त्रीभूतस्यैव ये जातास् तेऽमी जीवन्तु वासव ॥ ४३॥

भीष्मः—

इन्द्रस्तु विस्मितो हृष्टस् स्त्रियं पप्रच्छ तां पुनः ॥ ४४

इन्द्रः—

पुरुषोत्पादिता ये ते कथं द्वेष्यास्सुतास्तव ।

स्त्रीभूतस्य च ये जातास् तेभ्यस्ते ह्यधिकाः कथम ॥ ४५

कारणं श्रोतुमिच्छामि तन्मे त्वं वक्तुमर्हसि ॥ ४५॥

तापसी—

स्त्रियास्त्वभ्यधिकस्स्नेहो न तथा पुरुषस्य वै ।
तस्मात्ते शक्र जीवन्तु ये जातास्स्त्रीकृतस्य वै ॥ ४६॥

भीष्मः—

एवमुक्ते ततस्त्विन्द्रः प्रीतो वाक्यमुवाच ह ॥ ४७

इन्द्रः—

सर्व एवेह जीवन्तु पुत्रास्ते सत्यवादिनः ॥ ४७॥
वरं च वृणु राजेन्द्र यं त्वमिच्छसि सुव्रत ।
पुरुषत्वमथ स्त्रीत्वं मत्तो यदभिकाङ्क्षितम् ॥ ४८॥

तापसी—

स्त्रीत्वमेव वृणे शक्र प्रसन्ने त्वयि वासव ॥ ४९

भीष्मः—

एवमुक्तस्तु देवेन्द्रस् तां स्त्रियं प्रत्युवाच ह ॥ ४९॥

इन्द्रः—

पुरुषत्वं कथं त्यक्त्वा स्त्रीत्वं रोचयसे विभो ॥ ५०

भीष्मः—

एवमुक्तः प्रत्युवाच स्त्रीभूतो राजसत्तमः ॥ ५०॥

तापसी—

स्त्रियाः पुरुषसंयोगे प्रीतिरभ्यधिका सदा ।

एतस्मात् कारणादेव स्त्रीत्वमेव वृणोम्यहम् ॥ ५१॥
रमामि चाधिकं स्त्रीत्वे सत्यं वै देवसत्तम ।
स्त्रीभावेन च तुष्टोऽस्मि गम्यतां त्रिदशाधिप ॥ ५२॥

भीष्मः—

एवमस्त्विति चोक्त्वा ताम् आपृच्छ्य त्रिदिवं ययौ ।
एवं स्त्रिया महाराज अधिका प्रीतिरुच्यते ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[ अस्मिन्नध्याये ५३॥ श्लोकाः ]

---

## ॥ अष्टादशोऽध्यायः ॥

---

भीष्मेण युधिष्ठिरं प्रति मनोवाक्कायरूपकरणैर्दुष्कर्मपरित्यागपूर्वकं शुभकर्मकरणस्य भगवत्प्रसादहेतुत्वोक्तिः ॥

---

युधिष्ठिरः—

किं कर्तव्यं मनुष्येण लोकयात्राहितार्थिना ।
श्रेयः परं मनुष्येन्द्र किंशीलश्च समाचरेत् ॥ १

भीष्मः—

देवे नारायणे भक्तिश् शङ्करे साधुपूजया ।

ध्यानेनाथ जपः कार्यस् स्वधर्मे शुचिचेतसा ॥ २

कायेन त्रिविधं चापि वाचा चापि चतुर्विधम् ।
मनसा त्रिविधं चापि शुभं कर्म फलं चरेत् ॥ ३

प्राणातिपातं स्तेनत्वं परदाराभिमर्शनम् ।
त्रीणि पापानि कायेन सर्वतः परिवर्जयेत् ॥ ४

असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा ।
एतानि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत् ॥ ५

अनभिध्या परस्वेषु सर्वभूतेषु सौहृदम् ।
कर्मणां फलमस्तीति त्रिविधं मनसा चरेत् ॥ ६

तस्माद्वाक्कायमनसा नाचरेदशुभं नरः ।
शुभान्येवाचरँल्लोके भक्तो नारायणस्य हि ॥ ७

तस्यैव तु पदं सूक्ष्मं प्रसादादश्नुयात् परम् ॥ ७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[ अस्मिन्नध्याये ७॥ श्लोकाः ]

---

## ॥ एकोनविंशोऽध्यायः ॥

युधिष्ठिरेण भीष्मं प्रति श्रुतधर्माननूद्य प्राणिनां सांसारिकदुःखानुवर्णनपूर्वकं स्वस्य संसारनिर्वेदनिवेदनेन पुनर्विस्तरेण वैष्णवधर्मकथनप्रार्थना ॥ १ ॥ भीष्मेण युधिष्ठिरं प्रति ब्रह्मादिसर्वजगतामनित्यत्वादिकथनपूर्वकं नारायणस्य नित्यत्वादिकथनेन तदुपासनविधानम् ॥ २ ॥

युधिष्ठिरः—

चित्तं मे दूयते तात लोके परमविन्दतः ॥ ॥

अशाश्वतमिदं सर्वं जगत् स्थावरजङ्गमम् ।
ऋते नारायणं पुण्यं प्रतिभाति पितामह ॥ १॥

नारायणो हि विश्वात्मा पुरुषः पुष्करेक्षणः ।
तस्यास्य देवकीसूनोश् श्रुतं कृत्स्नं त्वयाऽनघ ॥ २॥

भीष्मः—

युधिष्ठिर महाप्राज्ञ मया दृष्टं च सङ्गरे ॥ ३

युधिष्ठिरः—

त्वत्त एव तु राजेन्द्र राजधर्माश्च पुष्कलाः ॥ ३॥

श्रुतं पुराणमखिलं नारदेन निवेदितम् ।
गुह्यं नारायणाख्यानं त्रिविधक्लेशनाशनम् ॥ ४॥

एकान्तिधर्मनियमास् समासव्यासकल्पिताः ।
कथिता वै महाभाग त्वया वै मदनुग्रहात् ॥ ५॥

लोकरक्षणकर्तृत्वं तस्यैव हरिमेधसः ।
आतिथेयविधिश्चैव तपांसि नियमाश्च ये ॥ ६॥
वेदवादप्रसिद्धाश्च वाजपेयादयो मखाः ।
यज्ञा द्रविणनिष्पाद्या अग्निहोत्रानुपालिताः ॥ ७॥
जपयज्ञाश्च विविधा ब्राह्मणानां तपस्विनाम् ।
एकादशविधाः प्रोक्ता हविर्यज्ञा द्विजातिनाम् ॥ ८॥
तेषां फलविशेषाश्च उञ्छधर्मास्तथैव च ।
अहन्यहनि ये प्रोक्ता महायज्ञा द्विजातिनाम् ॥ ९॥
वेदश्रवणधर्माश्च ब्रह्मयज्ञफलं तथा ।
वेदव्रतविधानं च नियमाश्चैव वैदिकाः ॥ १०॥
स्वाहा स्वधा प्रणीते च इष्टापूर्तफलं तथा ।
उत्तरोत्तरसेवायाम् आश्रमाणां च यत् फलम् ॥ ११॥
प्रत्येकशश्च निष्ठायाम् आश्रमाणां महामते ।
मासपक्षोपवासानां सम्यगुक्तं फलं च यत् ॥ १२॥
[1]अनाशितानां ये लोका ये च पञ्चतपा नराः ।
वीराध्वानं प्रपन्नानां [2]या गतिश्चाग्निहोत्रिणाम् ॥ १३॥
[3]ग्रीष्मे पञ्चतपानां च शिशिरे जलचारिणाम् ।

---

1. क-घ—पर्णाशितानां अ—अनाश्रितानां
2. अ—इतः षट् पादा न सन्ति 3. ख—इदमर्धं नास्ति

वर्षे स्थण्डिलशायीनां फलं यत् परिकीर्तितम् ॥ १४॥
लोके चक्रचराणां च द्विजानां यत् फलं स्मृतम् ।
अन्नादीनां च दानानां यत् फलं परिकीर्तितम् १५॥
सर्वतीर्थाभिषिक्तानां नराणां च फलोदयः ।
राज्ञां धर्माश्च ये लोके सम्यक् पालयतां प्रजाः ॥ १६॥
ये च सत्यव्रता लोके ये च तीर्थे कृतश्रमाः ।
मातापितृपरा ये च गुरुवृत्तीश्च संश्रिताः ॥ १७॥
गोब्राह्मणपरित्राणे राष्ट्रातिक्रमणे तथा ।
त्यजन्त्यभिमुखाः प्राणान् निर्भयास्सत्त्वमाश्रिताः ॥ १८॥
सहस्रदक्षिणानां च या गतिर्ददतां वर ।
ये च संध्यामुपासन्ते सम्यगुक्ता महाव्रताः ॥ १९॥
तथा योगविधानं च यद्ग्रन्थेष्वभिशब्दितम् ।
वेदाद्याश्श्रुतयश्चापि श्रुता मे कुरुसत्तम ॥ २०॥
सिद्धान्तनिर्णयाश्चापि द्वैपायनमुखोद्गताः ।
श्रुताः पञ्च महायागा येषु सर्वं प्रतिष्ठितम् ॥ २१॥
तत्प्रभेदेषु ये धर्मास् तेऽपि वै कृत्स्नशश्श्रुताः ।
न च दूषयितुं शक्यास् सद्भिरुक्ता हि ते तथा ॥ २२॥
एतेषां किल धर्माणां उत्तमो वैष्णवो विधिः ।
रक्षते भगवान् विष्णुर् भक्तमात्मशरीरवत् ॥ २३॥

कर्मणो हि कृतस्येह कामितस्य द्विजोत्तमैः ।
फलं ह्यवश्यं भोक्तव्यम् ऋषिर्द्वैपायनोऽब्रवीत् ॥ २४॥

भोगान्ते चापि पतनं गतिः पूर्वं प्रभाषिता ।
न मे प्रीतिकरास्त्वेते विषोदर्का हि मे मताः ॥ २५॥

वधात् कष्टतरं मन्ये गर्भवासं महाद्युते ॥ २६
दिष्टान्ते यानि दुःखानि पुरुषो विन्दते विभो ।
ततः कष्टतराणीह गर्भवासे हि विन्दति ॥ २७

ततश्चाभ्यधिकां तीव्रां वेदनां लभते नरः ।
गर्भोपक्रमणे तात कर्मणामुपसर्पणे ॥ २८

तस्मान्मे निश्चयो जातो धर्मेष्वेतेषु भारत ॥ २८॥

तदिच्छामि कुरुश्रेष्ठ त्वत्प्रसादान्महामते ।
तं धर्मं चेह वेत्तुं वै यो जराजन्ममृत्युहा ॥ २९॥

येनोष्णोदा वैतरणी असिपत्रवनं च तत् ।
कुण्डानि चाग्नितप्तानि क्षुरधारापथस्तथा ॥ ३०॥

शाल्मलीं च महाघोराम् आयसीं घोरकण्टकाम् ॥ ३१

मातापितृकृते चापि सुहृन्मित्रार्थकारणात् ।
आत्महेतोश्च पापानि कृतानीह नरैश्च यैः ॥ ३२
तेषां फलोदयं कष्टम् ऋषिर्द्वैपायनोऽब्रवीत् ॥ ३२॥

कुम्भीपाकप्रदीप्तानां शूलार्तानां च क्रन्दताम् ।

रौरवे क्षिप्यमाणानां प्रहारैर्मथितात्मनाम् ॥ ३३॥

स्तनतामपकृत्तानां पिबतामात्मशोणितम् ।
तेषामेवं प्रवदतां कारुण्यं नास्ति यन्त्रतः ॥ ३४॥

तृष्णाशुष्कोष्ठकण्ठानां विह्वलानामचेतसाम् ।
सर्वदुःखाभितप्तानां रुजार्तानां च क्रोशताम् ॥ ३५॥

वेदनार्ता हि क्रन्दन्ति पूरयन्तो दिशो दश ॥ ३६

एकः करोति पापानि सह भोज्यानि बान्धवैः ।
तेषामेकः फलं भुङ्क्ते कष्टे वैवस्वतक्षये ॥ ३७

येन नैतां गतिं गच्छेन् स विण्मूत्रास्थिपिच्छिले ।
विष्टामूत्रक्रिमीमध्ये बहुजन्तुनिषेविते ॥ ३८

को गर्भवासान् परतो नरकोऽन्यो विधीयते ॥ ३८॥

[1-2]मात्राहारकृता यात्रा विष्टामूत्रेण सम्पदा ।
को गर्भवासान् परतो नरकोऽन्यो विधीयते ॥ ३९॥

यत्र वासकृतो योगः कुक्षौ वासो विधीयते ॥ ४०

जाते विस्तीर्णदुःखस्स्याद् भवेदविगतज्वरः ।
न चैष लभ्यते कामो जातमात्रं हि मानवम् ॥ ४१

आविशन्तीह दुःखानि मनोवाक्कायिकानि तु ॥ ४१॥

तैरस्वतन्त्रो भवति पीड्यमानो भयानकैः ।

---

1. ख—इदमाद्यर्धंद्वयं नास्ति 2. क-घ—यत्ता

तैर्गर्भवासं गच्छेत ह्यवशो जायते तथा ॥ ४२॥

अवशश्चेहते जन्तुर् व्रजत्यवश एव तु ।
[1]जरसा रूपविध्वंसं प्राप्नोत्यवश एव तु ॥ ४३॥

शरीरभेदमाप्नोति जीर्यतेऽवश एव तु ।
एवं ह्यनियतो मृत्युर् भवत्येव सदा नृप ॥ ४४॥

गर्भेषु म्रियते कश्चिज् जायमानस्तथाऽपरः ।
जाता म्रियन्ते बहवो यौवनस्थास्तथाऽपरे ॥ ४५॥

मध्यभावे तु नश्यन्ति स्थविरो मृत एव तु ॥ ४६

को जन्मनो नोद्विजते स्वयम्भूरपि यो भवेत् ।
कुतस्त्वस्मद्विधस्तात मरणस्य वशानुगः ॥ ४७

नित्याविष्टो भयेनाहं मनसा कुरुसत्तम ।
मुहूर्तमप्यहं शर्म न विन्दामि महामते ॥ ४८

कालात्मनि तिरोभूतो नित्यं तद्गुणवर्जितः ॥ ४८॥

अन्नैर्बहुविधैः पुष्टं वस्त्रैर्नानाविधैर्वृतम् ।
चन्दनागरुदिग्धाङ्गं मणिमुक्ताविभूषितम् ॥ ४९॥

यानैर्बहुविधैर्यातम् एकान्तेनैव लालितम् ॥ ५०

यौवनोद्धतरूपाभिर् मदविह्वलगामिभिः ।
इष्टाभिरभिरामाभिर् वरस्त्रीभिश्च यन्त्रितम् ॥ ५१

1. क-ख—अर्धषट्कं नास्ति

रक्षितं सुचिरं कालं शरीरममितप्रभम् ॥
अवितृप्ता भविष्यन्ति हित्वा प्राणांस्तथाऽपरे ॥ ५२
स्वर्गोऽप्यनियता भूमिस् तथैवाकाशसंश्रये ।
देवाऽप्यधिष्ठानवशास् तस्माद्देवं न कामये ॥ ५३
कामानां नास्त्यधिष्ठानम् अकामस्तु निवर्तते ।
[1]लोकसङ्ग्रहधर्मोस्तु सर्व एव न संशयः ॥ ५४
डोलासधर्मान् धर्मज्ञ ऋषिर्द्वैपायनोऽब्रवीत् ।
कस्मात् को विषमं दुःखम् आरोहेत विचक्षणः ॥ ५५
विद्यमाने समे मार्गे डोलाधर्मविवर्जिते ।
को ह्यात्मानं प्रियं लोके डोलासाधर्म्यतां नयेत् ॥ ५६
चराचरैस्सर्वभूतैर् गन्तव्यमविशङ्कया ।
अस्माल्लोकात् परं लोकम् अपाथेयमदेशिकम् ॥ ५७
घोरं तमः प्रवेष्टव्यम् अत्रातारमबान्धवम् ॥ ५७॥
ये तु तं किल धर्मज्ञा धर्मं नारायणेरितम् ।
अनन्यमनसो दान्तास् स्मरन्ति नियतव्रताः ॥ ५८॥
ततस्तेन च पश्यन्ति प्राप्नुवन्ति परं पदम् ।
रक्षते भगवान् विष्णुर् भक्तानात्मशरीरवत् ॥ ५९॥
कुलालचक्रप्रतिमे भ्राम्यमाणेषु जन्तुषु ।

1. क-ब—अर्धचतुष्टयं नास्ति

मातापितृसहस्राणि सम्प्राप्तानि मया गुरो ॥ ६०॥
स्नेहापन्नेन पीतास्तु मातॄणां विविधास्तनाः ॥ ६१
पुत्रदारसहस्राणि इष्टानिष्टशतानि च ।
प्राप्तान्यधिष्ठानवशाद् अतीतानि तथैव च ॥ ६२
न कचिच्च सुखं प्राप्तं न कचिच्छाश्वती गतिः ॥ ६२॥
स्थानैर्महद्भिर्विभ्रंशो दुःखलब्धैः पुनः पुनः ।
धननाशश्च सम्प्राप्तो लब्ध्वा दुःखेन तद्धनम् ॥ ६३॥
अध्वगानामिव पथि च्छायामाश्रित्य सङ्गमः ॥ ६४
एवं कर्मवशो लोको ज्ञातीनां हितसङ्गमः ।
विश्रम्य च पुनर्याति कर्मभिर्दर्शितां गतिम् ॥ ६५
एतदीदृशकं दृष्ट्वा [1]ज्ञात्वा चैव समागमम् ।
को न बिभ्येत् कुरुश्रेष्ठ विष्ठान्नस्येव भोजनात् ॥ ६६
बुद्धिश्च मे समुत्पन्ना वैष्णवे धर्मविस्तरे ।
तदेष शिरसा पादौ गतोऽस्मि भगवंस्तव ॥ ६७
शरणं च प्रपन्नोऽस्मि [2]गन्ता ते चरणे ध्रुवे ॥ ६७॥
जन्ममृत्युजराखिन्नस् त्रिभिर्दुःखैर्निर्पीडितः ।

---

1. क-घ—ज्ञानिना सह सङ्गमम्

2. क-घ—गम्तव्ये शरणद्रुमम    ख—हन्तव्ये शरणे ध्रुवे

इच्छामि भवता त्रातुम् एभ्यस्त्वत्तो महा[1]मते ॥ ६८॥

तस्याद्य युगधर्मस्य श्रवणात् कुरुपुङ्गव ।

एतदाद्ययुगोद्भूतं त्रेतायां तत्तिरोहितम् ॥ ६९॥

स एव धर्ममखिलम् ऋषिर्द्वैपायनोऽब्रवीत्* ॥ ७०

भीष्मः—

सदृशं राजशार्दूल वृत्तस्य च कुलस्य च ॥ ७०॥

को राज्यं विपुलं गृह्य स्फीताकारपुरं महत् ।

निर्जितारातिसामन्तं देवराज्योपमं सुखम् ॥ ७१॥

राज्ये राज्यगुणा ये च तान् व्युदस्य नराधिप ।

दोषं पश्यसि राजेन्द्र दोषेऽस्मिन् पञ्चविंशकः ॥ ७२॥

अतिक्रान्तास्त्वया राजन् वृत्तेन प्रपितामहाः ।

धर्मो विग्रहवान धीरो विदुरश्च महायशाः ॥ ७३॥

[2]सञ्जयश्च महातेजा ये चान्ये दिव्यदर्शनाः ।

प्रवृत्तज्ञानसम्पन्नास् तत्त्वज्ञानविदो नृप ॥ ७४॥

अतिक्रान्ता महाराज ब्रह्माद्यास्ससुरासुराः ॥ ७५

अनित्यं दुःखसन्तप्तं जगदेतन्न संशयः ॥ ७५॥

एवमेतान् महाबाहो ब्रह्माद्यान् ससुरासुरान् ।

---

1. अ-ख—मुने

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

2. क-घ—अर्धचतुष्टयं नास्ति

अनित्यान् सततं पश्य मनुष्यादिषु का कथा ॥ ७६॥

नित्यां तु प्रकृतीमाहुर् याऽसौ प्रसवधर्मिणी ॥ ७७

अरूपिणीमनिर्देश्याम् अकृतां पुरुषातिगाम् ।
तामत्यन्तसुखां सौम्यां निर्वृणामिति संज्ञिताम् ॥ ७८

आहुर्ब्रह्मर्षयो ह्याद्यां भुवि चैव महर्षयः ॥ ७८॥

तया पुरुषरूपिण्या धर्मप्रकृतिकोऽनघ ।
स यात्येव हि निर्वाणं यत्तत् प्रकृतिसंज्ञितम् ॥ ७९॥

स एव प्राकृतो धर्मो भ्राजत्यादियुगे नृप ।
विकारधर्माश्शेषेषु युगेषु भरतर्षभ ॥ ८०॥

भ्राजन्तेऽभ्यधिकं वीर संसारपथगोचराः ॥ ८१

प्रकृतीनां च सर्वासाम् अकृता प्रकृतिस्स्मृता ।
एवं प्रकृतिधर्मा हि वराः प्रकृतिमाश्रिताः ॥ ८२

तदाहुः परमां लोके दृष्टादृष्टानुदर्शिनीम् ॥ ८२॥

सत्त्वादियुगपर्यन्ते त्रेतायुगसमुद्भवे ।
कामं कामयमानेषु ब्राह्मणेषु तिरोहितः ॥ ८३॥

कुपथेषु तु धर्मेषु प्रादुर्भूतेषु कौरव ।
जातो मन्दप्रचारो हि धर्मः कलियुगे नृप ॥ ८४॥

इत्येतद्विष्णुमाश्रित्य संसारग्रहमोक्षणम् ।
कथितं ते महाबाहो किं भूयश्श्रोतुमिच्छसि ॥ ८५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[ अस्मिन्नध्याये ८५॥ श्लोकाः ]

---

## ॥ विंशोऽध्यायः ॥

---

भीष्मेण युधिष्ठिरं प्रति तत्वसृष्ट्यादिप्रतिपादकनारदसनत्कुमारसंवादानुवादः ॥ १ ॥ सनत्कुमारेण नारदं प्रति प्रलयप्रकारादिकथनम् ॥ २ ॥ तथा भूतादिनिरूपणम् ॥ ३ ॥

---

युधिष्ठिरः—

क्लिश्यमानेषु भूतेषु यतिर्मरणसागरे ।
यत् प्राप्य क्लेशं नाप्नोति तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
सनत्कुमारस्य सतस् संवादं नारदस्य च ॥ २

सनत्कुमारो भगवान् ब्रह्मपुत्रो महायशाः ।
पूर्वजातास्त्रयस्तस्य कथ्यन्ते ब्रह्मवादिनः ॥ ३

सनकस्सनन्दनश्चैव तृतीयश्च सनातनः ।
जातमात्राश्च ते सर्वे प्रतिबुद्धा इति श्रुतिः ॥ ४
चतुर्थश्चैव तेषां स भगवान् योगवित्तमः ।
सनत्कुमार इति वै कथयन्ति महर्षयः ॥ ५
हैरण्यगर्भस्स मुनिर् वसिष्ठः पञ्चमस्स्मृतः ।
षष्ठस्स्थाणुस्स भगवान् अमेयात्मा त्रिशूलधृक् ॥ ६
ततोऽपरे समुत्पन्नाः पावका दारुणे क्रतौ ।
मनसा स्वयम्भुवो ह्रीमे मरीचिप्रमुखास्तथा ॥ ७
भृगुर्मरीचेरनुजो भृगोरप्यङ्गिरास्तथा ।
अनुजोऽङ्गिरसोऽथात्रिः पुलस्त्योऽत्रेस्तथाऽनुजः ॥ ८
पुलस्त्यस्यानुजो विद्वान् पुलहो नु महा[1]द्युतिः ।
पठ्यन्ते ब्रह्मजा ह्येते विद्वद्भिरमितौजसः ॥ ९
सर्वमेतन्महाराज कुर्वन्नादिगुरुर्महान् ।
प्रभुर्विभुरनन्तश्रीर् ब्रह्मा लोकपितामहः ॥ १०
मूर्तिमन्तोऽमृतीभूतास् तेजसाऽतितपोन्विताः ।
सनकप्रभृतयस्तत्र ये च प्राप्ताः परं पदम् ॥ ११
कृत्स्नक्षयमनुप्राप्य विमुक्ता मूर्तिबन्धनात् ॥ ११॥
सनत्कुमारस्तु विभुर् योगमास्थाय योगवित् ।

1. क-घ—क्रतुः

त्रीँल्लोकानचरच्छश्वद् ऐश्वर्येण परेण हि ॥ १२॥
रुद्रश्चाप्यष्टगुणितं योगं प्राप्तो महायशाः ॥ १३
सूक्ष्ममष्टगुणं राजन्नितरे नृपसत्तम ।
मरीचिप्रमुखास्तात सर्वे सृष्ट्यर्थमेव ते ॥ १४
नियुक्ता राजशार्दूल तेषां सृष्टिं शृणुष्व मे ॥ १४॥
सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः ।
सर्वे वेदेषु चैवोक्ताः खिलेषु च न संशयः ॥ १५॥
इतिहासे पुराणे च श्रुतिरेषा सनातनी ।
ब्राह्मणान् वरदानेतान् प्राहुर्वेदान्तपारगाः ॥ १६॥
एतेषां पितरस्तात पुत्रा इत्यनुचक्षते ॥ १७
गणास्सप्त महाराज मूर्तयोऽमूर्तयस्तथा ।
पितॄणां चैव राजेन्द्र पुत्रा देवा इति श्रुतिः ॥ १८
दैवैर्व्याप्ता इमे लोका इत्येवमनुशुश्रुम ॥ १८॥
कृष्णाद्द्वैपायनाच्चैव देवस्थानात्तथैव च ।
[1]देवलाच्च नरश्रेष्ठ काश्यपाच्च मया श्रुतम् ॥ १९॥
गौतमादथ कौण्डिन्याद् भरद्वाजात्तथैव च ।
मार्कण्डेयात्तथैवैतद् ऋषेर्देवमतात्तथा ॥ २०॥
पित्रा च मम राजेन्द्र श्राद्धकाले प्रभाषितम् ।

1. अ—इदमर्धद्वयं नास्ति

परं रहस्यं वेदान्तं प्रियं हि परमात्मनः ॥ २१॥

अतः परं प्रवक्ष्यामि यन्मां पृच्छसि भारत ।
तदिहैकमनोबुद्धिश् शृणुष्वावहितो नृप ॥ २२॥

स्वायम्भुवस्य संवादं नारदस्य च धीमतः ॥ २३

सनत्कुमारो भगवान् दिवि जज्वाल तेजसा ।
अङ्गुष्ठमात्रो भूत्वा वै विचचार महाद्युतिः ॥ २४

स कदाचिन्महाभागो मेरुपृष्ठं समागमत् ।
नारदेन नरश्रेष्ठ मुनिना ब्रह्मवादिना ॥ २५

जिज्ञासमानावन्योन्यं सकाशे ब्रह्मणस्ततः ।
ब्रह्मभावगतौ तात परमार्थविचिन्तकौ ॥ २६

मतिमान् मतिमच्छ्रेष्ठं बुद्धिमान् बुद्धिमत्तरम् ।
क्षेत्रवित् क्षेत्रविच्छ्रेष्ठं ज्ञानविज्ञानवित्तमम् ॥ २७

सनत्कुमारं तत्त्वज्ञं भगवन्तमरिन्दम ।
लोकविल्लोकविच्छ्रेष्ठम् आत्मविच्चात्मवित्तमम् ॥ २८

सर्ववेदार्थकुशलं सर्वशास्त्रविशारदम् ॥ २८॥

साङ्ख्ययोगं च यो वेद पाणावामलकं यथा ।
नारदोऽथ मुनिश्रेष्ठं तं पप्रच्छ महाद्युतिः ॥ २९॥

नारदः—

त्रयोविंशतितत्त्वस्य अव्यक्तस्य महामुने ।
प्रभवं चाप्ययं चैव श्रोतुमिच्छामि तत्त्वतः ॥ ३०॥

अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
कालसङ्ख्यां च सर्गं च स्रष्टारं पुरुषं प्रभुम् ॥ ३१॥

यं विश्वमुपजीवन्ति येन सर्वमिदं ततम् ।
यं प्राप्य न निवर्तन्ते तद्भवान् वक्तुमर्हति ॥ ३२॥

सनत्कुमारः—

यं विश्वमुपजीवन्ति यमाहुः पुरुषं परम् ।
तं वै शृणु महाबुद्धे नारायणमनामयम् ॥ ३३॥

एष नारायणो नाम यं विश्वमुपजीवति ।
एष स्रष्टा विधाता च [1]हर्ता पालयिता प्रभुः ॥ ३४॥

प्राप्यैनं न निवर्तन्ते यतयोऽध्यात्मचिन्तकाः ।
एतावदेव वक्तव्यं मया नारद पृच्छते ॥ ३५॥

परं न वेद्मि तत्सर्गं यावांश्चायं यथाऽप्यहम् ।
श्रूयतामानुपूर्व्येण नव सर्गान् प्रयत्नतः ॥ ३६॥

यथा कालपरीमाणं तत्त्वानामृषिसत्तम ।
अध्यात्ममधिभूतं च अधिदैवं तथैव च ॥ ३७॥

---

1. क-घ—भ

कालसङ्ख्यां च सर्गं च सर्वमेव महामुने ॥ ३८

तमसः कुर्वतस्सर्गं तामसो ह्यभिधीयते ।
ब्रह्मविद्भिर्द्विजैर्नित्यं नित्यमध्यात्मचिन्तकैः ॥ ३९

पर्यायनामान्येतस्य कथयन्ति मनीषिणः ।
तानि ते सम्प्रवक्ष्यामि तदिहैकमनाश्शृणु ॥ ४०

महार्णवोऽर्णवश्चैव सलिलं च गुणास्तथा ।
वेदास्तपश्च यज्ञाश्च धर्माश्च भगवान् विभुः ॥ ४१

प्राणस्संवर्तकोऽग्निश्च व्योम कालस्तथैव च ।
नामान्येतानि ब्रह्मर्षे शरीरस्येश्वरस्य वै ॥ ४२

कीर्तितानि द्विजश्रेष्ठ मया शास्त्रानुमानतः ॥ ४२॥

चतुर्युगसहस्राणि चतुर्युगमरिन्दम ।
प्राहुः कल्पसहस्रं वै ब्राह्मणास्तत्त्वदर्शिनः ॥ ४३॥

दशकल्पसहस्राणि अव्ययस्य महानिशा ।
तथैव दिवसं प्राहुर् योगास्साङ्ख्याश्च तत्त्वतः ॥ ४४॥

निशां सुप्तोऽथ भगवान् क्षपान्ते प्रत्यबुध्यत ।
पश्चाद्बुद्ध्वा ससर्जापस् तासु वीर्यमवासृजत् ॥ ४५॥

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥ ४६

अण्डं कृत्वा ततस्तस्मिन् ससर्ज प्रभुरीश्वरः ।
हिरण्यगर्भं विश्वात्मा ब्रह्माणं जलजान्मुनिम् ॥ ४७

भूतभव्यभविष्यस्य कर्तारमनघं विभुम् ।
मूर्तिमन्तं महात्मानं विश्वशम्भुं स्वयम्भुवम् ॥ ४८

अणिमा लघिमा प्राप्तिर् ईशानो ज्योतिषां वरः ।
चक्रे निरोधं भगवान् एतत् कृत्वा महायशाः ॥ ४९

एतस्यापि निशामाहुर् वेदवेदाङ्गपारगाः ।
पञ्चकल्पसहस्राणि अहरेतावदेव च ॥ ५०

स सर्गं कुरुते ब्रह्मा तामसस्यानुपूर्व्यशः ।
सृजतेऽहं त्वहङ्कारं परमेष्ठिनमव्ययम् ॥ ५१

अहङ्कारेण वै लोका व्याप्तास्साहङ्कृतेन वै ।
येनाविष्टानि भूतानि मज्जन्त्यव्यक्तसागरे ॥ ५२

देवर्षिदानवनरा यक्षगन्धर्वकिन्नराः ।
उन्मज्जन्ति निमज्जन्ति ऊर्ध्वाधस्तिर्यगेव च ॥ ५३

एतस्यापि निशामाहुस् तृतीयामथ कुर्वतः ।
त्रीणि कल्पसहस्राणि अहरेतावदेव तु ॥ ५४

अहङ्कारस्तु सृजति महाभूतानि पञ्च वै ।
पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ॥ ५५

एतेषां गुणतत्त्वानि पञ्च प्राहुर्द्विजातयः ।
शब्दे स्पर्शे च रूपे च रसे गन्धे तथैव च ॥ ५६

गुणेष्वेतेष्वभिरताः पङ्कलग्ना इव द्विपाः ।

नोत्तिष्ठन्त्यवशीभूतास् सक्ता अव्यक्तसागरे ॥ ५७
एतेषामिह वै सर्गं चतुर्थमिह कुर्वतः ।
चतुर्युगसहस्रे वै अहोरात्रास्तथैव च ॥ ५८
अनन्त इति विख्यातः पञ्चमस्सर्ग उच्यते ।
इन्द्रियाणि दशैकं च यथाश्रुतिनिदर्शनात् ॥ ५९
मनस्सर्वमिदं तात विश्वं सर्वमिदं जगत् ।
न तथाऽन्यानि भूतानि बलवन्ति यथा मनः ॥ ६०
एतस्यापि हि वै सर्गं षष्ठमाहुर्द्विजातयः ।
अहः कल्पसहस्रं वै रात्रिरेतावती तथा ॥ ६१
ऊर्ध्वस्रोतस्तु वै सर्गं सप्तमं ब्रह्मणो विदुः ।
अष्टमं चाप्यधस्स्रोतस् तिर्यक्तु नवमस्स्मृतः ॥ ६२
एतानि नव सर्गाणि तत्त्वानि च महामुने ।
चतुर्विंशतितत्त्वानि तत्त्वसङ्ख्यानि तेऽनघ ॥ ६३
सर्वस्य प्रभवः पूर्वम् उक्तो नारायणः प्रभुः ।
अव्ययः प्रभवश्चैव अव्यक्तस्य महामुने ॥ ६४
प्रवक्ष्याम्यपरं तत्त्वं यस्य यस्येश्वरश्च यः ॥ ६४॥
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
यथाश्रुतं यथादृष्टं तत्त्वतो वै निबोध मे* ॥ ६५॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

अधस्स्रोतसि सर्गे च तिर्यक्स्रोतसि चैव हि ।
एताभ्यामीश्वरं विद्याद् ऊर्ध्वस्रोतस्तथैव च ॥ ६६॥

कर्मेन्द्रियाणां पञ्चानाम् ईश्वरो बुद्धिगोचरः ।
बुद्धीन्द्रियाणामथ तु ईश्वरो मन उच्यते ॥ ६७॥

मनसः पञ्चभूतानि सगुणान्याहुरीश्वरम् ।
भूतानामीश्वरं विद्याद् ब्रह्माणं परमेष्ठिनम् ॥ ६८॥

भवान् हि कुशलश्चैव धर्मेष्वेषु परेषु वै ।
कालाग्निरह्नः कल्पान्ते जगद्दहति चांशुभिः ॥ ६९॥

ततस्सर्वाणि भूतानि स्थावराणि चराणि च ।
महाभूतानि दग्धानि स्वां योनिं गमितानि वै ॥ ७०॥

कूर्मपृष्ठनिभा भूमिर् निर्दग्धकुशकण्टका ।
निर्वृक्षा निस्तृणा चैव दग्धा कालाग्निना तदा ॥ ७१॥

जगत् प्रलीनं जगति जगच्चाप्सु प्रलीयते ।
नष्टगन्धा तदा सूक्ष्मा जलमेवाभवत्तदा ॥ ७२॥

ततो मयूखजालेन सूर्यस्त्वापीयते जलम् ।
रसात्मा लीयते चार्के तदा ब्राह्मणसत्तम ॥ ७३॥

अन्तरिक्षगतान् भूतान् प्रदहत्यनलस्तदा ।
अग्निभूतं तदा व्योम भवतीत्यभिचक्षते ॥ ७४॥

तं तथा विष्फुरद्वह्निं वायुर्जरयते महान् ।
महता बलवेगेन आदत्ते तं हि भानुमान् ॥ ७५॥

वायोरपि गुणं स्पर्शम् आकाशं ग्रसते यदा ।
प्रशाम्यति ततो वायुः खं तु तिष्ठति नानदत् ॥ ७६॥

तस्य तं निनदं शब्दम् आदत्ते वै मनस्तदा ।
स शब्दगुणहीनात्मा तिष्ठते मूर्तिमांस्तु वै ॥ ७७॥

भुङ्क्ते स च तदा व्योम मनस्तात दिगात्मकम् ।
व्योमात्मनि विनष्टे तु सङ्कल्पात्मा विवर्धते ॥ ७८॥

सङ्कल्पात्मानमादत्ते चित्तं वै स्वेन तेजसा ।
चित्तं ग्रसत्यहङ्कारस् तदा वै मुनिसत्तम ॥ ७९॥

विनष्टे च तदा चित्ते अहङ्कारोऽभवन्महान् ।
अहङ्कारं तदाऽऽदत्ते महान् ब्रह्मा प्रजापतिः ॥ ८०॥

अभिमाने विनष्टे तु महान् ब्रह्मा विराजते ।
तं तदा त्रिषु लोकेषु मूर्तिष्वेवाग्रमूर्तिजम् ॥ ८१॥

येन विश्वमिदं कृत्स्नं निर्मितं वै गुणार्थिना ।
मूर्तिं [1]जलेश्वरमपि व्यवसायगुणात्मकम् ॥ ८२॥

ग्रसिष्णुर्भगवान् ब्रह्मा व्यक्ताव्यक्तमसंशयम् ॥ ८३

एषोऽव्ययस्य प्रलयो मया ते परिकीर्तितः ।

---

1. क-घ—वर

अध्यात्ममधिभूतं च अधिदैवं च श्रूयताम् ॥ ८४

आकाशः प्रथमं भूतं श्रोत्रमध्यात्मं शब्दोऽधिभूतं दिशोधिदैवतम् ॥ ८५

वायुर्द्वितीयं भूतं त्वगध्यात्मं स्पर्शोऽधिभूतं विद्युदधिदैवतं स्यात् ॥ ८६

ज्योतिस्तृतीयं भूतं चक्षुरध्यात्मं रूपमधिभूतं सूर्योऽधिदैवतं स्यात् ॥ ८७

[1]आपश्चतुर्थं भूतं जिह्वाऽध्यात्मं रसोऽधिभूतं [2]वरुणोऽधिदैवतं स्यात् ॥ ८८

पृथिवी पञ्चमं भूतं घ्राणमध्यात्मं गन्धोऽधिभूतं वायुरधिदैवतं स्यात् ॥ ८९

पाञ्चभौतिकमेतच्चतुष्टयमनुवर्णितम् ॥ ९०

अत ऊर्ध्वमिन्द्रियमनुवर्णयिष्यामः ॥ ९१

पादावध्यात्मं गन्तव्यमधिभूतं विष्णुरधिदैवतं स्यात् ॥ ९२

हस्तावध्यात्मं कर्तव्यमधिभूतमिन्द्रोऽधिदैवतं स्यात् ॥ ९३

पायुरध्यात्मं विसर्गोऽधिभूतं मित्रोऽधिदैवतं स्यात् ॥ ९४

---

1. अ—इदं नास्ति  2. क-ख – सोमोऽधि

उपस्थोऽध्यात्ममानन्दोऽधिभूतं प्रजापतिरधिदैवतं
स्यात् ॥ ९५

वागध्यात्मं वक्तव्यमधिभूतमग्निरधिदैवतं स्यात् ॥ ९६

[1]मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रमा अधिदैवतं
स्यात् ॥ ९७

अहङ्कारोऽध्यात्ममभिमानोऽधिभूतं विरिञ्चोऽधिदैवतं
स्यात् ॥ ९८

बुद्धिरध्यात्मं व्यवसायोऽधिभूतं ब्रह्माऽधिदैवतं स्यात् ॥
९९

एवमव्यक्तो भगवान् सकृत् कृत्स्नान् कुरुते संहरते
च ॥ १००

कस्मात् क्रीडार्थम् ॥ १०१

यथाऽऽदित्योंशुजालं क्षिपति संहरते च [2]एवमव्यक्तो
गुणान् सृजति संहरते च ॥ १०२

यथाऽर्णवादूर्मिमालानिचयश्चोर्ध्वमुत्तिष्ठते संहरते च ॥
१०३

[3]यथा चान्तरिक्षादभ्रकोशमुत्तिष्ठति स्तनितगर्जितोन्मि-
श्रं तद्वत्तत्रैव प्राणशत् ॥ १०४

---

1. घ—कोशे "मनोऽध्यात्ममिति" "अहङ्कार" इति "बुद्धिरध्यात्ममिति" वाक्यत्रयं नास्ति

2. क-घ—एतद्वाक्यं नास्ति 3. क-घ—इदं वाक्यं नास्ति

एवमव्यक्तो गुणान् सृजति संहरते च ॥ १०५

यथा कूर्मोऽङ्गानि कामात् प्रसारयते पुनश्च प्रवेशयति
एवमव्यक्तो लोकान् प्रकाशयते प्रवेशयते च ॥ १०६

एवं चेतनश्च भगवान् पञ्चविंशकश्शुचिस्तेनाधिष्ठिता
प्रकृतिश्चेतयति नित्यं सहधर्मा च ॥ १०७

भगवतोऽव्यक्तस्य क्रियावतोऽक्रियावतश्च प्रकृतिः
क्रियावानजरामरः क्षेत्रज्ञो नारायणाख्यः पुरुषः ॥ १०८

भीष्मः—

इत्येतन्नारदायोक्तं कुमारेण च धीमता ।
एतच्छ्रुत्वा द्विजो राजन् सर्वयज्ञफलं लभेत् ॥ १०९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि विंशोऽध्यायः ॥ २० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि विंशोऽध्यायः ॥ २० ॥
[ अस्मिन्नध्याये ८५ श्लोकाः २४ वाक्यानि ]

---

## ॥ एकविंशोऽध्यायः ॥

ब्रह्मणा देवान् प्रति नारायणमहिमप्रतिपादकगरुडकश्यपसंवादानुवादः ॥ १ ॥ ब्रह्मणा देवान् प्रति गरुडस्य बदरीनारायणानुगमनादिप्रतिपादकगरुडमुनिगणसंवादानुवादः ॥ २ ॥ ब्रह्मणा देवान् प्रति श्रीनारायणमहिमप्रतिपादकगरुडमुनिगणसंवादानुवादः ॥ ३ ॥ बदरीनारायणेन गरुडं प्रति स्वमहिमोक्तिः ॥ ४ ॥ गरुडेन मुनिगणान् प्रति स्वानुभूतनारायणमहिमोक्तिः ॥ ५ ॥ भीष्मेण युधिष्ठिरं प्रति ब्रह्मणा देवान् प्रत्यनूदितसुपर्णोपाख्यानकथनसमापनम् ॥ ६ ॥

---

युधिष्ठिरः—

आत्मन्यग्नीन् समाधाय य एते कुरुनन्दन ।
द्विजातयो व्रतोपेता जपयज्ञपरायणाः ॥ १

यजन्त्यारम्भयज्ञैश्च मानसं यज्ञमास्थिताः ॥ १॥

अग्निभ्यश्च परं नास्ति येषामेषा व्यवस्थितिः ।
तेषां गतिर्महाप्राज्ञ कीदृशी किम्पराश्च ते ॥ २॥

एतदिच्छामि तत्त्वेन त्वत्तश्श्रोतुं पितामह ॥ ३

भीष्मः—

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
वैकुण्ठस्य च संवादं सुपर्णस्य च भारत ॥ ४

अमृतस्य समुत्पत्तौ देवानामसुरैस्सह ।

षष्टिर्वर्षसहस्राणि दैवासुरमवर्तत ॥ ५
तत्र देवास्तु दैतेयैर् वध्यन्ते भृशदारुणैः ।
त्रातारं नाधिगच्छन्ति वध्यमाना महासुरैः ॥ ६

आर्तास्ते देवदेवेशं प्रपन्नाश्शरणैषिणः ।
पितामहं महा[1]प्राज्ञं वध्यमानास्सुरेतरैः ॥ ७

ता दृष्ट्वा देवता ब्रह्मा सम्भ्रान्तेन्द्रियमानसः ।
वैकुण्ठं शरणं देवं प्रतिपेदे च तैस्सह ॥ ८

ततस्स देवैस्सहितः पद्मयोनिर्नरेश्वर ।
तुष्टाव प्राञ्जलिर्भूत्वा नारायणमनामयम् ॥ ९

ब्रह्मा—

त्वद्रूपचिन्तनान्नाम्नां स्मरणादर्चनादपि ।
तपोयोगादिभिश्चैव श्रेयो यान्ति मनीषिणः ॥ १०

भक्तवत्सल पद्माक्ष परमेश्वर पापहन् ।
परमात्माऽविकाराद्य नारायण नमोऽस्तु ते ॥ ११

नमस्ते सर्वलोकादे सर्वात्मामितविक्रम ।
सर्वभूतभविष्येश सर्वभूतमहेश्वर ॥ १२

देवानामपि देवस्त्वं सर्वविद्यापरायणः ।
जगद्बीजसमाहार जगतः परमो ह्यसि ॥ १३

---

1. क-ख—स्मानम्

त्रायस्व देवता वीर दानवाद्यैस्सुपीडिताः ।
लोकांश्च लोकपालांश्च ऋषींश्च जयतां वर ॥ १४

वेदास्साङ्गोपनिषदस् सरहस्यास्ससङ्ग्रहाः ।
सोङ्कारास्सवषट्काराः प्राहुस्त्वां यज्ञमुत्तमम् ॥ १५

पवित्राणां पवित्रं च मङ्गलानां च मङ्गलम् ।
तपस्विनां तपश्चैव दैवतं देवतास्वपि ॥ १६

भीष्मः—

एवमादिपुरस्कारैर् ऋक्सामयजुषां गणैः ।
वैकुण्ठं तुष्टुवुर्देवास् [1]समेत्य ब्रह्मणा सह ॥ १७

ततोऽन्तरिक्षे वागासीन्मेघगम्भीरनिस्वना ।
जेष्यध्वं दानवान् [2]यूयं मयैव सह सङ्गरे ॥ १८

ततो देवगणानां च दानवानां च युध्यताम् ।
प्रादुरासीन्महातेजाश् [3]शङ्खचक्रगदाधरः ॥ १९

सुपर्णपृष्ठमास्थाय तेजसा प्रदहन्निव ॥ १९॥
व्यधमद्दानवान् सर्वान् बाहुद्रविणतेजसा ॥ २०

तं समासाद्य समरे दैत्यदानवपुङ्गवाः ।
व्यनश्यन्त महाराज पतङ्गा इव पावकम् ॥ २१

स विजित्वाऽसुरान् सर्वान् दानवांश्च महामतिः ।

---

1. अ-ख—सर्वै ब्रह्मर्षिभिस्सह 2. क-घ—देवा
3. अ-ख-घ—शार्ङ्गचक्र

पश्यतामेव देवानां तत्रैवान्तरधीयत ॥ २२

तं दृष्ट्वाऽन्तर्हितं देवं विष्णुं देवामितद्युतिम् ।
विस्मयोत्फुल्लनयना ब्रह्माणमिदमब्रुवन् ॥ २३

देवाः—

भगवन् सर्वलोकेश सर्वलोकपितामह ।
इदमत्यद्भुतं वृत्तं त्वं नश्शंसितुमर्हसि ॥ २४

[1]दैवासुरेऽस्मिन् सङ्ग्रामे त्राता येन वयं प्रभो ।
एतद्विज्ञातुमिच्छामः कुतोऽसौ कश्च तत्त्वतः ॥ २५

कोऽयमस्मान् परित्राय तूष्णीमेव यथागतम् ।
प्रतिप्रयातो दिव्यात्मा तं नश्शंसितुमर्हसि ॥ २६

भीष्मः—

एवमुक्तस्सुरैस्सर्वैर् वचनं वचनार्थवित् ।
उवाच पद्मनाभस्य पूर्वरूपं प्रति प्रभो ॥ २७

ब्रह्मा—

न ह्येनं वेद तत्त्वेन भुवनं भुवनेश्वरम् ।
सङ्ख्यातुं नैव चात्मानं निर्गुणं गुणिनां वरम् ॥ २८

अत्र [2]वो वर्तयिष्यामि इतिहासं पुरातनम् ।
सुपर्णस्य च संवादम् ऋषीणां चापि देवताः ॥ २९

पुरा ब्रह्मर्षयश्चैव सिद्धाश्च भुवनेश्वरम् ।

1. क-ख—अर्धचतुष्टयं नास्ति 2. अ-ख—ते

आश्रित्य हिमवत्पृष्ठे चक्रिरे विविधाः कथाः ॥ ३०

तेषां कथयतां तत्र कथान्ते पततां वरः ।
प्रादुरासीन्महातेजा वाहश्चक्रगदाभृतः ॥ ३१

स तानृषीन् समासाद्य विनयावनताननः ।
अवतीर्य महावीर्यस् तानृषीनभिजग्मिवान् ॥ ३२

अभ्यर्चितस्स ऋषिभिस् स्वागतेन महाबलः ।
[1]उपाविशत तेजस्वी भूमौ वेगवतां वरः ॥ ३३

तमासीनं महात्मानं वैनतेयं महाद्युतिम् ।
ऋषयः परिपप्रच्छुर् महात्मानं तपस्विनः ॥ ३४

ऋषयः—

कौतूहलं वैनतेय परं नो हृदि वर्तते ।
तस्य नान्योऽस्ति वक्तेह त्वामृते पन्नगाशन ॥ ३५

तदाख्यातमिहेच्छामो भवता प्रश्नमुत्तमम् ॥ ३५॥

ब्रह्मा—

एवमुक्तः प्रत्युवाच प्राञ्जलिर्विनतासुतः ॥ ३६

गरुडः—

धन्योऽस्म्यनुगृहीतोऽस्मि यन्मां ब्रह्मर्षिसत्तमाः ।
प्रष्टव्यं प्रष्टुमिच्छन्ति प्रीतिमन्तोऽनसूयकाः ॥ ३७

---

1. ख—इदमर्धं नास्ति

किं मया ब्रूत वक्तव्यं कार्यं च वदतां वराः ।
यूयं हि मां यथायुक्तं सर्वे वै देष्टुमर्हथ ॥ ३८

ब्रह्मा—

नमस्कृत्वा ह्यनन्ताय ततस्ते हृदि सत्तमाः ।
प्रष्टुं प्रचक्रमुस्तत्र वैनतेयं महाबलम् ॥ ३९

ऋषयः—

देवदेवं महात्मानं नारायणमनामयम् ।
भवानुपास्ते वरदं कुतोऽसौ कश्च तत्त्वतः ॥ ४०

प्रकृतिर्विकृतिर्वाऽस्य कीदृशी क्व नु संस्थितिः ।
एतद्भवन्तं पृच्छामो देवोऽयं क्व कृतालयः ॥ ४१

एष भक्तप्रियो देवः प्रियभक्तस्तथैव च ।
त्वं प्रियश्चास्य [1]भक्तश्च नान्यः काश्यप विद्यते ॥ ४२

मुष्णन्निव मनश्चक्षूंष्यविभाव्यतनुर्विभुः ।
अनादिमध्यनिधनो न विद्मैनं कुतो ह्यसौ ॥ ४३

वेदेष्वपि च विश्वात्मा गीयते न च विद्महे ।
तत्त्वतस्तत्त्वभूतात्मा विभुर्नित्यस्सनातनः ॥ ४४

पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ।
गुणाश्चैषां यथासङ्ख्यं भावाभावौ तथैव च ॥ ४५

1. क-घ—भक्तानाम्

तमस्सत्त्वं रजश्चैव भावाश्चैव तदात्मकाः ।
मनो बुद्धिश्च तेजश्च बुद्धिगम्यानि तत्त्वतः ॥ ४६
जायन्ते तात तस्माद्धि तिष्ठते तेष्वसौ विभुः ॥ ४६॥

सञ्चिन्त्य बहुधा बुद्ध्या नाध्यवस्यामहे परम् ।
तस्य देवस्य तत्त्वेन तन्नश्शंस यथातथम् ॥ ४७॥

एतमेव परं प्रश्नं कौतूहलसमन्विताः ।
एवं भवन्तं पृच्छामस् तन्नश्शंसितुमर्हसि ॥ ४८॥

सुपर्णः—

स्थूलतो यस्तु भगवांस् तेनैव स्वेन हेतुना ।
त्रैलोक्यस्य तु रक्षार्थं दृश्यते रूपमास्थितः ॥ ४९॥

मया तु महदाश्चर्यं पुरा दृष्टं सनातने ।
देवे श्रीवत्सनिलये तच्छृणुध्वमशेषतः ॥ ५०॥

न स्म शक्यो मया वेत्तुं न भवद्भिः कथञ्चन ।
यथा मां प्राह भगवांस् तथा तच्छ्रूयतां मम ॥ ५१॥

मयाऽमृतं देवतानां मिषतामृषिसत्तमाः ।
हृतं विपाट्य तं मन्त्रं विद्राव्यामृतरक्षिणः ॥ ५२॥

देवता विमुखीकृत्य [1]सेन्द्रास्समरुतो मृधे ।
उन्मथ्याशु गिरींश्चैव विक्षोभ्य च महोदधिम् ॥ ५३॥

1. क—इतः अष्टौ पादा न सन्ति

तं दृष्ट्वा मम विक्रान्तं वागुवाचाशरीरिणी ॥ ५४

अशरीरिणी वाक्—

प्रीतोऽस्मि ते वैनतेय कर्मणाऽनेन सुव्रत ।
अवृथा तेऽस्तु मद्वाक्यं ब्रूहि किं करवाणि ते ॥ ५५

सुपर्णः—

तामेवंवादिनीं वाचम् अहं प्रत्युक्तवांस्तदा ।
ज्ञातुमिच्छामि कस्त्वं हि ततो मे दास्यसे वरम् ॥ ५६
प्रकृतिर्विकृतिर्वा त्वं देवो वा दानवोऽपि वा ॥ ५६॥
ततो जलदगम्भीरं प्रहस्य गदतां वरः ।
उवाच वरदः प्रीतः काले त्वं माऽभिवेत्स्यसि ॥ ५७॥
वाहनं भव मे साधु वरं दद्मि तवोत्तमम् ।
न ते वीर्येण सदृशः कश्चिल्लोके भविष्यति ॥ ५८॥
पतङ्ग पततां श्रेष्ठ न देवो नापि दानवः ।
मत्सखित्वमनुप्राप्तो दुर्धर्षश्च भविष्यसि ॥ ५९॥
तमब्रवं देवदेवं मामेवंवादिनं परम् ।
प्रयतः प्राञ्जलिर्भूत्वा प्रणम्य शिरसा विभुम् ॥ ६०॥
एवमेतन्महाबाहो सर्वमेतद्भविष्यति ।
वाहनं ते भविष्यामि यथा वदति मां भवान् ॥ ६१॥
मम चापि महाबुद्धे निश्चयं श्रूयतामिति ।

ध्वजस्तेऽहं भविष्यामि रथस्थस्य न संशयः ॥ ६२॥
तथाऽस्त्विति स मामुक्त्वा भूयः प्राह महामनाः ।
न ते गतिविघातोऽद्य भविष्यत्यमृतं विना ॥ ६३॥
एवं कृत्वा तु समयं देवदेवस्सनातनः ।
मामुक्त्वा साधयस्वेति यथाऽभिप्रायतो गतः ॥ ६४॥
ततोऽहं कृतसंवादस् तेन केनापि सत्तमाः ।
कौतूहलसमाविष्टः पितरं काश्यपं गतः ॥ ६५॥
सोऽहं पितरमासाद्य प्रणिपत्याभिवाद्य च ।
सर्वमेतद्यथातथ्यम् उक्तवान् पितुरन्तिके ॥ ६६॥
श्रुत्वा तु भगवान् मह्यं ध्यानमेवान्वपद्यत ।
स मुहूर्तमिव ध्यात्वा मामाह वदतां वरः ॥ ६७॥
धन्योऽस्म्यनुगृहीतोऽस्मि यत्त्वं तेन महात्मना ।
संवादं कृतवांस्तात गुह्येन परमात्मना ॥ ६८॥
स्थूलं दृश्यस्स भगवांस् तेन तेनैव हेतुना ।
दृश्यतेऽव्यक्तरूपस्थः प्रधानं प्रभवोऽव्ययः ॥ ६९॥
मया हि स महातेजा नान्ययोगसमाधिना ।
तपसोग्रेण तेजस्वी तोषितस्तपसां निधिः ॥ ७०॥
ततो मे दर्शयामास तोषयन्निव पुत्रक ।
श्वेतपीतारुणनिभः कद्रूकपिलपिङ्गलः ॥ ७१॥

रक्तनीलासितनिभस् सहस्रोदरपाणिमान् ।
द्विसाहस्रमहावक्त्र एकाक्षश्शतलोचनः ॥ ७२॥

अनिष्यन्दा निराहारास् समानास्सूर्यतेजसा ।
तमुपासन्ति परमं गुह्यमक्षरमव्ययम् ॥ ७३॥

समासाद्य तु तं विश्वम् अहं मूर्ध्ना प्रणम्य च ।
ऋग्यजुस्सामभिस्स्तुत्वा शरण्यं शरणं गतः ॥ ७४॥

महामेघौघघोरेण स्वरेण जयतां वरः ।
आभाष्य पुत्र पुत्रेति इदमाह धृतं वचः ॥ ७५॥

त्वयाऽभ्युदयकामेन तपश्चीर्णं महामुने ।
अमुक्तस्त्वं न मां सङ्गैर् अविमुक्तोऽद्य पश्यसि ॥ ७६॥

यदा सङ्गैर्विमुक्तश्च गतमोहो गतस्पृहः ।
भविष्यसि तदा ब्रह्म मामनुध्यास्यसे द्विज ॥ ७७॥

ऐकान्तिकीं मतिं कृत्वा मद्भक्तो मत्परायणः ।
ज्ञास्यसे मां ततो ब्रह्मन् वीतमोहश्च तत्त्वतः ॥ ७८॥

तेन त्वं कृतसंवादस् स्वतस्सर्वहितैषिणा ।
विश्वरूपेण देवेन पुरुषेण महात्मना ॥ ७९॥

तमेवाराधय क्षिप्रं तमाराध्य न सीदसि ॥ ८०

सोऽहमेवं भगवता पित्रा ब्रह्मर्षिसत्तमाः ।

अनुनीतो यथान्यायं स्वमेव भवनं गतः ॥ ८१

सोऽहमामन्त्र्य पितरं तद्भावगतमानसः ।
स्वमेवालयमासाद्य तमेवार्थमचिन्तयम् ॥ ८२

तद्भावगतभावात्मा तद्भूतगतमानसः ।
गोविन्दं चिन्तयन्नासे शाश्वतं परमव्ययम् ॥ ८३

[1]धृतं बभूव हृदयं नारायणदिदृक्षया ॥ ८३॥

सोऽहं वेगं समास्थाय मनोमारुतवेगवान् ।
रम्यां विशालां बदरीं गतो नारायणाश्रमम् ॥ ८४॥

ततस्तत्र हरिं दृष्ट्वा जगतः प्रभवं विभुम् ।
गोविन्दं पुण्डरीकाक्षं प्रणतश्शिरसा हरिम् ॥ ८५॥

ऋग्यजुस्सामभिश्चैनं तुष्टाव परया मुदा ॥ ८६

अथापश्यं सुविपुलम् अश्वत्थं देवसंश्रयम् ॥ ८६॥

चतुर्द्विगुणपीनांसश् शङ्खचक्रगदाधरः ।
प्रादुर्बभूव पुरुषः पीतवासा[2]स्सनातनः ॥ ८७॥

मध्याह्नार्कप्रतीकाशस् तेजसा भासयन् दिशः ॥ ८८

संस्तुतस्संविदं कृत्वा व्रजेति श्रेयसे रतः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिः
1. क-घ—धृतिर्बभूव हृदये
2. क-घ—जनार्दनः

प्रागुदीचीं दिशं देवः प्रतस्थे पुरुषोत्तमः ॥ ८९

दिशश्च विदिशश्चैव भासयन् स्वेन तेजसा ॥ ८९॥

तमहं पुरुषं दिव्यं व्रजन्तममितौजसम् ।
अनुवव्राज वेगेन शनैर्गच्छन्तमव्ययम् ॥ ९०॥

योजनानां सहस्राणि षष्टिमष्टौ तथा शतम् ।
तथा शतसहस्रं च शतं द्विगुणमेव च ॥ ९१॥

स गत्वा दीर्घमध्वानम् अपश्यमहमद्भुतम् ।
महान्तं पावकं दीप्तम् अर्चिष्मन्तमनिन्धनम् ॥ ९२॥

शतयोजनविस्तीर्णं तस्माद्द्विगुणमायतम् ।
विवेश स महायोगी पावकं पावकद्युतिः ॥ ९३॥

तत्र शम्भुस्तपस्तेपे महादेवस्सहोमया ।
स तेन संविदं कृत्वा पावकं समतिक्रमत् ॥ ९४॥

श्रमाभिभूतेन मया कथञ्चिदनुगम्यते ॥ ९५

गत्वा स दीर्घमध्वानं भास्करेणावभासितम् ।
अभास्करममर्यादं विवेश सुमहत्तमः ॥ ९६

अथ दृष्टिः प्रतिहता मम तत्र बभूव ह ।
यथास्वभावं भूतात्मा विवेश स महाद्युतिः ॥ ९७

ततोऽहमभवं मूढो जडान्धबधिरोपमः ।
दिशश्च विदिशश्चैव न विजज्ञे तमोवृतः ॥ ९८

अविजानन्नहं किञ्चित् तस्मिंस्तमसि संवृते ।
सुसम्भ्रान्तेन मनसा व्यथां परमिकां गतः ॥ ९९
सोऽहं प्रपन्नश्शरणं देवदेवं सनातनम् ।
प्राञ्जलिर्मनसा भूत्वा वाक्यमेतत्तदोक्तवान् ॥ १००
भगवन् भूतभव्येश भवद्भूतकृदव्यय ।
शरणं सम्प्रपन्नं मां त्रातुमर्हस्यरिन्दम ॥ १०१
अहं तु तत्त्वजिज्ञासुः कोऽसि कस्यासि कुत्र वा ।
सम्प्राप्तः पदवीं देव स मां सन्त्रातुमर्हसि ॥ १०२
आविर्भूतः पुराणात्मा मामेहीति सनातनः ॥ १०२॥
ततोऽपरान्ततो देवो विश्वस्य गतिरात्मवान् ।
मोहयामास मां तत्र दुर्विभाव्य[1]वपुर्विभुः ॥ १०३॥
स्वभावमात्मनस्तत्र दर्शयन् स्वयमात्मना ।
श्रमं मे जनयामास भयं चाभयदः प्रभुः ॥ १०४॥
खिन्न इत्येव मां मत्वा भगवानव्ययोऽच्युतः ।
शब्देनाश्वासयामास जगाहे च तमो महत् ॥ १०५॥
अहं च खेदानुगतश् श्रमाच्चलपदश्चरन् ।
मनसा देवदेवेशं ध्यातुं समुपचक्रमे ॥ १०६॥
तथा गतं तु मां ज्ञात्वा भगवानमितद्युतिः ।

1. क-घ—र्गतिर्विभुः

तमः प्रणाशयामास ममानुग्रहकाङ्क्षया ॥ १०७॥

ततः प्रनष्टे तमसि तमहं दीप्ततेजसम् ।
अपश्यं तेजसा व्याप्तं मध्याह्न इव भास्करम् ॥ १०८॥

स्वयम्प्रभांश्च पुरुषान् स्त्रियश्च परमाद्भुताः ।
अपश्यमहमव्यग्रस् तस्मिन् देशे सहस्रशः ॥ १०९॥

न तत्र द्योतते सूर्यो नक्षत्राणि तथैव च ।
[1]न तत्र चन्द्रमा भाति न वायुर्वाति पांसुलः ॥ ११०॥

तत्र तूर्याण्यनेकानि गीतानि मधुराणि च ।
अदृश्यानि मनोज्ञानि श्रूयन्ते सर्वतोदिशम् ॥ १११॥

स्रवन्ति वैडूर्यलताः पद्मोत्पलझषाकुलाः ।
मुक्तासिकतवप्राश्च सरितो निर्मलोदकाः ॥ ११२॥

अगतिस्तत्र देवानाम् असुराणां तथैव च ।
गन्धर्वनागयक्षाणां राक्षसानां तथैव च ॥ ११३॥

स्वयम्प्रभास्तत्र नरा दृश्यन्तेऽद्भुतदर्शनाः ।
येषां न देवतास्तुल्याः प्रभाभिर्भासितात्मनाम् ॥ ११४॥

स च [2]तानप्यतिक्रम्य दैवतैरपि पूजितः ।
विवेश ज्वलनं दीप्तम् अनिन्धनमनौपमम् ॥ ११५॥

ज्वालाभिर्मां प्रविष्टं च ज्वलन्तं सर्वतोदिशम् ।

1. ख—अर्धसप्तकं नास्ति 2. क-घ—तत्राप्यहं देवो

दैत्यदानवरक्षोभिर् दैवतैश्चापि दुस्सहम् ॥ ११६॥
ज्वालामालिनमासाद्य तमग्निमहमव्ययम् ।
अविषह्यतमं मत्वा मनसेदमचिन्तयम् ॥ ११७॥
मया हि समरेष्वग्निर् अनेकेषु महाद्युतिः ।
प्रविष्टश्चापविद्धश्च न च मां दग्धवान् क्वचित् ॥ ११८॥
अयं च दुस्सहश्शश्वत् तेजसाऽतिहुताशनः ।
अत्यादित्यप्रकाशार्चिर् अनलो दीप्यते महान् ॥ ११९॥
स तथा दह्यमानोऽपि तेजसा दीप्तवर्चसा ।
प्रपन्नश्शरणं देवं शङ्खचक्रगदाधरम् ॥ १२०॥
भक्तश्चानुगतश्चेति त्रातुमर्हसि मां विभो ।
यथा मां न दहेदग्निस् सद्यो देव तथा कुरु ॥ १२१॥
एवं विलपमानस्य ज्ञात्वा मे वचनं प्रभुः ।
मा भैरिति वचः प्राह मेघगम्भीरनिस्वनः ॥ १२२॥
स मामाश्वास्य वचनं प्राहेदं भगवान् विभुः ॥ १२३

श्रीभगवान्—

मम त्वं विदितस्सौम्य यथावत्तत्त्वदर्शने ।
ज्ञापितश्चापि यत् पित्रा तच्चापि विदितं महत् ॥ १२४
वैनतेय न कस्यापि अहं वेद्यः कथञ्चन ।
मां हि विन्दन्ति विद्वांसो ये ज्ञाने परिनिष्ठिताः ॥ १२५

निर्ममा निरहङ्कारा निराशीर्बन्धनायुताः ॥ १२५॥
भवांस्तु सततं भक्तो मन्मनाः पक्षिसत्तम ।
स्थूलं मां वेत्स्यसे तस्माज् जगतः कारणे स्थितम् * ॥ १२६॥

सुपर्णः—

एवं दत्ताभयस्तेन ततोऽहमृषिसत्तमाः ।
नष्टखेदश्रमभयः क्षणेन ह्यभवं तदा ॥ १२७॥

स शनैर्याति भगवान् [1]गत्या लघुपराक्रमः ।
अहं तु सुमहावेगम् आस्थायानुव्रजामि तम् ॥ १२८॥

स गत्वा दीर्घमध्वानम् आकाशममितद्युतिः ।
मनसाऽप्यगमं देशम् आससादात्मतत्त्ववित् ॥ १२९॥

अथ देवस्समासाद्य मनसस्सदृशं जवम् ।
मोहयित्वा च मां तत्र क्षणेनान्तरधीयत ॥ १३०॥

तत्राम्बुधरधीरेण भोशब्देनानुनादिना ।
अयं भोऽहमिति प्राह वाक्यं वाक्यविशारदः ॥ १३१॥

शब्दानुसारी तु ततस् तं देशमहमाव्रजम् ।
[2]तत्रापश्यं ततश्चाहं श्रीमद्धंसयुतं सरः ॥ १३२॥

स तत् सरस्समासाद्य भगवानात्मवित्तमः ।
भोशब्दप्रतिसृष्टेन स्वरेणाप्रतिवादिना ॥ १३३॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिः

1. क-घ—सत्यं लघु ख—सत्यो 2. क-घ—अर्धपञ्चकं नास्ति

विवेश देवस्त्वां योनिं मामिदं चाभ्यभाषत ॥ १३४

श्रीभगवान्—

विशस्व सलिलं सौम्य सुखमत्र वसामहे ॥ १३४॥

सुपर्णः—

ततश्च प्राविशं तत्र सह तेन महात्मना ।
दृष्टवानद्भुततरं तस्मिन् सरसि भास्वताम् ॥ १३५॥

अग्नीनां सुप्रणीतानाम् इद्धानामिन्धनैर्विना ।
दीप्तानामाज्यसिक्तानां स्थानेष्वर्चिष्मतां सदा ॥ १३६॥

दीप्तिस्तेषामनाज्यानां प्राप्ताज्यानामिवाभवत् ।
अनिद्धानामिव सताम् इद्धानामिव भास्वताम् ॥ १३७॥

अथाहं वरदं देवं नापश्यं तत्र सङ्गतम् ।
ततस्सम्मोहमापन्नो विषादमगमं परम् ॥ १३८॥

अपश्यं चाग्निहोत्राणि शतशोऽथ सहस्रशः ।
विधिना सम्प्रणीतानि धिष्ण्येष्वाज्यवतां तदा ॥ १३९॥

असम्मृष्टतलांश्चैव वेदीन् कुसुमसंस्तृतान् ।
कुशपद्मोत्पलासङ्गान् कलशांश्च हिरण्मयान् ॥ १४०॥

[1]अग्निहोत्राणि चित्राणि शतशोऽथ सहस्रशः ।
अग्निहोत्रोपयोग्यानि यानि द्रव्याणि कानिचित् ॥ १४१॥

तानि चात्र समृद्धानि दृष्टवानस्म्यनेकशः ॥ १४२

1. अ—इदमर्धं नास्ति

मनोहृद्यतमश्चात्र सुरभिः पुण्यलक्षणः ।
आज्यगन्धो मनोग्राही घ्राणचक्षुस्सुखावहः ॥ १४३

तेषां तत्राग्निहोत्राणाम् ईडितानां सहस्रशः ।
समीपे त्वद्भुततमम् अपश्यमहमव्ययम् ॥ १४४

चन्द्रांशुकाशशुभ्राणां तुषारोद्भेदवर्चसाम् ।
विमलादित्यभासानां स्थण्डिलानि सहस्रशः ॥ १४५

दृष्टान्यग्निसमीपे तु [1]द्युतिमन्ति महान्ति च ।
एषु चाग्निसमीपेषु शुश्राव सुपदाक्षराः ॥ १४६

प्रभावान्तरितानां तु प्रस्पष्टाक्षरभाषिणाम् ।
ऋग्यजुस्सामगानां च मधुरास्सुस्वरा गिरः ॥ १४७

सुसम्मृष्टतलैस्तैस्तु बृहद्भिर्दीप्ततेजसैः ॥
पावकैः पावितात्माऽहम् अभवं लघुविक्रमः ॥ १४८

ततोऽहं तेषु धिष्ण्येषु ज्वलमानेषु यज्वनाम् ।
तं देशं प्रणमित्वाऽथ अन्वेष्टुमुपचक्रमे ॥ १४९

तान्यनेकसहस्राणि परीयंस्तु महाजवात् ।
अपश्यमानस्तं देवं ततोऽहं व्यथितोऽभवम् ॥ १५०

ततस्तेष्वग्निहोत्रेषु ज्वलत्सु विमलार्चिषु ।
भानुमत्सु न पश्यामि देवदेवं सनातनम् ॥ १५१

---

1. ख-घ—अयं पादोऽनन्तरश्च न स्तः

ततोऽहं तानि दीप्तानि परीय व्यथितेन्द्रियः ।
नान्तं तेषां प्रपश्यामि येनाहमिह चोदितः ॥ १५२
एवं चिन्तासमापन्नः प्रध्यातुमुपचक्रमे ॥ १५२॥
ततश्चिन्तयतो मह्यं मोहेनाविष्टचेतसः ।
[1]महाञ् शब्दः प्रादुरासीत् सुभृशं मे व्यथाकरः ॥ १५३॥
तथाऽहं सहसा तत्र शृणोमि विपुलध्वनिम् ।
अपश्यं च सुपर्णानां सहस्राण्ययुतानि च ॥ १५४॥
अभ्यद्रवन्त मामेव विपुलद्युतिरंहसः ।
तेषामहं प्रभावेण सर्वथैवापरोऽभवम् ॥ १५५॥
सोऽहं समन्तात् तैस्सर्वैस् सुपर्णैरमितौजसैः ।
दृष्ट्वाऽऽत्मानं परिगतं सम्भ्रमं परमं गतः ॥ १५६॥
विनयावनतो भूत्वा नमश्चक्रे महात्मने ।
अनादिनिधनार्यैभिर् नामभिः परमात्मने ॥ १५७॥
नारायणाय शुद्धाय शाश्वताय ध्रुवाय च ।
[2]भूतभव्यभवेशाय शिवाय शिवमूर्तये ॥ १५८॥
शिवयोनेश्शिवाद्याय शिवपूज्यतमाय च ।
घोररूपाय महते युगान्तकरणाय च ॥ १५९॥
विश्वाय विश्वदेवाय विश्वेशाय महात्मने ।
सहस्रोदरपादाय सहस्रनयनाय च ॥ १६०॥

---

1. ख—अर्धचतुष्टयं नास्ति 2. क-घ—अर्धपञ्चकं नास्ति

सहस्रबाहवे चैव सहस्रवदनाय च ।
शुचिश्रवाय महते ऋतुसंवत्सराय च ॥ १६१॥

ऋग्यजुस्सामवक्त्राय अथर्वशिरसे नमः ।
[1]हृषीकेशाय कृष्णाय द्रुहिणोरुक्रमाय च ॥ १६२॥

[2]ब्रह्मेन्द्रकाय तार्क्ष्याय वराहायैकशृङ्गिणे ।
शिपिविष्टाय सत्याय हरयेऽथ शिखण्डिने ॥ १६३॥

हुतायोर्ध्वाय वक्त्राय रौद्रानीकाय साधवे ।
सिन्धवे सिन्धुवर्षघ्ने देवानां सिन्धवे नमः ॥ १६४॥

गरुत्मते त्रिनेत्राय सुधामाय वृषावृषे ।
सम्राडुग्रे सङ्कृतये विरजे सम्भवे भवे ॥ १६५॥

वृषाय वृषरूपाय विभवे भूर्भुवाय च ।
दीप्तसृष्टाय यज्ञाय [3]स्थिराय स्थविराय च ॥ १६६॥

अच्युताय तुषाराय वीराय च समाय च ।
जिष्णवे पुरुहूताय वसिष्ठाय वराय च ॥ १६७॥

सत्येशाय सुरेशाय हरयेऽथ शिखण्डिने ।
बर्हिषाय वरेण्याय वसवे विश्ववेधसे ॥ १६८॥

किरीटिने सुकेशाय वासुदेवाय शुष्मिणे ।

---

1. क—अर्धचतुष्टयं नास्ति
2. ख—ब्रह्मवर्ताय तथ्याय घ बृहद्देशाय
3. क—संस्थिताय स्थिराय च

बृहद्दुग्धे सुषेणाय युग्ये दुन्दुभये तथा ॥ १६९॥
भवेसखाय विभवे भरद्वाजाभयाय च ।
भास्कराय वरेन्द्राय पद्मनाभाय भूरिणे ॥ १७०॥
पुनर्वसुभूतत्वाय जीवप्रभविषाय च ।
वषट्काराय स्वाहायै स्वधायै निधनाय च ॥ १७१॥
ऋचे च यजुषे साम्ने त्रैलोक्यपतये नमः ।
श्रीपद्मायात्मसदृशे धरणे धारणे परे ॥ १७२॥
सौम्याय सौम्यरूपाय सौम्ये सुमनसे नमः ।
विश्वाय च सुविश्वाय विश्वरूपधराय च ॥ १७३॥
केशवाय सुकेशाय रश्मिकेशाय भूरिणे ।
हिरण्यगर्भाय नमस् सौम्याय वृषरूपिणे ॥ १७४॥
नारायणाग्रवपुषे पुरुहूताय वज्रिणे ।
धर्मिणे वृषसेनाय धर्मसेनाय रोधसे ॥ १७५॥
मुनये ज्वरमुक्ताय ज्वराधिपतये नमः ।
अनेत्राय त्रिनेत्राय पिङ्गलाय विडूर्मिणे ॥ १७६॥
तपोब्रह्मनिधानाय युगपर्यायिणे नमः ।
शरणाय शरण्याय शक्तेष्टशरणाय च ॥ १७७॥
नमस्सर्वभवेशाय भूतभव्यभवाय च ॥ १७८
पाहि मां देवदेवेश कोऽप्यजोऽसि सनातन ॥ १७८॥

एवं गतोऽस्मि शरणं शरण्यं ब्रह्मयोनिनाम् ॥ १७९

स्तव्यं स्तवं स्तुतवतस् तत्तमो मे प्रणश्यत ।

भयं च मे व्यपगतं पक्षिणोऽन्तर्हिता भवन् ॥ १८०

शृणोमि च गिरं दिव्याम् अन्तर्धानगतां शिवाम् ॥ १८०॥

श्रीभगवान्—

मा भैर्गरुत्मन् दान्तोसि पुनस्सेन्द्रान दिवौकसः ।

स्वं चैव भवनं गत्वा द्रक्ष्यसे पुत्रबान्धवान् ॥ १८१॥

सुपर्णः—

ततस्तस्मिन् क्षणेनैव सहसैव महाद्युतिः ।

प्रत्यदृश्यत तेजस्वी पुरस्तान् स ममान्तिके ॥ १८२॥

समागम्य ततस्तेन शिवेन परमात्मना ।

अपश्यं चाहमायान्तं नरनारायणाश्रमे ॥ १८३॥

चतुर्द्विगुणविन्यासं तं च देवं सनातनम् ॥ १८४

यजतस्तान्नृर्षीन् देवान वदतो ध्यायतो मुनीन ।

युक्तान् सिद्धान् नैष्ठिकांश्च जपतो यजतो गृहान् ॥ १८५

पुष्पपूरपरिक्षिप्तं धूपितं दीपितं हितम् ।

वन्दितं सिक्तसम्मृष्टं नरनारायणाश्रमम् ॥ १८६

तदद्भुतमहं दृष्ट्वा विस्मितोऽस्मि तदाऽनघाः ।

जगाम शिरसा देवं प्रयतेनान्तरात्मना ॥ १८७

तदत्यद्भुतमङ्काशं किमेतदिति चिन्तयन ।

नाध्यगच्छं परं दिव्यं तस्य सर्वभवात्मनः ॥ १८८

प्रणिपत्य सुदुर्धर्षं पुनः पुनरुदीक्ष्य च ।
शिरस्यञ्जलिमाधाय विस्मयोत्फुल्ललोचनः ॥ १८९

अवोचं तमदीनार्थं श्रेष्ठानां श्रेष्ठमुत्तमम् ॥ १८९॥

नमस्ते [1]भगवन् देव भूतभव्यभवत्प्रभो ।
यदेतदद्भुतं देव मया दृष्टं त्वदाश्रयम् ॥ १९०॥

अनादिमध्यपर्यन्तं किं तच्छंसितुमर्हसि ॥ १९१

यदि जानासि मां भक्तं यदि वाऽनुग्रहो मयि ।
शंस सर्वमशेषेण श्रोतव्यं यदि चेन्मया ॥ १९२

स्वभावस्तव दुर्ज्ञेयः प्रादुर्भावो भवस्य च ।
भवद्भूतभविष्येश सर्वथा गहनं भवान् ॥ १९३

ब्रूहि सर्वमशेषेण तदाश्चर्यं महामुने ।
किं तदत्यद्भुतं वृत्तं तेष्वग्निषु समन्ततः ॥ १९४

कानि तान्यग्निहोत्राणि केषां शब्दश्च श्रुतो मया ।
शृण्वतां ब्रह्म सततम् अदृश्यानां महात्मनाम् ॥ १९५

एतन्मे भगवन् कृष्ण ब्रूहि सर्वमशेषतः ।
गृणन्त्यग्निसमीपेषु के च ते ब्रह्मराशयः ॥ १९६

1. क—देवदेवेश
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

श्रीभगवान्—

मां न देवा न गन्धर्वा [1]न पिशाचा न राक्षसाः ।
विदुस्तत्त्वेन [2]तत्त्वस्थं सूक्ष्मात्मानमवस्थितम् ॥ १९७

चतुर्धाऽहं विभक्तात्मा लोकानां हितकाम्यया ।
भूतभव्यभविष्यादिर् अनादिर्विश्वकृत्तमः ॥ १९८

पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ।
मनो बुद्धिश्च तेजश्च तमस्सत्त्वं रजस्तथा ॥ १९९

प्रकृतिर्विकृतिश्चेति विद्याविद्ये शुभाशुभे ।
मत्त एतानि जायन्ते नाहमेभ्यः कथञ्चन ॥ २००

स किञ्चिच्छ्रेयसा युक्तश् श्रेष्ठभावं व्यवस्यति ।
धर्मयुक्तं च पुण्यं च सोऽहमस्मि निरामयः ॥ २०१

यत् स्वभावात्मतत्त्वज्ञैः कारणैरुपलक्ष्यते ।
अनादिमध्यनिधनस् सोऽन्तरात्माऽस्मि शाश्वतः ॥ २०२

यत्तु मे परमं गुह्यं रूपं सूक्ष्मार्थदर्शिभिः ।
गृह्यते सूक्ष्मभावज्ञैस् स विभाव्योऽस्मि शाश्वतः ॥ २०३

यत्तु मे परमं गुह्यं येन व्याप्तमिदं जगत् ।
सोऽहं गतस्सर्वसत्त्वस् सर्वस्य प्रभवोऽव्ययः ॥ २०४

1. क–ख—नासुरा न च
2. क–ख—सत्त्वस्थाः

मत्तो जातानि भूतानि मया धार्यन्त्यहर्निशम् ।
मय्येव विलयं यान्ति प्रलये पन्नगाशन ॥ २०५

यो मां यथा वेदयति तस्य तस्यास्मि काश्यप ।
मनोबुद्धिगतश्श्रेयो विदधामि विहङ्गम ॥ २०६

मां तु ज्ञातुं कृता बुद्धिर् भवता पक्षिसत्तम ।
शृणु योऽहं यतश्चाहं यदर्थं चाहमुद्यतः ॥ २०७

ये केचिन्नियतात्मानस् त्रेताग्निपरमा द्विजाः ।
अग्निकार्यपरा नित्यं जपहोमपरायणाः ॥ २०८

आत्मन्यग्नीन् समाधाय नियता नियतेन्द्रियाः ।
अनन्यमनसस्ते मां सर्वे वै समुपासते ॥ २०९

यजन्तो जपयज्ञैर्मां मानसैश्च सुसंयताः ।
अग्नीनभ्युद्ययुश्शश्वद् अग्निष्वेवाभिसंस्थिताः ॥ २१०

अनन्यकार्याश्शुचयो नित्यमग्निपरायणाः ।
य एवम्बुद्धयो धीरास् ते मां गच्छन्ति तादृशाः ॥ २११

अकामहतसङ्कल्पा ज्ञाने नित्यं समाहिताः ।
[1]आत्मन्यग्नीन् समाधाय निराहारा निराशिषः ॥ २१२

विषयेषु निरारम्भा विमुक्ता ज्ञानचक्षुषः ।
अनन्यमनसो धीरास् स्वभावनियमान्विताः ॥ २१३

1. अ – आत्मन्यभ्युद्ययुश्शश्वदग्निष्वेवाभिसंस्थिताः । [ अधिकः पाठः ]

यत्तद्द्विर्यैति दृष्टं तत् सरः पद्मोत्पलायुतम् ।
तत्राग्नयस्सन्निहिता दीप्यन्ते स्म निरिन्धनाः ॥ २१४

ज्ञानामलाशयास्तस्मिन् ये च चन्द्रांशुनिर्मलाः ।
उपासीना गृणन्तोऽग्निम् प्रस्पष्टाक्षरभाषिणः ॥ २१५
आकाङ्क्षमाणाश्शुचयस् तेष्वग्निषु विहङ्गम ॥ २१५॥
ये मया भावितात्मानो मय्येवाभिरतास्सदा ।
उपासते च मामेव ज्योतिर्भूता निरामयाः ॥ २१६॥
तैर्हि तत्रैव वस्तव्यम् नीरागात्मभिरच्युतैः ॥ २१७
निराहारा ह्यनिष्यन्दाश् चन्द्रांशुसदृशप्रभाः ।
निर्मला निरहङ्कारा निरालम्बा निराशिषः ॥ २१८
मद्भक्तास्सततं ते वै भक्तस्तानपि चाप्यहम् ॥ २१८॥
चतुर्धाऽहं विभक्तात्मा चरामि जगतो हितः ।
लोकानां धारणार्थाय विधानं विदधामि च ॥ २१९॥
यथावत्तदशेषेण श्रोतुमर्हति मे भवान् ॥ २२०
एका मूर्तिर्निर्गुणाख्या योगं परममास्थिता ।
द्वितीया सृजने तात भूतग्रामं चराचरम् ॥ २२१
सृष्टं संहरते चैका जगत् स्थावरजङ्गमम् ।
जातात्मनिष्ठा क्षपयन् मोहयन्निव मायया ॥ २२२
क्षिपन्ती मोहयन्ती च ह्यात्मनिष्ठा स्वमायया ॥ २२२॥

चतुर्थी मे महामूर्तिर् जगद्वृद्धिं ददाति सा ।
रक्षते चापि नियता सोऽहमस्मि नभश्चरः ॥ २२३॥

[1]मया सर्वमिदं व्याप्तं मयि सर्वं प्रतिष्ठितम् ।
अहं सर्वजगद्बीजं सर्वत्रगतिरव्ययः ॥ २२४॥

यानि तान्यग्निहोत्राणि ये च चन्द्रांशुराशयः ।
गृणन्ति वेदं सततं तेष्वग्निषु विहङ्गम ॥ २२५॥

क्रमेण मां समायान्ति सुखिनो ज्ञानसंयुताः ।
तेषामहं तपो दीप्तं तेजस्सम्यक् समाहितम् ॥ २२६॥

नित्यं ते मयि वर्तन्ते तेषु चाहमतन्द्रितः ॥ २२७

सर्वतो मुक्तसङ्गेन मय्यनन्यसमाधिना ।
शक्यस्समासादयितुम् अहं वै ज्ञानचक्षुषा ॥ २२८

मां स्थूलदर्शनं विद्धि जगतः कार्यकारणम् ।
मत्तश्च सम्प्रसूतान् वै विद्धि लोकान् सदैवतान् ॥ २२९

मया चापि चतुर्धाऽऽत्मा विभक्तः प्राणिषु स्थितः ।
आत्मभूतो वासुदेवो ह्यनिरुद्धो मतौ स्थितः ॥ २३०

सङ्कर्षणोऽहङ्कारे च प्रद्युम्नो मनसि स्थितः ।
अन्यथा च चतुर्धा यत् सम्यक् त्वं श्रोतुमर्हसि ॥ २३१

हिरण्यगर्भः पद्माख्यो यत्र ब्रह्मा व्यजायत ।

1. क-घ—मयि सर्वमिदं प्राप्तं

ब्रह्मणश्चापि सम्भूतश् शिव इत्यवधार्यताम् ॥ २३२
शिवात् स्कन्दस्सम्बभूव एतत् सृष्टिचतुष्टयम् ।
दैत्यदानवदर्पघ्नम् एवं मां विद्धि नित्यशः ॥ २३३
दैत्यदानवरक्षोभिर् यदा धर्मः प्रपीड्यते ।
तदाऽहं धर्मवृद्ध्यर्थं मूर्तिमान् भविताऽऽशु वै ॥ २३४
वेदव्रतपरा ये तु धीरा निश्चितबुद्धयः ।
योगिनो योगयुक्ताश्च ते मां पश्यन्ति नान्यथा ॥ २३५
पञ्चभिस्सम्प्रयुक्तोऽहं विप्रयुक्तश्च पञ्चभिः ।
वर्तमानश्च तेष्वेवं निवृत्तश्चैव तेष्वहम् ॥ २३६
ये विदुर्जातसङ्कल्पास् ते मां पश्यन्ति तादृशाः ।
खं वायुरापो ज्योतिश्च पृथिवी चेति पञ्चमम् ॥ २३७
तदात्मकोऽस्मि विज्ञेयो न चान्योऽस्मीति निश्चितम् ॥ २३७॥
वर्तमानमतीतं च पञ्चवर्गेषु निश्चलम् ।
शब्दस्पर्शेषु रूपेषु रसगन्धेषु चाप्यहम् ॥ २३८॥
रजस्तमोभ्यामाविष्टा येषां बुद्धिरनिश्चिता ।
ते न पश्यन्ति मे तत्त्वं तपसा महता ह्यपि ॥ २३९॥
नोपवासैर्न नियमैर् न व्रतैर्विविधैरपि ।
द्रष्टुं वा वेदितुं वाऽपि न शक्या परमा गतिः ॥ २४०॥
महामोहोत्थपङ्के तु निमग्नानां गतिर्हरिः ।

एकान्तिनो ध्यानपरा यतिभावाद्व्रजन्ति माम् ॥ २४१॥

सत्त्वयुक्ता मतिर्येषां केवलाऽऽत्मविनिश्चिता ।
ते पश्यन्ति स्वमात्मानं परमात्मानमव्ययम् ॥ २४२॥

अहिंसा सर्वभूतेषु तेष्ववस्थितमार्जवम् ।
[1]तेष्वेव च समाधाय सम्यगेति स मामजम् ॥ २४३॥

यदेतत् परमं गुह्यम् आख्यानं परमाद्भुतम् ।
यत्नेन तदशेषेण यथावच्छ्रोतुमर्हसि ॥ २४४॥

ये त्वग्निहोत्रनियता जपयज्ञपरायणाः ।
ते मामुपासते शश्वद् एतांस्त्वं दृष्टवानसि ॥ २४५॥

शास्त्रदृष्टविधानज्ञा असक्ताः क्वचिदन्यथा ।
शक्योऽहं वेदितुं तैस्तु यन्मे परममव्ययम ॥ २४६॥

ये तु साङ्ख्यं च योगं च ज्ञात्वाऽप्यधृतनिश्चयाः ।
न ते गच्छन्ति कुशलाः परां गतिमनुत्तमाम् ॥ २४७॥

तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्माऽऽत्मविच्छुचिः ।
आसादयति तद्ब्रह्म यत्र गत्वा न शोचति ॥ २४८॥

शुद्धाभिजनसम्पन्नाश् श्रद्धायुक्तेन चेतसा ।
मद्भक्त्या च द्विजश्रेष्ठा गच्छन्ति परमां गतिम् ॥ २४९॥

यद्गुह्यं परमं बुद्धेर् अलिङ्गग्रहणं च यत् ।

1. क-घ—इदमर्धं नास्ति

तत् सूक्ष्मं गृह्यते विप्रैर् यतिभिस्तत्त्वदर्शिभिः ॥ २५०॥

न वायुः पवते तत्र न तस्मिञ् ज्योतिषां गतिः ।
न चापः पृथिवी नैव नाकाशं न मनोगतिः ॥ २५१॥

तस्माच्चैतानि सर्वाणि प्रजायन्ते विहङ्गम ।
सर्वेभ्यश्च स तेभ्यश्च प्रभवत्यमलो विभुः ॥ २५२॥

स्थूलदर्शनमेतन्मे यद्दृष्टं भवताऽनघ ।
एतत् सूक्ष्मस्य च द्वारं कार्याणां कारणं त्वहम् ॥ २५३॥

दृष्टो वै भवता तस्मात् सरस्यमितविक्रम ।
ब्रह्मणो यदहोरात्रं सङ्ख्यानज्ञैर्विभाव्यते ॥ २५४॥

एष कालस्त्वया तत्र सरस्यहमुपागतः ॥ २५५

मां यज्ञमाहुर्यज्ञज्ञा वेदं वेदविदो जनाः ।
मुनयश्चापि मामेव जपयज्ञं प्रचक्षते ॥ २५६

वक्ता मन्ता रसयिता घ्राता द्रष्टा प्रदर्शकः ।
बोद्धा बोधयिता चाहं गन्ता श्रोता चिदात्मकः ॥ २५७

मामिष्ट्वा स्वर्गमायान्ति तथा चाप्नुवते महत् ।
ज्ञात्वा मामेव चैवं ते निस्सङ्गेनान्तरात्मना ॥ २५८

अहं तेजो द्विजातीनां मम तेजो द्विजातयः ।
मम यस्तेजसा देहस् सोऽग्निरित्यवगम्यताम् ॥ २५९

प्राणपालश्शरीरेऽहं योगिनामहमीश्वरः ।

साङ्ख्यानामिदमेवाग्रे मयि सर्वमिदं जगत् ॥ २६०

धर्ममर्थं च कामं च मोक्षं चैवार्जवं जपम् ।
तमस्सत्त्वं रजश्चैव कर्मजं च भवाप्ययम् ॥ २६१

स तदाऽहं तथारूपस् त्वया दृष्टस्सनातनः ।
ततस्त्वहं परतरश् शक्यः कालेन वेदितुम् ॥ २६२

मम यत् परमं गुह्यं शाश्वतं ध्रुवमव्ययम् ।
तदेवं परमो गुह्यो देवो नारायणो हरिः ॥ २६३
न तच्छक्यं भुजङ्गारे वेत्तुमभ्युदयान्वितैः ॥ २६३॥

निरारम्भनमस्कारा निराशीर्बन्धनास्तथा ।
गच्छन्ति तं महात्मानं परं ब्रह्म सनातनम् ॥ २६४॥

स्थूलोऽहमेवं विहग त्वया दृष्टस्तथाऽनघ ।
एतच्चापि न वेत्त्यन्यस् त्वामृते पन्नगाशन ॥ २६५॥

मा मतिस्तव गान्नाशम् एषा गतिरनुत्तमा ।
मद्भक्तो भव नित्यं त्वं ततो वेत्स्यसि मे पदम् ॥ २६६॥

एतत्ते सर्वमाख्यातं रहस्यं दिव्यमानुषम् ।
एतच्छ्रेयः परं चैतत् पन्थानं विद्धि मोक्षिणाम् ॥ २६७॥

सुपर्णः—

एवमुक्त्वा स भगवांस् तत्रैवान्तरधीयत ।
पश्यतो मे महायोगी जगामात्मगतिर्गतिम ॥ २६८॥

एतदेवंविधं तस्य महिमानं महात्मनः ।
अच्युतस्याप्रमेयस्य दृष्टवानस्मि यत् पुरा ॥ २६९॥

एतद्वस्सर्वमाख्यातं चेष्टितं तस्य धीमतः ।
मयाऽनुभूतं प्रत्यक्षं दृष्ट्वा चाद्भुतकर्मणः ॥* २७०॥

ऋषयः—

अहो श्रावितमाख्यानं भवताऽत्यद्भुतं महत् ।
पुण्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ॥ २७१॥

एतत् पवित्रं देवानाम् एतद्गुह्यं परन्तप ।
एतज्ज्ञानवतां ज्ञेयम् एषा गतिरनुत्तमा ॥ २७२॥

य इमां श्रावयेद्विद्वान् कथां पर्वसु पर्वसु ।
स लोकान् प्राप्नुयात् पुण्यान् देवर्षिभिरभिष्टुतान् ॥ २७३॥

श्राद्धकाले च विप्राणां य इमां श्रावयेच्छुचिः ।
न तत्र रक्षसां भागो नासुराणां च विद्यते ॥ २७४॥

अनसूयुर्जितक्रोधस् सर्वसत्त्वहिते रतः ।
यः पठेत् सततं युक्तस् स व्रजेत् तत्सलोकताम् ॥ २७५॥

वेदान् पारयते विप्रो राजा विजयवान् भवेत् ।
वैश्यस्तु धनधान्याढ्यश् शूद्रस्सुखमवाप्नुयात् ॥ २७६॥

भीष्मः—

ततस्ते मुनयस्सर्वे सम्पूज्य विनतासुतम् ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

स्वानेव चाश्रमाञ्जग्मुर् बभूवुश्शान्तितत्पराः ॥ २७७॥

स्थूलदर्शिभिराकृष्टो दुर्ज्ञेयो ह्यकृतात्मभिः ।
एषा श्रुतिर्महाराज धर्म्या धर्मभृतां वर ॥ २७८॥

सुराणां ब्रह्मणा प्रोक्ता विस्मितानां परन्तप ॥ २७९

ममाप्येषा कथा तात कथिता मातुरन्तिके ।
वसुभिस्सत्त्वसम्पन्नैस् तवाप्येषा मयोच्यते ॥ २८०

तदग्निहोत्रपरमा जपयज्ञपरायणाः ।
निराशीर्निरिन्धनास्सन्तः प्रयान्त्यक्षर[1]सात्मताम् ॥ २८१

आरम्भयज्ञानुत्सृज्य जपहोमपरायणाः ।
ध्यायन्तो मनसा विष्णुं गच्छन्ति परमां गतिम् ॥ २८२

तदेव परमो मोक्षो मोक्षद्वारं च भारत ।
यदा विनिश्चितात्मानो गच्छन्ति परमां गतिम् ॥ २८३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[ अस्मिन्नध्याये २८३ श्लोकाः ]

---

1. अ–ख—साम्यताम्

## ॥ द्वाविंशोऽध्यायः ॥

भीष्मनियोगात् कृष्णेन युधिष्ठिरं प्रति महादेवमहिमकथनम् ॥

*युधिष्ठिरः—

पितामह महेशाय नामान्याचक्ष्व शम्भवे ।
विदुषे विश्वमायाय महाभाग्यं च तत्त्वतः ॥ १

भीष्मः—

सुरासुरगुरो देव विष्णो त्वं वक्तुमर्हसि ।
शिवाय शिवरूपाय यन्माऽपृच्छद्युधिष्ठिरः ॥ २

नाम्नां सहस्रं देवस्य तद्विदा ब्रह्मवादिना ।
निवेदितं ब्रह्मलोके ब्रह्मणा यत् पुराऽभवत् ॥ ३

द्वैपायनप्रभृतयस् तथैवैते तपोधनाः ।
ऋषयस्सुव्रता दान्ताश् शृण्वन्तु गदतस्तव ॥ ४

ध्रुवाय नन्दिने नेत्रे गोप्त्रे विश्वसृगग्नये ।
महाभाग्यं विभो ब्रूहि मुण्डिनेऽथ कपर्दिने ॥ ५

श्रीभगवान्—

न शक्यं कर्मणा वेत्तुं गतिमीशस्य तत्त्वतः ॥ ५॥
हिरण्यगर्भप्रमुखास् सेन्द्रा देवा महर्षयः ।

---

*इत आरभ्य पञ्चाध्यायाः श्रीभागवतोक्तकैलासयात्रानुवादरूपा इति विवेक्तव्यम्; विचिकित्सावतां सम्प्रतिपन्नकोशान्तरदर्शनेन विचिकित्सा समाधेया; वाक्यशैली च सम्यक्परामर्शनीया ॥

न विदुर्यस्य निधनम् आदिं वा सूक्ष्मदर्शिनः ॥ ६॥
स कथं नाममात्रेण शक्यो ज्ञातुं सतां गतिः ॥ ७
तस्याहमसुरघ्नस्य कांश्चिद्भगवतो गुणान् ।
भवतां कीर्तयिष्यामि प्रणम्येशं यथातथम् ॥ ८

वैशम्पायनः—

एवमुक्त्वा स भगवान गुणांस्तस्य महात्मनः ।
उपस्पृश्य शुचिर्भूत्वा कथयामास तत्त्वतः ॥ ९

श्रीभगवान्—

शुश्रूषध्वं ब्राह्मणेन्द्रास् त्वं च तात युधिष्ठिर ।
त्वं चापगेय नामानि निशामय जगत्पतेः ॥ १०
यदवाप्तं च मे पूर्वं साम्बहेतोस्सुदुष्करम् ।
यथा स भगवान् दृष्टो मया पूर्वं समाधिना ॥ ११
शम्बरे निहते पूर्वं रौक्मिणेयेन धीमता ।
अतीते द्वादशे वर्षे जाम्बवत्यब्रवीद्धि माम् ॥ १२
चारुदेष्णप्रभृतिकान् रुक्मिण्या वीक्ष्य वै सुतान् ।
पुत्रार्थिनी मामुपेत्य वाक्यमाह युधिष्ठिर ॥ १३

जाम्बवती—

शूरं बलवतां श्रेष्ठं कीर्तिरूपमकल्मषम् ।
आत्मतुल्यं मम सुतं प्रयच्छाच्युत मा चिरम् ॥ १४

न हि तेऽप्राप्यमस्तीति त्रिषु लोकेषु किञ्चन ।
लोकान् सृजेस्त्वमपरान् इच्छन् यदुकुलोद्वह ॥ १५

त्वया द्वादशवर्षाणि तपस्तप्त्वा जगद्गुरुम् ।
आराध्य पशुभर्तारं रुक्मिण्या जनितास्सुताः ॥ १६

[1]चारुदेष्णस्सुचारुश्च चारुवेषो यशोधनः ।
चारुश्रवाश्चारुयशाः प्रद्युम्नश्शम्भुरेव च ॥ १७

यथा ते जनिताः पुत्रा रुक्मिण्यां चारुविक्रमाः ।
तथा ममापि तनयं प्रयच्छाच्युत मा चिरम् ॥ १८

श्रीभगवान्—

इत्येवं चोदितो देव्या तामवोचं सुमध्यमाम् ।
अनुजानीहि मां राज्ञि करिष्ये वचनं तव ॥ १९

सा च मामब्रवीद्गच्छ विजयाय शिवाय च ।
ब्रह्मा शिवः काश्यपश्च [2]नद्यो मनोनुगाः ॥ २०

[3]क्षेत्रौषध्यो यज्ञवाहश्छन्दांस्यृषिगणास्तथा ।
समुद्रा दक्षिणान्ताश्च ऋक्षाणि पितरो ग्रहाः ॥ २१

देवपत्न्यो देवकन्या देवमातर एव च ।
मन्वन्तराणि गावश्च चन्द्रमास्सविता रविः ॥ २२

---

1. क-ख—एतदादि अर्धत्रयं नास्ति
2. क-घ—वेदा देवाः क्षपास्तव
3. ख—अर्धसप्तकं नास्ति

सावित्री ब्रह्मविद्या च ऋतवो वत्सराः क्षपाः ।
क्षणा लवा मुहूर्ताश्च निमेषा युगपर्ययाः ॥ २३

रक्षन्तु सर्वत्र गतं त्वां यादव सुखावहाः ।
रक्षां कुर्वन्त्वरिष्टं त्वम् अप्रमत्तो व्रजाच्युत ॥ २४

एवं कृतस्वस्त्ययनस्तयाऽहं
तामभ्यनुज्ञाय च राजपुत्रीम् ।
पितुस्समीपे नरसत्तमस्य
मातुश्च राज्ञश्च तथाऽऽहुकस्य ॥ २५

तदर्थमावेद्य यदब्रवीन्मां
विद्याधरेन्द्रस्य सुता भृशं तदा ।
सा मामनुज्ञाय ततोऽतिदुःखात्
सुभ्रूस्तथैवाग्निशयेन तेन ॥ २६

अभ्यनुज्ञां गुरुजनात् प्राप्य तार्क्ष्यमचिन्तयम् ।
सोऽवहद्धिमवन्तं मां प्राप्य चैनं व्यसर्जयम् ॥ २७

तत्राहमद्भुतान् भावान् अपश्यं गिरिसत्तमे ।
क्षेत्रं च तापसश्रेष्ठं पश्याम्याश्रममुत्तमम् ॥ २८

दिव्यं वैयाघ्रपादस्य उपमन्योर्महात्मनः ।
पूजितं देवगन्धर्वैर् ब्राह्म्या लक्ष्म्या समावृतम् ॥ २९

[1]धवककुभकदम्बनारिकेलैः
कुरवककेतकजम्बुपाटलीभिः ।
वटवरुणकवत्सनाभबिल्वैर्
असनकपित्थप्रियालतालसालैः ॥ ३०

बदरेङ्गुदपुन्नागैर् अशोकाम्रातिमुक्तकैः ।
भल्लातकैर्मधूकैश्च चम्पकैः पनसैस्तथा ॥ ३१

अन्यैर्बहुविधैर्वृक्षैः फलपुष्पप्रदैर्युतम् ॥ ३१॥

नित्यपुष्पफलोपेतैर् वृक्षैरविरलैर्वृतम् ।
सुपुष्पैश्च लतागुल्मैर् निर्भयैश्च मृगैर्युतम ॥ ३२॥

विशालैर्यज्ञशरणैर् यथास्थानाहिताग्निभिः ।
रुरुवारणशार्दूलसिंहद्वीपिसमाकुलम् ॥ ३३॥

कुरङ्गबर्हिणाकीर्णं मार्जारभुजगावृतम् ॥ ३४

नानापुष्परजोमिश्रो गजदानाधिवासितः ।
दिव्यस्त्रीगीतमधुरो मारुतोऽत्र सुखो ववौ ॥ ३५

नानानिनादैर्विहगप्रणादैश्
शुभैस्तथा बृंहितैः कुञ्जराणाम् ।
गीतैस्तथा किन्नराणामुदारैर्
विश्राम्यनैर्भूषितं विप्रमुख्यैः ॥ ३६

1. क-ध—अर्धपङ्क्तं नास्ति

विभूषितं पुण्यपवित्रतोयया
सर्वत्र जुष्टं नृप जह्नुकन्यया ।
[1]महात्मभिर्धर्मभृतां वरिष्ठैर्
महर्षिभिर्भूषितमग्निकल्पैः ॥ ३७

वाग्वाहारैरम्बुपैर्जप्यनित्यैस्
सम्प्रक्षालैर्यतिभिर्ध्यानमुख्यैः ।
धूमाशनैरूष्मपैः क्षीरपैश्च
विभूषितं ब्राह्मणेन्द्रैस्समन्तात् ॥ ३८

नानावृन्दैर्वेदषडङ्गपारगैर्
धर्माभिरामैर्मुनिभिस्समाहितैः ॥ ३८॥

तत्राश्रमपदे श्रेष्ठे सर्वभूतमनोरमे ।
सेवितं द्विजशार्दूलैर् वेदवेदाङ्गपारगैः ॥ ३९॥

नानानियमविख्यातैर् ऋषिभिश्च महात्मभिः ॥ ४०

प्रविशन्नेव चापश्यं जटाचीरधरं प्रभुम् ।
[2]तेजसा तपसा चापि दीप्यमानं यथाऽनलम् ॥ ४१

शिष्यमध्यगतं शान्तं युवानं ब्राह्मणर्षभम् ।
शिरसा वन्दमानं माम् उपमन्युरभाषत ॥ ४२

उपमन्युः—

स्वागतं पुण्डरीकाक्ष सफलानि तपांसि नः ।

---

1. क-घ—अर्धमयं नास्ति 2. क-घ—इदमर्धं नास्ति

यः पूज्यः पूजयसि मां द्रष्टव्यो द्रष्टुमिच्छसि ॥ ४३
मनुष्यतानुवृत्त्या त्वां ज्ञात्वा तिष्ठाम सर्वगम् ॥ ४३॥

श्रीभगवान्—

तमहं प्राञ्जलिर्भूत्वा मृग[1]पक्षिष्वथाग्निषु ।
धर्मे च शिष्यवर्गे च तदाऽपृच्छमनामयम् ॥ ४४॥
ततो मां भगवानाह साम्ना परमवल्गुना ॥ ४५

उपमन्युः—

वेत्स्यसे तनयं कृष्ण आत्मतुल्यं न संशयः ।
तपस्सुमहदास्थाय तोषयेशानमीश्वरम् ॥ ४६
इह देवस्सपत्नीकस् सदा क्रीडत्यधोक्षज ॥ ४६॥
इहैव देवताश्रेष्ठं देवास्सर्षिगणाः पुरा ।
तपसा ब्रह्मचर्येण सत्येन च दमेन च ॥ ४७॥
तोषयित्वा शुभान् कामान् प्राप्नुवंस्ते जनार्दन ॥ ४८
तेजसां तपसां चैव निधिस्स भगवानिह ॥ ४८॥
शुभाशुभान् विभुर्भावान् विसृजन् सङ्क्षिपन्नपि ।
आस्ते देव्या सहाचिन्त्यो यं प्रार्थयसि शत्रुहन् ॥ ४९॥
हिरण्यकशिपुर्योऽभूत् तपसा मेरुकम्पनः ।
तेन सर्वामरैश्वर्यं [2]शर्वात् प्राप्तं समार्बुदम् ॥ ५०॥
तस्यैव पुत्रप्रवरो दमनो नाम विश्रुतः ।

---

1. क-घ—वृक्षेष्व 2. क-घ—सेव्य प्राप्तं

महादेववराच्छक्रं वर्षायुतमयोधयत् ॥ ५१॥

[1]विष्णोश्चक्रं च तद्घोरं वज्रमाखण्डलस्य च ।
शीर्णं तथा भागवतं हरस्याङ्गेषु केशव ॥ ५२॥

अर्द्यमानाश्च विबुधा ग्रहणेषु बलीयसा ।
शिवदत्तवराद् राजन्नसुरेन्द्रान् सुरा भृशम् ॥ ५३॥

तुष्टो विद्युत्प्रभस्यापि त्रिलोकेश्वरतामदात् ।
शतं वर्षसहस्राणां स च लोकेश्वरोऽभवत् ॥ ५४॥

ममैवानुचरो दैत्य भवितासीति चाब्रवीत् ॥ ५५

तथा पुत्रसहस्राणाम् अयुतं प्रददौ प्रभुः ।
कुशद्वीपं च स ददौ योगं च भगवानजः ॥ ५६

योगेश्वरं वेदगीतं वेत्थ कृष्ण न संशयः ॥ ५६॥

वालखिल्या मघवता अवज्ञाताः पुरा भवन् ॥ ५७

तैः क्रुद्धैर्भगवान् रुद्रस् तपसा तोषितोऽभवत् ।
तांश्चापि देवताश्रेष्ठः प्राह प्रीतः प्रजापतिः ॥ ५८

सुपर्णं सोमहर्तारं तपसोत्पादयिष्यथ ॥ ५८॥

[2]महादेवस्य रोषाच्च आपो नष्टाः पुरा भवन् ।
ताश्चापस्सुप्तकालेन देवैरप्यप्रवर्तिताः ॥ ५९॥

---

1. क-ब—अर्धचतुष्टयं नास्ति

2. क—अर्धत्रयं नास्ति ब—अर्धद्वयं नास्ति

[1-2]अत्रेर्भार्या हि भर्तारं सन्त्यज्य ब्रह्मवादिनम् ॥ ६०
नाहं तव मुने भूयो वशगा स्यां कथञ्चन ।
इत्युक्त्वा सा महादेवम् अगमच्छरणं किल ॥ ६१
निराहारा भयादत्रेस् त्रीणि वर्षशतान्यथ ।
अतप्यत तपश्चापि प्रसादार्थे भवस्य ह ॥ ६२
तामब्रवीन्महादेवो भविता वै सुतस्तव ।
सावर्णिश्चैव नाम्ना च ख्यातिं यास्यति चेति ताम् ॥ ६३
सावर्णिश्चापि विख्यात ऋषिरासीत् कृते युगे ।
इह तेन तपस्तप्तं षष्टिं वर्षशतान्यथ ॥ ६४
तमाह भगवान् रुद्रस् साक्षात्तुष्टोऽस्मि तेऽनघ ।
ग्रन्थकृल्लोकविख्यातो भविष्यस्यजरामरः ॥ ६५
शाकल्यो ग्रन्थकर्ता च सावर्णिश्च तदाऽभवत् ॥ ६५॥
बाणस्स्कन्दसमत्वं च कामो दर्पविमोक्षणम् ।
लवणोऽवध्यतामन्यैर् दशास्यश्च पुनर्बलम् ॥ ६६॥
अन्तकोऽन्तमनुप्राप्तस् तस्मात् कोऽन्यः परः प्रभुः ॥ ६७
मयाऽपि च यथा दृष्टो देवदेवः पुरा विभुः ।
साक्षात् पशुपतिस्तात तच्चापि शृणु माधव ॥ ६८

1. क-घ—अत्रिभार्या सुतं दत्तं सोमं दुर्वाससं प्रभो । [अधिकः पाठः].
2. क-घ—एकादशार्धानि न सन्ति

यदर्थं च महादेवः प्रयत्नेन मया पुरा ।
आराधितो वासुदेव तच्चापि शृणु विस्तरात् ॥ ६९

[1]यदवाप्तं च मे पूर्वं महादेवान्महेश्वरात् ।
तत् सर्वमखिलेनाद्य कथयिष्यामि तेऽनघ ॥ ७०

पुरा कृतयुगे तात ऋषिरासीन्महातपाः ।
व्याघ्रपाद इति ख्यातो वेदवेदाङ्गपारगः ॥ ७१

तस्याहमभवं पुत्रो धूम्रश्चापि ममानुजः ॥ ७१॥

केनचित्त्वथ कालेन धूम्रेण सह माधव ।
गतवानाश्रमान् क्रीडन् मुनीनां भावितात्मनाम् ॥ ७२॥

तत्रापि च मया दृष्टा दुह्यमाना पयस्विनी ।
भक्षितं च मया क्षीरं स्वादु तस्यामृतोपमम् ॥ ७३॥

तदाप्रभृति चैवाहम् अरुदं मधुसूदन ।
दीयतां दीयतां क्षीरं मम मातरितीरितम् ॥ ७४॥

ततः पिष्टं समालोड्य तोयेन सह माधव ।
अपाययत् क्षीरमिति पानार्थमुपनीय सा ॥ ७५॥

अथ गव्यं पयस्तात कदाचित् प्राशितं मया ।
ततः पिष्टमयं कृष्ण न मे प्रीतिमुदावहत् ॥ ७६॥

ततोऽहमब्रुवं बाल्याज् जननीमात्मनस्तदा ।

---

1. क-ख—अर्धद्वयं नास्ति

क्षीराद्येन समायुक्तं भोजनं च प्रयच्छ मे ॥ ७७॥

ततो मामब्रवीन्माता स्नेहाद्दुःखसमन्विता ।
परिष्वज्याङ्कमारोप्य मूर्ध्नि चाघ्राय माधव ॥ ७८॥

उपमन्युजननी—

कुतः क्षीरोदनं वत्स मुनीनां भावितात्मनाम् ।
वने निवसतां तात शाकमूलफलाशिनाम् ॥ ७९॥

अप्रसाद्य विरूपाक्षं वरदं स्थाणुमव्ययम् ।
कुतः क्षीरोदनं वत्स सुखानि गतयोऽपिवा ॥ ८०॥

सर्वकारणभूतोऽयं धाता रुद्रस्त्रिलोचनः ।
अष्टबाहुर्जटी नागभूषणश्चन्द्रशेखरः ॥ ८१॥

नागोपवीती सगणो नीलकण्ठ उमापतिः ।
सुदंष्ट्रस्सुस्मितो नागकुण्डलो भस्मभासितः ॥ ८२॥

सर्वकामप्रदो भक्त्या पूजितः पुष्पमूलकैः ॥ ८३

तं प्रपद्य तदा वत्स सर्वभावेन शङ्करम् ।
भक्त्या प्रत्यक्षतां नीतस् सर्वकामप्रदो हरः ॥ ८४

उपमन्युः—

जनन्यास्तद्वचश्श्रुत्वा तदाप्रभृति शत्रुहन् ।
मम भक्तिर्महादेवे नैष्ठिकी समपद्यत ॥ ८५

ततोऽहं तप आस्थाय तोषयामास शङ्करम् ।

दिव्यं वर्षसहस्रं तु वामाङ्गुष्ठाग्रविष्ठितः ॥ ८६

एकं वर्षशतं चैव फलाहारस्तदाऽभवम् ।
द्वितीयं शीर्णपर्णाशी तृतीयं चाम्बुभोजनः ॥ ८७

शतानि सप्त चैवाहं वायुभक्षस्तदाऽभवम् ॥ ८७॥

ततः प्रीतो महादे[1]वो नीलकण्ठो जगत्प्रभुः ।
शक्ररूपं समास्थाय सर्वैर्देवगणैर्वृतः ॥ ८८॥

ततो मामाह देवेन्द्रः प्रीतस्तेऽहं द्विजोत्तम ।
वरं वृणीष्व मत्तस्त्वं यत्ते मनसि वर्तते ॥ ८९॥

[2]शक्रस्य तद्वचश्श्रुत्वा नाहं प्रीतमना भवम् ।
अब्रवं च तदा कृष्ण देवराजमिदं वचः ॥ ९०॥

नाहं शक्राद् वरं काङ्क्षे न चान्यादिति चाब्रवम् ।
[3]महादेवादृते सौम्य सत्यमेतद्ब्रवीमि ते ॥ ९१॥

पशुपतिवचनाद्भवामि सद्यः
कृमिरथवा तरुरप्यनेकशाखः ।
अपशुपतिवरप्रदानजा मे
त्रिभुवनराज्यविभूतिरप्यनिष्टा ॥ ९२॥

अपि कीटः पतङ्गो वा भवेयं शङ्कराज्ञया ।

1. क-घ—वः पार्वतीवल्लभः        2. क-घ—इदमर्धद्वयं नास्ति

3. क-घ—वरयामि परे भक्तिं नित्यामेत

न तु शक्र त्वया दत्तं त्रैलोक्यमपि काङ्क्षये ॥ १३॥

यावच्छशाङ्कशकलामलबद्धमौलिर्
न प्रीयते पशुपतिर्भगवान् ममेशः ।
तावज्जरामरणजन्मशताभिघातैर्
दुःखानि देव विहितानि समुद्वहानि ॥ १४॥

शक्रः—

[1]कः पुनस्तव हेतुर्वै ईशः कारणकारणम् ।
येन देवादृते सौम्य प्रसादं नाभिकाङ्क्षसे ॥ १५॥

उपमन्युः—

एष एव महान् हेतुर् ईशः कारणकारणम् ॥ १६
[2]शुश्रुमो वा यदन्यस्य देवमभ्यर्चितं सुरैः ॥ १६॥
कस्यान्यस्य सुरैस्सर्वैर् लिङ्गं मुक्त्वा महेश्वरम् ।
अर्च्यतेऽर्चितपूर्वं वा ब्रूहि यद्यस्ति ते श्रुतम् ॥ १७॥
यस्य ब्रह्मा च विष्णुश्च त्वं च शक्र सहामरैः ।
अर्चयध्वं सदा लिङ्गं तस्माच्छ्रेष्ठतरो हि सः ॥ १८॥

दिवसकरशशाङ्कवह्निनेत्रं
त्रिभुवनसारमपारमीशमाद्यम् ।

---

1. क-घ—मत्तः लोकस्य हेतुर्वै शक्रात् कारणकारणात् ।
येन देवमृते सौम्य [पाठान्तरम्]

2. क-घ—शुश्रूषामो यदा ह्यस्य देहमभ्यर्चितं सुरैः । [पाठान्तरम्]

अजरममरमप्रसाद्य रुद्रं
जगति पुमानिह को लभेत शान्तिम् ॥ ९९॥
धिक् तेषां धिक् तेषां
पुनरपि धिगस्तु धिक् तेषाम् ।
येषां न वसति हृदये
कुपथगतिविमोक्षको रुद्रः ॥ १००॥
तस्माद्वरमहं काङ्क्षे निधनं वाऽपि कौशिक ।
गच्छ वा तिष्ठ वा शक्र यथेष्टं बलसूदन ॥ १०१॥
काममेवं वरो मेऽस्तु शापो वाऽपि महेश्वरात् ।
न चान्यां देवतां काङ्क्षे सर्वकामफलान्यपि ॥ १०२॥
एवमुक्त्वा तु देवेन्द्रं दुःखादाकुलितेन्द्रियः ।
न प्रसीदति मे रुद्रः किमेतदिति चिन्तयन् ॥ १०३॥
अथापश्यं क्षणेनैव तमेवैरावतं पुनः ।
वृषरूपधरं साक्षात् क्षीरोदमिव सागरम् ॥ १०४॥
कृष्णपुच्छं महाकायं मधुपिङ्गललोचनम् ।
जाम्बूनदेन रत्नैश्च सर्वतस्समलङ्कृतम् ॥ १०५॥
रत्नशृङ्गं सुपादं च [1]सुकण्ठं सुकटीतटम् ।
[2]सुपार्श्वं विपुलस्कन्धं सुरूपं चारुदर्शनम् ॥ १०६॥

---

1. क-घ—सुरूपस्कन्धचक्षुषम्
ख—सुकर्णं

2. क-घ—इदमर्धं नास्ति

ककुदं तस्य चाभाति स्कन्धमापूर्य विष्ठितम् ।
तुषारगिरिकूटाभं सिताभ्रशिखरोपमम् ॥ १०७॥

तमास्थितश्च भगवान् देवदेवस्सहोमया ।
[1]अशोभत महाराज पौर्णमास्यामिवोडुराट् ॥ १०८॥

किरीटं च जटाभारं [2]सर्पाद्याभरणानि च ।
वज्रादिशूलमातङ्गगम्भीरस्मितमागतम् ॥ १०९॥

[3]तस्य तेजोद्भवो वह्निस् समेघस्स्तनयित्नुमान ।
सहस्रस्येव सूर्याणां तेज आवृत्य तिष्ठति ॥ ११०॥

[4]ईश्वरस्य तदा तेजस् संवर्तक इवानलः ।
युगान्ते सर्वभूतानि दिधक्षुरिव चोद्यतः ॥ १११॥

तेजसा तु तदा व्याप्ते दुर्निरीक्ष्ये महेश्वरे ।
पुनरुद्विग्नहृदयः किं करोमीत्यचिन्तयम् ॥ ११२॥

मुहूर्तेनैव तत्तेजो व्याप्य सर्वा दिशो दश ।
प्रशान्तं च क्षणेनैव देवदेवस्य मायया ॥ ११३॥

अथापश्यं स्थितं तात भगवन्तं महेश्वरम् ।
सौरभेयगतं सौम्यं विधूममिव पावकम् ॥ ११४॥

---

1 क-घ—इदमर्धं नास्ति
2. क-घ—सर्पाद्या भूषणानि च
3. क-घ—इदमर्धं नास्ति
4. क-घ—अर्धद्वयं नास्ति

प्रशान्तमनसं देवं [1]त्रिहेतुमपराजितम् ।
सहितं चारुसर्वाङ्‌ग्या पार्वत्या परमेश्वरम् ॥ ११५॥
नीलकण्ठं महात्मानं हर्यक्षं तेजसां निधिम् ।
अष्टादशभुजं देवं सर्वाभरणभूषितम् ॥ ११६॥
शुक्लाम्बरधरं देवं शुक्लमाल्यानुलेपनम् ।
शुक्लध्वजमनाधृष्यं शुक्लयज्ञोपवीतिनम् ॥ ११७॥
गायद्भिर्नृत्यमानैश्च उत्पतद्भिरितस्ततः ।
वृतं पारिषदैर्दिव्यैर् आत्मतुल्यपराक्रमैः ॥ ११८॥
त्रिभिर्नेत्रैः कृतोद्योतं त्रिभिस्सूर्यैरिवोदितैः ।
सर्वविद्याधिपं देवं शरच्चन्द्रसमप्रभम् ॥ ११९॥
नयनाह्लादसौभाग्यम् अपश्यं परमेश्वरम् ॥ १२०
अशोभत च देवस्य माला गात्रे सितप्रभा ।
जातरूपमयैः पद्मैर् ग्रथिता रत्नभूषिता ॥ १२१
मूर्तिमन्ति महास्त्राणि तस्य देहोद्भवानि च ।
मया दृष्टानि गोविन्द भवस्यामिततेजसः ॥ १२२
इन्द्रायुधसहस्राभं धनुस्तस्य महात्मनः ।
पिनाकमिति विख्यातं स च वै पन्नगो महान् ॥ १२३
सप्तशीर्षो महाकायस् तीक्ष्णदंष्ट्रो विषोल्बणः ।

---

1. क- त्रिशङ्कु    घ—इतोऽष्टौ पादा न सन्ति

ज्यावेष्टितमहाग्रीवस् स्थितः पुरुषविग्रहः ॥ १२४
शरश्च सूर्यसङ्काशो दृष्टः पाशुपताह्वयः ।
सहस्रभुजजिह्वास्यो भीषणो नागविग्रहः ॥ १२५
शङ्खशूलासिभिश्चैव पट्टिसै रूपवान् स्थितः ।
येन च त्रिपुरं दग्धं सर्वदेवमयश्शरः ॥ १२६
[1]शूलं च यौवनोपेतं लवणस्य करे स्थितम् ।
यत्तदस्त्रं महाघोरं दिव्यं पाशुपतं महत् ॥ १२७
अद्वितीयमनिर्देश्यं सर्वभूतसुखावहम् ।
सस्फुलिङ्गं महाघोरं विसृजन्तमिवार्चिषम् ॥ १२८
एकपादं महादंष्ट्रासहस्रशिरसोदरम् ।
सहस्रभुजजिह्वास्यम उद्गिरन्तमिवानलम् ॥ १२९
ब्राह्मान्नारायणादैन्द्राद् आग्नेयाच्च सवारुणात् ।
यत् प्रकृष्टं महाबाहो सर्वशस्त्रविघातकम् ॥ १३०
येन च त्रिपुरं दग्धं क्षणाद्भगवता पुरा ।
शरेणैकेन गोविन्द महादेवेन लीलया ॥ १३१
निर्दहेदपि यत् कृत्स्नं जगत् स्थावरजङ्गमम् ।
महेश्वरभुजोत्सृष्टं निमेषात्तन्न संशयः ॥ १३२
नानावर्णस्य लोकेऽस्मिन् ब्रह्मविष्णुसुरेष्वपि ।

1. क-घ—इत आरभ्य एकचत्वारिंशदर्धानि न सन्ति

तद्दृष्टवानहं तत्र आश्चर्यमिदमुत्तमम् ॥ १३३
गुह्यमस्त्रं परञ्चापि तत्तुल्याधिकमेव वा ।
यत्तच्छूलमिति ख्यातं सर्वलोकेषु शूलिनः ॥ १३४
दारयेद्वा महीं कृत्स्नां शोषयेद्वा महोदधीन् ।
संहरेद्वा जगत् कृत्स्नं निर्दिष्टं शूलपाणिना ॥ १३५
यौवनाश्वो हतो येन मान्धाता सबलः पुरा ।
चक्रवर्ती महातेजास् त्रैलोक्यविजयी नृपः ॥ १३६
महाबलो महावीर्यश् शक्रतुल्यपराक्रमः ।
करस्थेनैव गोविन्द लवणस्यैव रक्षसः ॥ १३७
तच्छूलमतितीक्ष्णाग्रं सुभीमं रोमहर्षणम् ।
त्रिशिखां भ्रुकुटिं कृत्वा तर्जयन्तमिव स्थितम् ॥ १३८
सधूमं सार्चिषं कृष्णं कालसूर्यमिवोदितम् ।
सर्पहस्तमनिर्देश्यं पाशहस्तमिवान्तकम् ॥ १३९
दृष्टवानस्मि गोविन्द तदस्त्रं रुद्रसन्निधौ ॥ १३९॥
परमं तीक्ष्णधारं च शस्त्रं तस्यापि यत् पुरा ।
महादेवेन तुष्टेन दत्तं भृगुसुताय च ॥ १४०॥
त्रिस्सप्तकृत्वः पृथिवी येन निःक्षत्रिया कृता ।
जामदग्न्येन वीरेण रामेणाक्लिष्टकर्मणा ॥ १४१॥
तीक्ष्णधारश्च रौद्रश्च सर्पकण्ठार्धवेष्टितः ।

अभवच्छुचिनोऽभ्याशे दीप्तवह्निशिखोपमः ॥ १४२॥

असङ्ख्येयानि चास्त्राणि तस्य दिव्यानि धीमतः ।
प्राधान्यतो मयैतानि कीर्तितानि तवानघ ॥ १४३॥

सव्यदेशे तु देवस्य ब्रह्मा लोकपितामहः ।
दिव्यं विमानमास्थाय हंसयुक्तमवस्थितः ॥ १४४॥

वामपार्श्वगतश्चापि तथा नारायणस्स्थितः ।
वैनतेयं समास्थाय स्थितो देव्यास्समीपतः ॥ १४५॥

शक्तिं कण्ठे समास्थाय द्वितीय इव पावकः ॥ १४६

पुरस्ताद्देवदेवस्य नन्दिं पश्याम्यवस्थितम् ।
शूलं विष्टभ्य तिष्ठन्तम् द्वितीयमिव शङ्करम् ॥ १४७

स्वायम्भुवाद्या मनवो भृग्वाद्या ऋषयस्तथा ।
शक्राद्या देवताश्चैव सर्वे एव समभ्ययुः ॥ १४८

तेऽभिगम्य महात्मानम् परिवार्य समन्ततः ।
अस्तुवन् विविधैस्स्तोत्रैर् महादेवं सुरास्तदा ॥ १४९

जगन्मूर्तिं महालिङ्गम् तन्मध्ये [1]स्फीतरूपिणम् ॥ १४९॥

ब्रह्मा भवं तदा स्तुत्वा रथन्तरमुदीरयन् ।
ज्येष्ठसाम्ना च देवेशम् जगौ नारायणः प्रभुम् ॥ १५०॥

---

1. क-घ—स्थिरमव्ययम्

जगौ शक्रः परं ब्रह्म शतरुद्रीयमुत्तमम् ॥ १५१

[1]ब्रह्मा नारायणश्चैव देवराजश्च कौशिकः ।
अशोभन्त महाबाहो त्रयस्त्रय इवाग्नयः ॥ १५२

तेषां मध्यगतो देवो रराज भगवाञ् छिवः ।
शरद्घनविनिर्मुक्तः [2]परिविष्ट इवांशुमान् ॥ १५३

ततोऽहमस्तुवं देवं स्तवेनानेन सुव्रत ॥ १५३॥

नमो देवादिदेवाय महादेवाय वै नमः ।
शक्राय शक्ररूपाय शक्रवेषधराय च ॥ १५४॥

नमोऽस्तु वज्रहस्ताय पिङ्गलायारुणाय च ।
[3]पिनाकपाणये नित्यं खड्गचर्मधराय च ॥ १५५॥

नमोऽस्तु कृष्णवासाय कृष्णकुञ्चितमूर्धज ।
कृष्णाजिनोत्तरीयाय कृष्णाष्टमिरताय च ॥ १५६॥

शुक्लाय शुक्लवर्णाय शुक्लाम्बरधराय च ।
शुक्लभस्मावलिप्ताय [4]शुक्लभस्मरताय च ॥ १५७॥

त्वं ब्रह्मा सर्वदेवानां रुद्राणां नीललोहितः ।
आत्मा च सर्वभूतानां साङ्ख्यैः पुरुष उच्यते ॥ १५८॥

---

1. क-घ—इदमर्धद्वयं नास्ति
2. क-घ—सुधांशुरिव निर्मलः
3. क-घ—अर्धचतुष्टयं नास्ति
4. क-घ—जाह्नवीभूषिताय च

[1]ऋषभस्त्वं पवित्राणां योगिनां कपिलश्शिवः ।
आश्रमाणां गृहस्थस्त्वम् ईश्वराणां महेश्वरः ॥ १५९॥

कुबेरस्सर्वयक्षाणां क्रमतां विष्णुरुच्यते ।
पर्वतानां महामेरुर् नक्षत्राणां च चन्द्रमाः ॥ १६०॥

वसिष्ठस्त्वमृषीणां च ग्रहाणां सूर्य उच्यते ।
आरण्यानां पशूनां च सिंहस्त्वं परमेश्वर ॥ १६१॥

[2]ग्राम्याणां गोवृषश्चासि भगवाँल्लोकपूजितः ।
आदित्यानां भवान् विष्णुर् वसूनां चैव पावकः ॥ १६२॥

पक्षिणां वैनतेयश्च अनन्तो भुजगेषु च ॥ १६३

सामवेदश्च वेदानां यजुषां शतरुद्रियम् ।
सनत्कुमारो योगीनां साङ्ख्यानां कपिलो मुनिः ॥ १६४

शक्रो हि मरुतां देव पितॄणां धर्मराडपि ।
ब्रह्मलोकश्च लोकानां गतीनां मोक्ष उच्यते ॥ १६५

क्षीरोदस्सागराणां च शैलानां हिमवान गिरिः ।
वर्णानां ब्राह्मणश्चासि विप्राणां दीक्षितो द्विजः ॥ १६६

आदिस्त्वमसि लोकानां संहर्ता काल एव च ॥ १६६॥

---

1. क-ख—अर्धमिदं नास्ति

2. क-ख—समिद्धस्तः पवित्राणां योगिनां कपिलश्शिवः ।
आश्रमाणां गृहस्थस्त्वमीश्वराणां महेश्वरः ॥
कुबेरस्सर्वभूतानां क्रमतां विष्णुरुच्यते ॥ [अधिकः पाठः]

यच्चान्यदपि लोकेऽस्मिन् सत्त्वं तेजोधिकं स्मृतम् ।
तत् सर्वं भगवानेव इति मे निश्चिता मतिः ॥ १६७॥

नमस्ते भगवन् देव नमस्ते भक्तवत्सल ।
योगेश्वर नमस्तेऽस्तु नमस्ते विश्वशम्भवे ॥ १६८॥

प्रसीद मम भक्तस्य दीनस्य कृपणस्य च ।
अनैश्वर्येण युक्तस्य गतिर्भव सनातन ॥ १६९॥

यच्चापराधं कृतवान् अज्ञानात् परमेश्वर ।
मद्भक्त इति देवेश तत् सर्वं क्षन्तुमर्हसि ॥ १७०॥

मोहितश्चास्मि देवेश तुभ्यं रूपविपर्ययात् ।
तेन नार्घ्यं मया दत्तं पाद्यं चापि सुरेश्वर ॥ १७१॥

एवमुक्त्वा तमीशानं पाद्यमर्घ्यं च भक्तितः ।
कृताञ्जलिपुटो भूत्वा तस्मै सर्वं न्यवेदयम् ॥ १७२॥

ततश्शीताम्बुसंयुक्ता दिव्यगन्धसमन्विता ।
पुष्पवृष्टिश्शुभा तात मम मूर्धनि चापतत् ॥ १७३॥

दुन्दुभिश्च ततो दिव्यस् ताडितो देवकिङ्करैः ।
ववौ च मारुतः पुण्यश् शुचिगन्धस्सुखावहः ॥ १७४॥

ततः प्रीतो महादेवस् सर्वलोकेश्वरः प्रभुः ।
अब्रवीत् त्रिदशांस्तत्र हर्षयन्निव मां तदा ॥ १७५॥

श्रीमहादेवः—

पश्यध्वं त्रिदशास्सर्वे उपमन्योर्महात्मनः ।
मयि भक्तिं परां दिव्याम् एकभावादवस्थिताम् ॥ १७६॥

उपमन्युः—

एवमुक्तास्ततः कृष्ण सुरास्ते शूलपाणिना ।
ऊचुः प्राञ्जलयो भूत्वा नमस्कृत्वा वृषध्वजम् ॥ १७७॥

देवाः—

भगवन् देवदेवेश लोकनाथ जगत्पते ।
लभतां सर्वकामेभ्यो वरं त्वत्तो द्विजोत्तमः ॥ १७८॥

उपमन्युः—

एवमुक्तस्ततश्शर्वस् सुरैर्ब्रह्मादिभिस्तथा ।
आह मां भगवानीशः प्रहसन्निव शङ्करः ॥ १७९॥

श्रीमहादेवः—

वत्सोपमन्यो प्रीतोऽस्मि पश्य मां मुनिपुङ्गव ।
दृढभक्तोऽसि विप्रेन्द्र मया जिज्ञासितो ह्यसि ॥ १८०॥

अनया चैव भक्त्या वै अत्यर्थं प्रीतिमानहम् ।
तस्मात् सर्वान् ददाम्यद्य कामांस्तव यथेप्सितान् ॥ १८१॥

उपमन्युः—

एवमुक्ते ततस्तात महादेवेन मे विभो ।
हर्षादश्रूण्यवर्तन्त रोमहर्षश्च जायते ॥ १८२॥

अब्रवं च तदा देवं हर्षगद्गदया गिरा ।
जानुभ्यामवनीं गत्वा प्रणम्य च पुनः पुनः ॥ १८३॥
अद्य जातो ह्यहं देव अद्य मे सफलं तपः ।
यन्मे साक्षान्महादेवः प्रसन्नस्तिष्ठतेऽग्रतः ॥ १८४॥
यं शक्राद्या न पश्यन्ति देवाश्चामितविक्रमाः ।
तमहं दृष्टवान् देवं कोऽन्यो धन्यतरो मया ॥ १८५॥
एवं ध्यायन्ति विद्वांसः परं तत्त्वं सनातनम् ।
षड्विंशकमिति ख्यातं यत् परात् परमक्षयम् ॥ १८६॥
स एष भगवान् देवस् सर्वसत्त्वादिरव्ययः ।
सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः ॥ १८७॥
योऽसृजद्दक्षिणादङ्गाद् ब्रह्माणं लोकसम्भवम् ।
वामपार्श्वात् तथा विष्णुं लोकरक्षार्थमीश्वरम् ॥ १८८॥
युगान्ते समनुप्राप्ते रुद्रं प्रभुरथासृजत् ॥ १८९
स रुद्रस्संहरन् कृत्स्नं जगत् स्थावरजङ्गमम् ।
कालो भूत्वा परं ब्रह्म याति संवर्तकानलः ॥ १९०
[1]अयमेव महादेवो जगत् कृत्स्नं चराचरम् ।
कल्पादौ चैव सर्वेषां स्मृतिमाक्रम्य तिष्ठति ॥ १९१
सर्वगस्सर्वभूतात्मा सर्वभूतभवोद्भवः ।

1. क-ब—इदमर्धं नास्ति

आस्ते सर्वगतो नित्यम् अदृश्यस्सर्वदैवतैः ॥ १९२

तं त्वा प्रणम्य शिरसा प्रसाद्य प्रार्थये प्रभो ।
भक्तिर्भवतु मे नित्यं शाश्वती त्वयि शङ्कर ॥ १९३

अतीतानागतं चैव वर्तमानं च नित्यशः ।
जानीयामिति मे बुद्धिस् त्वत्प्रसादात् सुरेश्वर ॥ १९४

क्षीरोदनं च भुञ्जीयां सक्षीरं सह बान्धवैः ।
आश्रमे च सदा मह्यं सान्निध्यं परमस्तु ते ॥ १९५

एवमुक्तस्स मां प्राह भगवाँल्लोकपूजितः ।
ईश्वरोऽयं महातेजाश् चराचरगुरुः प्रभुः ॥ १९६

श्रीमहादेवः—

अजरश्चामरश्चैव भव दुःखविवर्जितः ।
शीलवान् श्रुतसम्पन्नस् सर्वज्ञः प्रियदर्शनः ॥ १९७

अक्षयं यौवनं चैव कुलं गोत्रं तथैव च ॥ १९७॥

क्षीरोदस्सागरश्चैव यत्र यत्रेच्छसे मुने ।
तत्र तत्रैव सान्निध्यं करिष्यामि न संशयः ॥ १९८॥

उपभुज्य पयस्तात अमृतेन समन्वितम् ।
बन्धुभिस्सहितः कल्पं ततो मामुपयास्यसि ॥ १९९॥

तिष्ठ वत्स यथाकामं नोत्कण्ठां कर्तुमर्हसि ॥ २००

स्मृतस्स्मृतश्च ते वत्स पुनर्यास्यामि दर्शनम् ।
सान्निध्यमाश्रये नित्यं करिष्यामि तवानघ ॥ २०१

उपमन्युः—

एवमुक्त्वा महादेवस् सूर्यकोटिसमप्रभः ।
ममेशानो वरं दत्त्वा तत्रैवान्तरधीयत ॥ २०२

एवं दृष्टो मया कृष्ण देवदेवस्समाधिना ।
तदवाप्तं च मे सर्वं यदुक्तं तेन धीमता ॥ २०३

प्रत्यक्षं चैव ते कृष्ण पश्य सिद्धानवस्थितान् ।
ऋषीन् विद्याधरान् यक्षान् गन्धर्वानप्सरोगणम् ॥ २०४

पश्य वृक्षाननौपम्यान् सदा पुष्पफलान्वितान् ।
सर्वर्तुकुसुमैर्युक्तान् स्निग्धपत्रान सुशाखिनः ॥ २०५

एवमेतन्महादेवाल्लब्धवानस्मि केशव* ॥ २०५॥

एतान् सहस्रशश्चान्यान् समभिध्यातवान् हरः ।
कस्मात् प्रसादं भगवान् न कुर्यात्तव माधव ॥ २०६॥

त्वादृशेन हि देवानां श्लाघनीयस्समागमः ।
ब्रह्मण्येनानृशंसेन श्रद्दधानेन चाच्युत ॥ २०७॥

जप्यं च ते प्रदास्यामि येन द्रक्ष्यसि शङ्करम् ॥ २०८

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

श्रीभगवान्—

अब्रवं तमहं ब्रह्मन् त्वत्प्रसादान्महामुने ।
द्रक्ष्ये [1]दितिजसङ्घानां मर्दनं त्रिदशेश्वरम् ॥ २०९

दिनेऽष्टमे च विप्रर्षे दीक्षितोऽहं यथाविधि ।
दण्डी मुण्डी कुशी चीरी घृताक्तो मेखली तथा ॥ २१०

मासमेकं फलाहारो द्वितीयं [2]सलिलाशनः ।
[3]तृतीयं च चतुर्थं च पञ्चमं चानिलाशनः ॥ २११

एकपादेन तिष्ठंश्च ऊर्ध्वबाहुरतन्द्रितः ।
तेजस्सूर्यसहस्रस्य अपश्यं दिवि भारत ॥ २१२

तस्य मध्यगतं चापि तेजसः पाण्डुनन्दन ।
इन्द्रायुधपिनद्धाङ्गं विद्युन्मालाविभूषितम ॥ २१३

नीलशैलघनप्रख्यं बलाकाभूषितं घनम् ॥ २१३॥

तमास्थितश्च भगवान् देव्या सह महाद्युतिः ।
तपसा तेजसा कान्त्या दीपयन् सह भार्यया ॥ २१४॥

रराज भगवांस्तत्र देव्या सह महेश्वरः ।
सोमेन सहितस्सूर्यो यथा मेघस्थितस्तथा ॥ २१५॥

संहृष्टरोमा कौन्तेय विस्मयोत्फुल्ललोचनः ।

---

1. अ-ख—यमघ 2. क-घ—चानिलाशनः

3. क-घ—इदमर्धं नास्ति

अपश्यं देवसङ्घानां गतिमार्तिहरं हरम् ॥ २१६॥

किरीटिनं [1]जटिलं शूलपाणिं
पिनाकिनं वज्रिणं तीक्ष्णदंष्ट्रम् ।
शुभाङ्गदं व्यालयज्ञोपवीतम्
दिव्यां मालामुरसा नैकवर्णाम् ॥ २१७॥

समुद्वहन्तं गुल्फदेशावलम्बाम्
सूर्यं यथा परिविष्टं ससन्ध्यम् ।
वर्षात्यये तद्वदपश्यमेनं
महेश्वरं नन्दिविनायकाद्यैः ॥ २१८॥

प्रमथानां गणैश्चैव समन्तात् परिवारितम् ।
[2]शरदीव सुदुष्प्रेक्ष्यं परिविष्टं दिवाकरम् ॥ २१९॥

एकादशशताश्चैनं रुद्रास्सगणबान्धवाः ।
अस्तुवन् नियतात्मानः कर्मभिश्शुभकर्मिणः ॥ २२०॥

आदित्या वसवस्साध्या विश्वे देवास्तथाऽश्विनौ ।
विश्वाभिस्स्तुतिभिश्चैनं नीलकण्ठमुमापतिम् ॥ २२१॥

योगेश्वरास्सुबहवो महेशं बहुधाऽस्तुवन् ॥ २२२

महाभूतानि च्छन्दांसि प्रजानां पतयो मखाः ।
सरितस्सागरा नागा गन्धर्वाप्सरसस्तथा ॥ २२३

1. क-घ—र्गादनम्	2. क-घ—इदमर्धं नास्ति

विद्याधराश्च गीतेन वाद्यनृत्तादिनाऽर्चयन् ॥ २२३॥
तेजस्विनां मध्यगतम् तेजोराशिं जगत्पतिम् ।
[1]ईक्षितुं च महादेवं न मे शक्तिरभूत् तदा ॥ २२४॥
ततो देवेन पश्येति वदस्वेत्यभिभाषितः ।
दृष्ट्वा देवं तथा देवीम् अस्तुवं संस्तुतं सुरैः ॥ २२५॥

नमोऽस्तु ते शाश्वत सर्वयोगिने
ब्रह्माधिपं त्वामृषयो वदन्ति ।
तपश्च सत्त्वं च रजस्तमश्च
त्वामेव सर्वं प्रवदन्ति सन्तः ॥ २२६॥

त्वं वै ब्रह्मा च रुद्रश्च वरुणोऽग्निर्मनुर्भवः ।
धाता त्वष्टा विधाता च त्वं प्रभुस्सर्वतोमुखः ॥ २२७॥
त्वत्तो जातानि भूतानि स्थावराणि चराणि च ।
त्वमादिस्सर्वभूतानां संहर्ता च त्वमेव हि ॥ २२८॥

ये चेन्द्रियार्थाश्च मनश्च कृत्स्नं
ये वायवस्सप्त तथैव चाग्निः ।
या देहस्था देवताश्चापि पुंसां
तस्मात् परं त्वामृषयो वदन्ति ॥ २२९॥

वेदा यज्ञाश्च सोमाश्च दक्षिणाः पावकः पुनः ।

1. क-घ—इदमर्धं नास्ति

यज्ञोपाङ्गं च यत् किञ्चिद् भगवांस्त्वमसंशयम् ॥ २३०॥
इष्टं दत्तं तपोऽधीतं व्रतानि नियमाश्च ये ।
ह्रीः कीर्तिश्श्रीर्धृतिस्तुष्टिस् सिद्धिश्चैव त्वदर्पणाः ॥ २३१॥
कामः क्रोधो भयं लोभो मदस्तम्भोऽथ मत्सरः ।
आधयो व्याधयश्चैव भगवंस्तनवस्तव ॥ २३२॥
प्रकृतिर्विकारः प्रलयः प्रधानं प्रभवाप्ययः ।
मनसः परमा योनिस् स्वभावश्चेतना धृतिः ॥ २३३॥
[1]अव्यक्तपावन विभो सहस्रांशो हिरण्मय ।
आदिर्गणानां सर्वेषां भवान् वै जीवनाश्रयः ॥ २३४॥
महानात्मा मनुर्ब्रह्मा विश्वं शम्भुस्स्वयम्भुवः ।
बुद्धिः प्रज्ञोपलब्धिश्च संवित् ख्यातिर्धृतिस्स्मृतिः ॥ २३५॥
पर्यायवाचकैश्शब्दैर् महानात्मा विभाव्यसे ॥ २३६
त्वां बुद्ध्वा ब्राह्मणो विद्वान न प्रमोहं निगच्छति ॥ २३६॥
हृदयं सर्वभूतानां क्षेत्रज्ञस्त्वमृषिभिस्स्तुतः ।
सर्वतः पाणिपादस्त्वम् सर्वतोऽक्षिशिरोमुखः ॥ २३७॥
सर्वतश्श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठसि ॥ २३८
[2]कालस्त्वमसि तिग्मांशोर् निमेषादिषु कर्मसु ।
त्वं वै प्रभार्चिः पुरुषस् सर्वस्य हृदि निश्चितः ॥ २३९

1. क-ख—अर्धचतुष्टयं नास्ति  2. क—फलंत्वमसि

अणिमा लघिमा प्राप्तिर् ईशानो ज्योतिरव्ययः ॥ २३९॥

त्वयि बुद्धिर्मतिर्लोकाः प्रपन्नास्संश्रिताश्च ये ।
ध्यायिनो नित्ययोगाश्च सत्यसन्धा जितेन्द्रियाः ॥ २४०॥

यस्त्वां ध्रुवं वेदयते गुहाशयं
[1]कविं पुराणं पुरुषं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां परां गतिं
[2]स बुद्धिमान् बुद्धिमतीत्य तिष्ठति ॥ २४१॥

विदित्वा सप्त सूक्ष्माणि षडङ्गं त्वां च मूर्तितः ।
प्रधानविधियोगस्थस् त्वामेव विशते बुधः ॥ २४२॥

एवमुक्ते मया पार्थ भवे चार्तिविनाशने ।
चराचरं जगत् सर्वं सिंहनादमथाऽकरोत् ॥ २४३॥

सविप्रसङ्घाश्च सुरासुराश्च
नागाः पिशाचाः पितरो वयांसि ।
रक्षोगणा भूतगणाश्च सर्वे
महर्षयश्चैव तदा प्रणेमुः ॥ २४४॥

मम मूर्धनि दिव्यानां कुसुमानां सुगन्धिनाम् ।
राशयो निपतन्ति स्म वायुश्च सुसुखो ववौ ॥ २४५॥

---

1. ख-घ—प्रभुं

2. क—समाधिमान् घ—समृद्धिमान्

निरीक्ष्य भगवान् देवीं मुखं मां च जगद्धितः ।
शतक्रतुं चाभिवीक्ष्य स्वयं मामाह शङ्करः ॥ २४६॥

श्रीमहादेवः—

विद्धन् कृष्ण परा भक्तिर् अस्मासु तव शत्रुहन् ।
क्रियतामात्मनश्श्रेयः प्रीतिर्हि परमा त्वयि ॥ २४७॥

[1]वृणीष्व च वरान् कृष्ण तव दातास्मि सत्तम ।
ब्रूहि यादवशार्दूल यानिहेच्छसि दुर्लभान् ॥ २४८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[ अस्मिन्नध्याये २४८॥ श्लोकाः ]

---

1. अ-ख—वृणीष्व वचनात्

## ॥ त्रयोविंशोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति पार्वतीपरमेश्वराभ्यां स्वस्मै वरप्रदानकथनम् ॥ १ ॥ उपमन्युना कृष्णं प्रति तण्डिकृतश्रीमहादेवस्तुत्यनुवादः ॥ २ ॥

श्रीभगवान्—

मूर्ध्ना प्रणम्य तु भवं देवमीशानमव्ययम् ।
परमं हर्षमागम्य भगवन्तमथाब्रवम् ॥ १

धर्मे दृढत्वं युधि शत्रुघातं
यशस्तथाऽग्र्यं परमं बलं च ।
योगप्रियत्वं बुधसन्निकर्षे
वृणे सुतानां च शतं शतानि ॥ २

एवमस्त्विति तद्वाक्यं मयोक्तः प्राह शङ्करः ॥ २॥

ततो मां जगतो माता धारिणी सर्वपावनी ।
उवाच मां प्रणिहिता शर्वाणी तपसां निधिः ॥ ३॥

पार्वती—

दत्तो भगवता पुत्रस् साम्बो नाम तदाऽनघ ।
मत्तो हृष्टो वरानिष्टान् गृहाण त्वं ददामि ते ॥ ४॥

श्रीभगवान्—

प्रणम्य शिरसा यावन्मयोक्ता पाण्डुनन्दन ॥ ५

द्विजेष्वकोपं पितृतः प्रसादं
शतं स्रोमानुपभोगं परं च ।

कुले प्रीतिं मातृतश्च प्रसादं
शमप्राप्तिं प्रवृणे चापि देवि ॥ ६

उमा—

एवं भविष्यत्यमरप्रभाव
नाहं मृषा जातु वदे कदाचित् ।
भार्यासहस्राणि च षोडशैव
तासु प्रियत्वं च तथाऽक्षयत्वम् ॥ ७

प्रीतिं चाग्र्यां बान्धवानां प्रसादं
ददामि ते वपुषः काम्यतां च ।
भवन्तु नित्यमतिथीनां बहूनि
गृहे च तुभ्यं प्रीतिमतां शतानि ॥ ८

श्रीभगवान्—

एवं दत्त्वा वरान् देवो मम देवी च भारत ।
अन्तर्हितः क्षणे तस्मिन् सगणो मां विसृज्य च ॥ ९
एतदत्यद्भुतं सर्वं ब्राह्मणायातितेजसे ।
उपमन्यवे मया कृत्स्नम् आख्यातं पौरवोत्तम ॥ १०
नमस्कृत्य स तु प्राह देवदेवाय सुव्रत ॥ १०॥

उपमन्युः—

सुप्रसादवरो लोके नास्ति शर्वसमोऽरिहन् ।
नास्ति शर्वसमो देवो नास्ति शर्वसमा गतिः ॥ ११॥

ऋषिरासीत् कृते तात तण्डिरित्येव विश्रुतः ॥ १२

दशवर्षसहस्राणि तेन देवस्समाधिना ।

आराधितोऽभूद्भक्तेन तस्योदर्कं निशामय ॥ १३

स दृष्टवान महादेवम् अस्तौषीच्च स्तवैर्विभुम् ॥ १३॥

तण्डिः—

पवित्राणां पवित्रं च गतिर्गतिमतां वर ।

[1]अत्युग्रतेजसां तेजस् तपसां परमो निधिः ॥ १४॥

विश्वमाय हिरण्याक्ष पुरुहूतनमस्कृत ।

भूरिकल्याणद विभो पुरुहूत नमोऽस्तु ते ॥ १५॥

जनीमरणभूतानां द्विजानां यततां विभो ।

निर्वाणद सहस्रांशो नमस्तेऽस्तु सुखाश्रय ॥ १६॥

ब्रह्मा शतक्रतुर्विष्णुर् विश्वे देवा महर्षयः ।

न विदुस्त्वां समत्वेन कुतो वेत्स्यामहे वयम् ॥ १७॥

त्वत्तः प्रवर्तते कालस् त्वयि कालश्च लीयते ।

कालाख्यः पुरुषाख्यश्च ब्रह्माख्यश्च त्वमेव हि ॥ १८॥

त्वमवस्थास्थितास्तिस्रः पुराणश्च महर्षिभिः ॥ १९

अधिपौरुषमध्यात्मम् अधिभूताधिदैवतम् ।

1 क-च — इदमर्धं नास्ति

अधिलोक्यधिविज्ञानम् अधियज्ञस्त्वमेव हि ॥ २०

यं विदित्वाऽऽत्मदेहस्थं दुर्विदं दैवतैरपि ।
विद्वांसो यान्ति निर्मुक्ताः परं भावमनामयम् ॥ २१

अनिच्छतस्तव विभो जन्ममृत्युन्तरे ततः ।
द्वारं तत् स्वर्गमोक्षाणाम् आक्षेप्ता त्वं ददासि च ॥ २२

त्वमेव मोक्षस्स्वर्गश्च कामः क्रोधस्त्वमेव हि ।
ब्रह्मा विष्णुश्च रुद्रश्च [1]स्कन्देन्द्रौ सविता यमः ॥ २३

सत्त्वं रजस्तमश्चैव अधश्चोर्ध्वं त्वमेव हि ।
वरुणेन्द्रमरुद्धाता विधाता त्वं धनेश्वरः ॥ २४

भूर्वायुर्ज्योतिरादित्यो वाग्बुद्धिस्त्वं गतिर्मनः ।
कर्म सत्यानृते चोभे त्वमेवास्ति च नास्ति च ॥ २५

इन्द्रियाणीन्द्रियार्थाश्च यत् परं प्रकृतेर्ध्रुवम् ।
विश्वाविश्वे भवो भावश् चिन्त्याचिन्त्यं त्वमेव हि ॥ २६

यच्चैतत् परमं ब्रह्म यच्च भव्यं च यत् परम् ।
[2]योगिभिस्साङ्ख्ययोगैश्च ध्यातवान् नात्र संशयः ॥ २७

नूनमद्य कृतार्थोऽस्मि नूनं प्राप्तोऽस्मि तां गतिम् ।
यां गतिं प्राप्नुवन्तीह ज्ञानान्निर्मलबुद्धयः ॥ २८

1. ख—स्वग्निन्द्रः
2. क-ख—या गतिस्सर्वयोगीनां स भवान् नात्र

अहो मूढास्स्म सुचिरम् इमं कालमबुद्धयः ।
यन्न विद्मः परं देवं [1]शङ्करं ये विदुर्बुधाः ॥ २९

योऽयमासादितस्साक्षाद् बहुभि[2]र्जन्मभिर्मया ।
भक्तानुग्रहकृद्देवो यं ज्ञात्वाऽमृतमश्नुते ॥ ३०

देवासुरमनुष्याश्च यत्तद् गुह्यं सनातनम् ।
गुहायां निहितं ब्रह्म दुर्विज्ञेयं सुरैरपि ॥ ३१

स एव भगवान् देवस् सर्वज्ञस्सर्वतोमुखः ।
सर्वात्मा सर्वदर्शी च सर्वगस्सर्ववेदिता ॥ ३२

प्राणकृन् प्राणहृन् प्राणः प्राणधृक् प्राणिनां गतिः ।
देहकृद्देहभृद्देही देहिनां परमा गतिः ॥ ३३

अध्यात्मगतिनिष्ठनां मुनीनामात्मवेदिनाम् ।
अपुनर्जनिकामानां या गतिस्सोऽयमीश्वरः ॥ ३४

अयनं सर्वभूतानां शुभाशुभगतिः प्रभुः ।
अयं च जन्महरणे विदध्यान् सर्वजन्तुषु ॥ ३५

अयं च सर्वकामानाम् ऋषीणां सिद्धिदः प्रभुः ।
अयं हि सिद्धिकामानां द्विजानां मोक्षदः प्रभुः ॥ ३६

भूवाद्यान् सप्त भुवनान् उत्पाद्य त्रिदिवौकसः ।
बिभर्ति देवस्तनुभिर् अष्टाभिस्स ददाति च ॥ ३७

1. क-ब—सार्वं यं ख—शाश्वतं यं 2. क-ब—कर्मभि

अतः प्रवर्तते सर्वम् अस्मिन् सर्वं प्रतिष्ठितम् ।
अस्मिंश्च प्रलयं याति सोऽयमेकस्सनायकः ॥ ३८

अयं च सत्यकामानां सत्यलोकः परस्सताम् ।
अपवर्गश्च मुक्तानां कैवल्यं चात्मवादिनाम् ॥ ३९

अयं ब्रह्मादिभिस्सिद्धैर् गुहायां सेवितः प्रभुः ।
देवासुरमनुष्याणां प्रकाशो न भवेदिति ॥ ४०

तेन देवासुरनरा भूतेशं न विदुर्भवम् ।
मोहिताः खल्वनेनैव हृच्छयेन प्रचोदिताः ॥ ४१

ये चैनं सम्प्रपद्यन्ते भक्तियोगेन भारत ।
तेषामेवात्मनाऽऽत्मानं दर्शयत्येव हृच्छयः ॥ ४२

यं ज्ञात्वा न पुनर्जन्म मरणं वाऽपि विद्यते ।
यं विदित्वा परं वेद्यं वेदितव्यं न [1]विद्यते ॥ ४३

यं लब्ध्वा [2]परमं लाभं मन्यते नाधिकं पुनः ।
प्राणसूक्ष्मां परां बुद्धिं आच्छाद्याक्षय्यमावहाम् ॥ ४४

यं साङ्ख्यं गुणतत्त्वज्ञास् साङ्ख्यशास्त्रविशारदाः ।
सूक्ष्मज्ञानरतास्सर्वे ज्ञात्वा मुच्यन्ति बन्धनैः ॥ ४५

यं च वेदविदो नित्यं ध्यायन्ति विमलाशयाः ।

1 क-घ—रोचते

2 क-घ—परमानन्दं नानन्दं मन्यते परम्

अयं च देवयानानाम् आदित्यो द्वारमुच्यते ॥ ४६

अयं च पितृयानानां चन्द्रमा द्वारमुच्यते ।
एषा तात गतिश्चित्रा संवत्सरयुगादिषु ॥ ४७

भावाभावौ तदा द्वौ च अयने दक्षिणोत्तरे ॥ ४७॥

एवं प्रजापतिः पूर्वम् आराध्य बहुभिस्स्तवैः ।
वरयामास पुत्रत्वे [1]ताण्डिल्यो द्विजसंज्ञितः ॥ ४८॥

ऋग्भिर्यमनुशंसन्ति नामकर्माणि बह्वृचाः ।
यजुर्भिर्ये हविर्वेद्यां जुह्वुरध्वर्यवोऽध्वरे ॥ ४९॥

[2]सामभिर्ये च गायन्ति सामगाश्शुद्धबुद्धयः ॥ ५०

[3]यज्ञस्य च परा योनिर् यश्चायमपरस्स्मृतः ।
रात्र्यहश्श्रोत्रनयनः पक्षमासशिरोभुजः ॥ ५१

ऋतुर्वीर्यस्तपोवीर्यः कालवीर्यस्सनातनः ।
मृत्युर्यागो हुताशश्च कालस्संहारवेगवान् ॥ ५२

कालस्य परमा योनिः कालश्चायं सनातनः ॥ ५२॥

चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना ।
ध्रुवस्सप्तर्षयश्चैव भुवनास्सप्त एव च ॥ ५३॥

प्रधानं महदव्यक्तं विशेषान्तं सचेतनम् ।

---

1. घ—ताळव्यां 2. अ-क-ख—नाम
3 क-घ—यजूंषि परमा योनिर् पतिश्चायं परस्स्मृतः। [ पाठान्तरम् ]

ब्रह्मादिस्तम्बपर्यन्तं भूतानि निवसन्ति यत् ॥ ५४॥

अष्टौ प्रकृतयश्चैव प्रकृतिभ्यश्च यत् परम् ।
अस्य देवस्य च सर्वं कृत्स्नं सम्परिवर्तते ॥ ५५॥

[1]एतत् तत् परमानन्दम् एतत् तत् परतः परम् ।
एषा गतिर्हि भक्तानाम् एष भावः परस्सताम् ॥ ५६॥

एतत् पदमनुद्विग्नम् एतद्ब्रह्म सनातनम् ।
शास्त्र[2]वेदाङ्गविदुषाम् एतद्ध्यानं परं पदम् ॥ ५७॥

इयं सा परमा काष्ठा [3]इयं सा परमा कला ।
इयं सा परमा बुद्धिर् इयं सा परमा गतिः ॥ ५८॥

इयं सा परमा शान्तिर् इयं सा निर्वृतिः परा ।
यं प्राप्य कृतकृत्यास्स्म इति [4]मन्यन्ति मेधसा ॥ ५९॥

इयं तुष्टिरियं सिद्धिर् इयं श्रुतिरियं स्मृतिः ।
अध्यात्मगतिनिष्ठानां विदुषां प्राप्तिरव्यया ॥ ६०॥

[5]यजतां कामकामानां यज्ञैर्विपुलदक्षिणैः ।
या गतिर्दैवतैर्दिव्या या गतिस्त्वं सनातन ॥ ६१॥

जपहोमव्रतैः कृच्छ्रैर् नियमैर्देहतापनैः ।

1. क-ख—अर्धद्वयं नास्ति　2. क—वेदान्त
3. क—इतः चत्वारः पादा न सन्ति
4. ख—मन्यमन्यमेधसः　ग—मन्यन्ति मेधसः
5. क-ख—इदमर्धं नास्ति

तप्यतां या गतिर्देव वैराग्ये सा गतिर्भवान् ॥ ६२॥

कामन्यासकृतार्थानां विरक्तानां ततस्ततः ।
या गतिस्सर्वभावेन सा गतिस्त्वं सनातन ॥ ६३॥

[1]अपुनर्जन्मकामानां वैराग्ये वर्ततां परे ।
विकृतीनां लयानां च सा गतिस्त्वं सनातन ॥ ६४॥

ज्ञानविज्ञाननिष्ठाद्या निरुपाख्या निरञ्जना ।
कैवल्ये या गतिर्देव परमा सा गतिर्भवान् ॥ ६५॥

वेदशास्त्रपुराणोक्ताः पञ्चैता गतयो भवान् ।
त्वत्प्रसादात् तु लभ्यन्ते न लभ्यन्तेऽन्यथा विभो ॥ ६६॥

उपमन्युः—

इति तण्डिस्तपोयोगात् तुष्टावेशानमव्ययम् ।
जगौ परमया ब्रह्मन् पुरा लोककृता जगौ ॥ ६७॥

ब्रह्मा शतक्रतुर्विष्णुर् विश्वे देवा महर्षयः ।
न विदुस्त्वामितीतस्ते तुष्टः प्रोवाच तं शिवः ॥ ६८॥

श्रीमहादेवः—

अजरश्चाव्ययश्चैव भविता दुःखवर्जितः ।
यशस्वी तेजसा युक्तो देवज्ञानसमन्वितः ॥ ६९॥

ऋषीणामभिगम्यस्त्वं सूत्रकर्ता सुतस्तव ।

1. क-ध—अपुनस्तारका

मत्प्रसादद्विजश्रेष्ठ भविष्यति न संशयः ॥ ७०॥
कं वा सकामं दास्यामि ब्रूहि यद्यच्च काङ्क्षसे ॥ ७१

उपमन्युः—

प्राञ्जलिस्सन्नुवाचेदं त्वयि भक्तिर्दृढाऽस्तु मे ॥ ७१॥
एवं दत्त्वाऽचिराद्देवो वन्द्यमानस्सहर्षिभिः ।
स्तूयमानश्च विबुधैस् तत्रैवान्तरधीयत ॥ ७२॥
अन्तर्हिते भगवति सानुगे यादवेश्वर ।
ऋषिराश्रममासाद्य ममैतत् प्रोक्तवानिह ॥ ७३॥
यानि च प्रथितान्यादौ तण्डिराख्यातवान् मम ।
नामानि माधवश्रेष्ठ तथा त्वं शृणु सिद्धये ॥ ७४॥
दश नामसहस्राणि [1]देवस्याह पितामहः ।
सर्वस्य शास्त्रेषु तथा दश नामशतानि वै ॥ ७५॥
गुह्यानि यानि नामानि तण्डिर्भगवतोऽच्युत ।
देवप्रसादाद्देवेश पुरा प्राह महात्मनः ॥* ७६॥

श्रीभगवान्—

ततस्स प्रयतो भूत्वा मम तात युधिष्ठिर ।
प्राञ्जलिः प्राह विप्रर्षिर् नाम[2]साहस्रमादितः ॥ ७७॥

---

1. घ—देवेष्वाह
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
2. क-घ—संहार

उपमन्युः—

ब्रह्मप्रोक्तैर् ऋषिप्रोक्तैर् वेदवेदाङ्गपारगैः ।
सर्वलोकेषु विख्यातैस् स्थाणुं स्तोष्यामि नामभिः ॥ ७८॥

[1]महद्भिरेतैस्तत्त्वज्ञैस् सिद्धैस्सर्वार्थसाधकैः ।
ऋषीणां तन्महाभक्त्या कृतैर्देवैः कृतात्मनाम् ॥ ७९॥

यथोक्तैर्लोकविख्यातैर् मुनिभिस्तत्त्वदर्शिभिः ।
प्रवरं प्रथमं स्वर्ग्यम् सर्वभूतहितं शुभम ॥ ८०॥

शुभैस्सर्वत्र जगति ब्रह्मलोकावतारितैः ।
यद्वैतत् परमं गुह्यं ब्रह्मप्रोक्तं सनातनम् ॥ ८१॥

वक्ष्ये यदुकुलश्रेष्ठ शृणुष्वावहितो मम ॥ ८२

परत्वेनास्तुवन् देवं भक्तास्तु परमेश्वरम ।
तेन ते श्रावयिष्यामि यत्तद्ब्रह्म सनातनम् ॥ ८३

न शक्यं विस्तरात् कृत्स्नम् वक्तुं शर्वस्य केनचित् ।
युगे युगे विभूतीनाम् अपि वर्षशतैरपि ॥ ८४

यस्यादिमध्यगं सूर्यम् सुरैरपि न गम्यते ।
कस्तस्य शक्नुयाद्वक्तुम् गुणान् कार्त्स्न्येन माधव ॥ ८५

किन्तु देवस्य महतस् सङ्क्षिप्तार्थपदाक्षरम् ।
शक्तितश्चरितं वक्ष्ये प्रसादात् तस्य चैव हि ॥ ८६

1. क-ब—नमद्भि

अप्राप्य हि ततोऽनुज्ञां न शक्यं स्तोतुमीश्वरम् ।
यद्यनेनाप्यनुज्ञातस् स्तुवत्येवं सदाशिवम् ॥ ८७
अनादिनिधनस्याहम् हंसयोनेर्महात्मनः ।
नाम्नां किञ्चित् समुद्देशं वक्ष्ये ह्यव्यक्तयोनिनः ॥ ८८
वरदस्य वरेण्यस्य विश्वरूपस्य धीमतः ।
शृणु नामसमुद्देशम् यदुक्तं पद्मयोनिना ॥ ८९
दश नामसहस्राणि यान्याह प्रपितामहः ।
तानि निर्मथ्य मनसा दध्नो घृतमिवोद्धृतम् ॥ ९०
गिरेस्सारं यथा हेम पुष्पात् सारं यथा मधु ।
घृतात् सारं यथा मण्डस् तथैतत् सारमुद्धृतम् ॥ ९१
सर्वपाप्मापहमिदं चतुर्वेदसमन्वितम् ।
[1]नियमेनाधिगन्तव्यम् धार्यं च प्रयतात्मना ॥ ९२
शान्तिकं पौष्टिकं चैव रक्षोघ्नं पावनं महत् ॥ ९२॥
इदं भक्ताय दातव्यम् श्रद्दधानास्तिकाय च ।
नाश्रद्दधानापूजाय नास्तिकायाजितात्मने ॥ ९३॥
यस्त्वभ्यसूयते देवं भूतात्मानं पिनाकिनम् ।
स कृष्ण नरकं याति सह पूर्वै [2]स्सहानुगैः ॥ ९४॥
इदं ध्यानमिदं योगम् इदं ध्येयमनुत्तमम् ।

1. क-घ—प्रयत्नेना 2. क-ध—:पितामहैः

इदं जप्यमिदं ज्ञानम् रहस्यमिदमुत्तमम् ॥ ९५॥
इदं ज्ञात्वाऽन्तकाले तु गच्छेद्धि परमां गतिम् ।
पवित्रं मङ्गलं पुण्यम् कल्याणमिदमुत्तमम् ॥ ९६॥
निगदिष्ये महाबाहो स्तवानामुत्तमं स्तवम् ॥ ९७
इदं ब्रह्मा पुरा ज्ञात्वा सर्वलोकपितामहः ।
सर्वस्तवानां दिव्यानाम् राजत्वे समकल्पयत् ॥ ९८
तदाप्रभृति चैवायम् ईश्वरस्य महात्मनः ।
स्तवराज इति ख्यातो जगत्यमरपूजितः ॥ ९९
ब्रह्मलोकादयं चैव स्तवराजोऽवतारितः ।
यस्मात् तण्डिः पुरा प्राह तेन तण्डिः पितामहः ॥ १००
स्वर्गलोकात्तु भूलोकम् तण्डिना ह्यवतारितः ।
सर्वमङ्गलमाङ्गल्यम् सर्वपापप्रणाशनम् ॥ १०१
निगदिष्ये महा[1]पुण्यम् स्तवानामुत्तमं स्तवम् ।
ब्रह्मणो यत् परं ब्रह्म पुराणमपि यत् परम् ॥ १०२
तेजसामपि यत्तेजस् तपसामप्यथो तपः ।
शान्तीनामपि या शान्तिर् द्युतीनामपि या द्युतिः ॥ १०३
दान्तानामपि यो दान्तो ध्यायतामपि योऽवधिः ।
देवानामपि यो देवो मुनीनामपि यो मुनिः ॥ १०४

1. क-घ—भीमं

यज्ञानामपि यो यज्ञश् शिवानामपि यश्शिवः ।
रुद्राणामपि यो रुद्रः प्रभुः प्रभवतामपि ॥ १०५

योगिनामपि यो योगी कारणानां च कारणम् ।
यतो लोकास्सम्भवन्ति न भवन्ति यतः पुनः ॥ १०६

सर्वभूतात्मभूतस्य हरस्यामिततेजसः ।
अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु ॥ १०७
यच्छ्रुत्वा मनुजश्रेष्ठ सर्वान् कामानवाप्स्यसि ॥ १०७॥

॥ शिवसहस्रनामस्तोत्रम् ॥

स्थिरस्स्थाणुः प्रभुर्भानुः प्रवरो वरदो वरः ।
सर्वात्मा सर्वविख्यातस् सर्वकर्मकरो भवः ॥ १०८॥

जटी चर्मी शिखी खड्गी सर्वाङ्गस्सर्वभावनः ।
हरिणो हरिणाक्षश्च सर्वभूतहितः प्रभुः ॥ १०९॥

[1]महारोपो महारूपो मखस्त्रिभुवनेश्वरः ।
सत्यस्सत्याश्रयस्सिद्धश् चन्द्रांशुस्सर्पकुण्डलः ॥ ११०॥

वृषश्च वृषरूपश्च वृषस्थो वृषभाक्षगः ।
भीमश्च शितिकण्ठश्च शिवश्श्वेतश्शिवोत्तमः ॥ १११॥

निषङ्गी शितिकेशश्च दितिपो नीललोहितः ।
शरभश्शङ्कुकर्णश्च विलासो विश्वकर्तृकः ॥ ११२॥

---

1. अ-ख—इतः द्वाविंशार्धानि न सन्ति

परः पाशुपतो भद्रो नीलग्रीवो विभीषणः ।
गङ्गाधरः पृथुश्चैव जनेश्वरकुलेश्वरः ॥ ११३॥

उत्तमस्त्रीसहायश्च मधुविन्दो महाग्रहः ।
दिव्यस्सूक्ष्मः परागश्च वीरभद्रो [1]वियन्नगः ॥ ११४॥

शिवश्शम्भुर्भवो भर्ता श्रीकण्ठस्त्रिदशार्चितः ।
क्रव्यादः कीर्तिमान क्रीडी कालाग्निः कार्यकारणः ॥ ११५॥

अण्डश्च बहिरण्डश्च विराड्भूतो विशेषकृत् ।
हिरण्यगर्भहेतुश्च बहिर्भूतः प्रयोजकः ॥ ११६॥

जाग्रत्स्वप्नसुषुप्तिश्च तमश्चश्च विधूतनः ।
मनोबुद्धिरहङ्कारो व्यक्तान्तःकरणात्मकः ॥ ११७॥

विशदो विक्रमश्चैव विश्वो विश्वस्य सङ्ग्रहः ।
अरूपश्चण्डरूपश्च वज्रहस्तः पुरन्दरः ॥ ११८॥

जातवेदाश्च जागर्ती विश्वायामो विनायकः । [1000]
आजानुर्वैनतेयश्च विश्वकर्मा विचक्षणः ॥ ११९॥

हिरण्याक्षस्सुकेशश्च ऋक्षकक्षनरस्तमः ।
वृषो वृषाख्यो वृषदो वृषपर्वा प्रजाहरः ॥ १२०॥

प्रवृत्तिश्च निवृत्तिश्च नियतश्शाश्वतो ध्रुवः ।
श्मशानचारी भगवान् खचरेशस्स्मरार्दनः ॥ १२१॥

1. म—विपन्नगः

अभिवाद्यो महाकर्मा तपस्वी भूतभावनः ।
उन्मत्तवेषप्रच्छन्नस् सर्वलोकप्रजापतिः ॥ १२२॥

महारूपो महाकायस् सर्वरूपो महायशाः ।
महात्मा सर्वरूपश्च विरूपो वामनो मनुः ॥ १२३॥

लोकपालो गृहीतात्मा प्रमादाभयकृद्विभीः ।
पवित्रश्च महांश्चैव नियमो नियमाश्रयः ॥ १२४॥

सर्वकर्मा स्वयम्भूश्च आदिरादिकरो निधिः ।
सहस्राक्षो विरूपाक्षस् सोमनक्षत्रसाधकः ॥ १२५॥

चन्द्रस्सूर्यश्शनिः केतुर् ग्रहो ग्रहपतिर्वरः ।
अद्रिरद्र्यालयः कर्ता मृगबाणार्पणोऽनलः ॥ १२६॥

महातपा दीर्घतपा [1]अदीनो दीनमानसः ।
संवत्सरकरो मन्त्रः प्रमाणं परमं तपः ॥ १२७॥

योगो योग्यो महाबीजो महारेता महातपाः ।
सुवर्णरेतास्सर्वज्ञस् सुबीजो वृषवाहनः ॥ १२८॥

दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः ।
विश्वरूपस्स्वयं श्रेष्ठो बर्धितो गोचनो गणः ॥ १२९॥

गणकर्ता गणपतिर् दिग्वासाः काम्य एव च ।
पवित्रं परमं मन्त्रस् सर्व[2]पापहरो हरः ॥ १३०॥

---

1. क ख—अघोरो घोर	2. अ-ख—भाव

कमण्डलुधरो धन्वी बाणहस्तः प्रतापवान् ।
अशनीशश्शतघ्नीशः खड्गी चापायुधो महान् ॥[200] १३१॥

शिवहस्तस्स्वरूपश्च तेजस्तेजस्करो निधिः ।
उष्णीषी च सुवक्रश्च उदग्रो वितनुस्तथा ॥ १३२॥

दीर्घश्च हरिनेत्रश्च सुतीर्थः कृष्ण एव च ।
सृगालरूपस्सर्वार्थो मुण्डः कुण्डी कमण्डलुः ॥ १३३॥

अजश्च मृगरूपश्च गन्ध[1]धारी कपर्द्यपि ।
ऊर्ध्वरेता गजालिङ्गी गजशायी नभस्स्थलः ॥ १३४॥

त्रिजटश्चीरवासाश्च रुद्रस्सेनापतिर्विभुः ।
अहश्चरश्च नक्तश्च तिग्ममन्युस्सुवर्चसः ॥ १३५॥

गजहा दैत्यहा लोको लोकधाता गणाधिपः ।
सिंहशार्दूलरूपश्च रुरुचर्माम्बरच्छदः ॥ १३६॥

कालयोगी महानादस् सर्वावासश्चतुष्पथः ।
निशाचरः प्रेतचारी [2]भूतचारी महेश्वरः ॥ १३७॥

बहुभूतो बहु[3]वनस् सर्वाधारामृतो गतिः ।
नृत्यप्रियो नित्यनृत्तो नर्तकस्सर्वलासकः ॥ १३८॥

---

1. ख—हारी कपर्द्यपि
2. क-घ—यातु
3. क—वरः + मनोगतिः घ—बहुश्रुतो बहुवरः + मनोगतिः

घोषो महायशाः [1]पाशो नित्यो गिरिचरो नभः ।
सहस्रहस्तो विजयो व्यवसायो ह्यनिन्दितः ॥ १३९॥
अमर्षणो मर्षणात्मा [2]यज्ञभागानुनाशनः ।
दक्षयज्ञापहारी च [3]सुषहो मध्यमस्तथा ॥ १४०॥
तेजोहारी च बलहा मुदितोऽर्थजितावहः ।
गम्भीरघोषो गम्भीरश् श्वेतश्च गिरिवाहनः ॥ १४१॥
न्यग्रोधरूपो न्यग्रोधो वृक्षकर्णस्थितिर्विभुः ।
दीक्षावाहनहर्षश्च सहायः कालधर्मवित् ॥ १४२॥
विष्णुप्रसादितो यज्ञस् समुद्रो बडबामुखः ।
हुताशनसहायश्च प्रशान्तात्मा हुताशनः ॥ १४३॥
उग्रतेजा महातेजा जयो विजयकालवित् । 300
ज्योतिषामयनं सिद्धिस् सन्धिर्विग्रह एव च ॥ १४४॥
शिखी दण्डी जटी चालो मूर्तिजो दुर्धरो बली ।
वैणवी पणवी ताली कालः कालकटङ्कटः ॥ १४५॥
नक्षत्रविग्रहविधिर् गुणवृद्धिर्लयोऽगमः ।
प्रजापतिर्दिशाबाहुर् दिग्वासास्सर्वतोमुखः ॥ १४६॥
विमोचनस्सुरगणो हिरण्यकवचोद्भवः ।

1. क-घ—पारो निरथो निचरो नभः
2. क-घ—यज्ञहा कामनाशनः 3. क-घ—ऋषभो

[1]मेघजो बलवारी च महीचारस्तुतस्तथा ॥ १४७॥
सर्वतूर्यानुनादीशस् सर्वविद्यापरिग्रहः ।
व्यालरूपो बिलावासी हेममाली तरङ्गवित् ॥ १४८॥
त्रिदशस्त्रिदशाध्यक्षो ममताबन्धमोचकः ।
बन्धनस्त्वसुरेन्द्राणां युधि शत्रुविनाशनः ॥ १४९॥
साङ्ख्यप्रसादो दुर्वासास् सर्वसाधुनिषेवितः ।
प्रस्कन्दनो विशाखश्च अतुल्यो यज्ञभागवित् ॥ १५०॥
सर्ववासस्सर्वचारी दुर्वासा वासवोपमः ।
हैमो हेमकरी यज्ञस् सर्वधारी धरोत्तमः ॥ १५१॥
रोहिताक्षो महाक्षश्च विजयाक्षो विशारदः ।
सङ्ग्रहो विग्रहः कर्म सर्व[2]चर्मनिवासकः ॥ १५२॥
[3]मुक्तश्च मुक्तदेहश्च देहारिस्सर्वकामदः ।
सर्वकामप्रसादश्च सुबालो बालरूपधृक् ॥ १५३॥
[4]आकाशनिर्विरूपश्च निपानिरुरगः खगः ।
रौद्ररूपांशुरादित्यो वसुरश्मिस्सुवर्चसः ॥ १५४॥
वहुवेगो महावेगो मनोवेगो निशाचरः ।
सर्वावासश्श्रियावासी अपदेशकरो हरः ॥ १५५॥

---

1. घ—नास्तीदमर्धम्
2. घ—धर्म
3. अ—अमुक्तो
4. क-घ—आकाशो

मुनिरात्ममतिर्लोकस् सभोज्यश्च सहस्रभुक् ।
पक्षी च पक्षिरूपी च अतिदीप्तो विशां पतिः ॥ १५६॥
उन्मादमदनाकार अर्थार्थी कररोमशः ।
वामदेवश्च वामश्च प्राग्दक्षिणश्च वामनः ॥[400] १५७॥
सिद्धयोगोपचारी च सिद्धस्सर्वार्थसाधकः ।
भिक्षुश्च भिक्षुरूपी च नृपाणिर्नृपरोऽव्ययः ॥ १५८॥
महासेनो विशाखश्च [1]षष्टिभोगो गवांपतिः ।
[2]शूलहस्तो वेदहस्तश् चक्रस्तम्भन एव च ॥ १५९॥
ऋपी ऋतुक्रमस्तेनो मधुमेधुकरो मनः ।
वाचस्पत्यो वाजसनो नित्यमाश्रमपूजितः ॥ १६०॥
ब्रह्मचारी लोकचारी सर्वचारी सुचारविन् ।
ईशान ईश्वरः कालो निशाचारी ह्यनेकधृक् ॥ १६१॥
नन्दीश्वरी च नन्दी च नन्दनो मन्त्रवर्धनः ।
भगवानरिहन्ता च कालो ब्रह्मा पितामहः ॥ १६२॥
चतुर्मुखो महालिङ्ग ऊर्ध्वलिङ्गो लयोऽलयः ॥
लिङ्गाध्यक्षस्सुराध्यक्षो लोकाध्यक्षो युगावहः ॥ १६३॥
बीजाध्यक्षो बीजकर्ता अध्यात्मानुगतोऽमलः ।
इतिहासकर्ता कल्पश्च तमोहा जगदीश्वरः ॥ १६४॥

1. क-ख—भागो  2. क-ख—पञ्चदशार्धानि न सन्ति

दम्भो दम्भकरोऽदम्भो वश्यो वशकरः कविः ।
लोककर्ता पशुपतिर् लोकहर्ता ह्यधोक्षजः ॥ १६५॥

अक्षरं परमं ब्रह्म बलवाञ् शक्र एव च ।
नीतिर्ह्यनीतिर्द्वन्द्वात्मा [1]शुद्धात्मानो मनोगतिः ॥ १६६॥

बुद्धिः प्रसाद[2]स्तपनो दर्पणोऽथाप्यमित्रजित् ॥ १६७

वेदकारस्सूत्रकारो विद्वांश्च परमर्दनः ।
महामेघनिनादश्च महामेघवशङ्करी ॥ १६८

अग्निज्वालो महाज्वालो अतिधूमोद्गतायनः ।
वृषणश्शङ्कुनित्यश्च वर्चस्वी धूमकेतनः ॥ १६९

नीलस्तब्धश्च लुब्धश्च शोभनो निरवग्रहः । 500
स्वस्तिदस्स्वस्तिभावश्च भागी भागकरो लघुः ॥ १७०

उत्सङ्गश्च महाङ्गश्च महागर्भः परो युवा ।
कृष्णवर्णस्सुवर्णश्च इन्द्रियस्सर्व[3]प्राणदः ॥ १७१

महापादो महाहस्तो महाकायो महायशाः ।
महामूर्धा महामात्रो महानेत्रो [4]निशालयः ॥ १७२

महादन्तो महाकर्णो महादंष्ट्रो महाहनुः ।
महानासो महाकम्बुर् महाग्रीवः पिनाकधृक् ॥ १७३

---

1. क-ब—युध्यमानो ख—शुद्धमात्यो
2. क-ब—स्वपनो 3. अ—जीवदः
4 ख—ऽनिलाशयः घ—निधालयः

महावक्षा महोरस्क अन्तरात्माऽसृगालयः ।
महाकटिर्महाग्रीवो महाबाहुर्महा[1]भगः ॥ १७४
लम्बमानो लम्बितोष्ठश्च् चलद्रामी यशोनिधिः ।
महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ॥ १७५
महानखो महारोमा महाकेशो महाजटः ।
असम्पन्नः प्रसादश्च प्रौढयोनि[2]रसायकः ॥ १७६
[3]स्नेहनोऽस्नेहनश्चैव अजितश्च महामुनिः ।
वृक्षाकारो वृक्षकेतुर् अनलो वायुवाहनः ॥ १७७
मण्डली मेरुधामा च देवदानवदर्पहा ।
अथर्वशीर्षस्सामास्य ऋक्सहस्राक्षितेक्षणः ॥ १७८
[4]यजुर्वेदभुजो गुह्यः प्रकाशो जङ्गमस्तथा ।
अमोघार्थः प्रसादश्च अभिगम्यस्सुदर्शनः ॥ १७९
उपहारप्रियस्सर्वः कनकः काञ्चनच्छदः ।
नदीनदीकरोऽतप्यः पुष्प[5]रात पतिण्डितः ॥ १८०
द्वापरश्च कलिः कालो घृणी वज्रसमाहितः ।
अगुणो गुणकार्यश्च भूतभावनसारथिः ॥ १८१

1. ख—भेकः
2. ख-घ—रसाधकः
3. अ—इदमर्धं नास्ति
4. क-घ—यज्ञवाद
5. क—रातापतण्डितः ख— रातः पतण्डितः घ—कातापदण्डितः

भस्मशायी भस्मगोप्ता भस्मरूपस्तटिद्गुणः ।
सगुणश्चैव लोपश्च महात्मा मन्त्रपूजितः ॥ १८२

शङ्कुस्त्रिशङ्कुस्सम्पन्नश् शुचिर्भूतनिषेवितः । 600
आश्रमस्थः कपोलस्थो विश्वकर्मपतिर्वरः ॥ १८३

शाखो विशाखस्ताम्रोष्ठस् तरुकालस्सुनिश्चलः ।
कपिलोऽकपिलश्शूर आयुश्चैव परावरः ॥ १८४

गन्धर्वो [1]दितिजस्तार्क्ष्यो विज्ञेयस्सुरसारथिः ।
[2]परश्वथायुधो देवो ह्यर्थकारी सुबान्धवः ॥ १८५

जह्नुर्वीणो महाक्षेप ऊर्ध्वरेता जलेश्वरः ।
अजैकपात् कपाली च त्रिशङ्कुरजितश्शिवः ॥ १८६

धन्वन्तरिर्धूमकेतुस् स्कन्दो वैश्रवणो यमः ।
धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवोऽध्रुवः ॥ १८७

प्रभावस्सर्वगो वायुर् अर्यमा सविता रविः ।
उदग्रश्च विधाता च मान्धाता भूतभावनः ॥ १८८

भवस्तीर्थश्च वाग्मी च सर्वकामगुणावहः ।
पद्मवक्त्रो महावक्त्रश् चन्द्रवक्त्रो मनोऽनघः ॥ १८९

बलवांश्चैव [3]शान्तश्च पुराणः पुण्यसञ्चरी ।

---

1. क-ख—ह्यदिति
2. अ-ख—अर्धद्वयं नास्ति
3. अ-क—शाखा च
ख—शान्तिश्च

क्रूरकर्ता कालरूपो क्रूरभूतमहेश्वरः ॥ १९०

सर्वाशनस्सर्वशायी सर्वेषां प्राणिनां गतिः ।
देवो देवमुखो[1]भर्ता [2]सदसत्सर्वरत्नवित् ॥ १९१

कैलासशिखरावासी हिमवद्गिरिसंश्रयः ।
कूलहारी [3]च कर्ता च बहुयज्ञो बहुप्रदः ॥ १९२

वणिजो वर्धनो वृक्षो नकुलश्चन्दनच्छदः ।
दशग्रीवो महाजत्रुस् सु[4]लभश्च महोषधिः ॥ १९३

सिद्धार्थकारी सिद्धार्थश् छन्दो व्याकरणान्तरः ।
सिंहनादस्सिंहदंष्ट्रस् सिंहकृत् सिंहवाहनः ॥ १९४

प्रभवात्मा जगत्पालो बालो लोकपितामहः । 700
सारङ्गो [5]वरवक्राङ्गः केतुमाली स्वभावनः ॥ १९५

भूतशब्दो भूतपतिर् अहोरात्रमचिन्तनः ॥ १९५॥

हिरण्यवासास्स विभुर् गुहावासः प्रवेशितः ।
प्रतिष्ठाधिर्महाहर्षो जितकामो जितेन्द्रियः ॥ १९६॥

गोधारश्च सुरालश्च पतिः कामी रतिर्धनः ।
महाशितो महानृत्तो ह्यप्सरोगणसेवितः ॥ १९७॥

---

1. अ-ख—भक्तस्  2. घ—सदसत्सर्वयज्ञवत्
3. अ—कूलकर्ता  ख—कुलः कर्ता
4. अ-ख—लोहश्च महोदधिः 5. अ-ख—मधु

महाकेतुर्धनुर्धाता नैकतानुचराचरः ।
आवेदनीय आवेशस् सर्वगन्धर्वतापहः ॥ १९८॥

तरणस्तारणो वायुः परिधानश्च नैर्ऋतिः ।
संयोगो वर्धनो वृद्धो महावृद्धो गणाधिपः ॥ १९९॥

धन्यो धर्मसहायश्च वेदेश्वरपतिः पतिः ।
मुक्तश्च मुक्तवाहश्च द्विविधश्च सुपर्वणः ॥ २००॥

आषाढश्च महाषाढो ध्रुवो हरिहरो हरः ।
वपुरावर्तमानी च सवशेष्ठमहापथः ॥ २०१॥

शिरोहारी नृशंसी च सर्वलक्षणभूषितः ।
अक्षरश्च क्षरो योगी सर्वयोगो महाबलः ॥ २०२॥

समहूयस्समाम्नायस् तीर्थे[1]वेदमहाद्युतिः ।
निर्जीवो जीवनो मन्त्रो ह्यभिध्यो बहुकर्कशः ॥ २०३॥

रत्नभूतोऽथ रत्नाङ्गो महार्णवनिनादवित् ।
मूलो विशाखोऽप्य[2]मृतो व्यक्ताव्यक्तभवो निधिः ॥ २०४॥

आरोहणोऽनिरोहश्च शैलहारी महातपाः ।
सेनाकल्पो महाकल्पो युगो हरिहरो हरः ॥ २०५॥

युगरूपो महारूपो वनानां गहनो नगः ।
न्यायो निर्वापणः पादः पण्डितो ह्यचलो यमः ॥ २०६॥

---

1. अ—वेदो महामति·          2. क-घ—नृतो

बाहुमालो महामालस् सुमालो बहुलोचनः । 800
विस्तारो लवणः क्रूरश् शुक्रमस्तफलोदनः ॥ २०७॥

वृषभो वृषभारूढः फणी बिल्वजटाधरः ।
इन्दुर्विसर्गस्सुमुखो [1]दूरस्थः परदुस्सहः ॥ २०८॥

निर्वेदनस्सुधन्वा च सुगान्धारो महद्धनुः ।
गन्धमाली च भगवान् प्रस्थानस्सर्वकर्मणाम् ॥ २०९॥

पन्थानो बहुलो बाहुस् सकलस्सर्वलोचनः ।
नमस्ताली चिरस्ताली ऊर्ध्वसंवहनो वहः ॥ २१०॥

चित्रपुत्रस्स विख्यातस् सर्वलोकाश्रयोऽतनुः ।
मुण्डो विरूपो विकृतो डिण्डिश्चन्द्रो विकुर्वणः ॥ २११॥

[2]हर्यक्षः ककुभो वृक्षो दीर्घजिह्वस्सहस्रपात् ।
सहस्रमूर्धा विप्रेन्द्रस् सर्वभूतमयो गुरुः ॥ २१२॥

सहस्रबाहुस्सर्वाङ्गश् [3]शरण्यस्सर्वलोककृत् ।
पवित्रस्तु मधुर्मन्त्रो निविष्टः कृष्णपिङ्गलः ॥ २१३॥

ब्रह्मदण्डविनिर्दान्तश् शतघ्नीशतपर्वधृक् ।
पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ॥ २१४॥

गतश्रीर्ब्रह्मकृद्ब्रह्म ब्रह्मविद्ब्राह्मणो गतिः ।

---

1. क-ख—शूरस्तु धनदस्सखा　2. क-ख—भयाक्षः
3. क-ख—इतश्चत्वारः पादा न सन्ति

अनन्तभूतो नैकात्मा वातरंहा मनोजवः ॥ २१५॥

चन्दनी पद्ममालाग्र्यस् स्थाणुस्संहरणो भवः ।

उमापतिरुमाकान्तो जाङ्गलीधृग्दिगम्बरः ॥ २१६॥

वरो वराहो वरदो वरेशस्सुमहासुरः ।

महाप्रभावस्त्रितयश् शत्रुभ्यश्श्वेतपिङ्गलः ॥ २१७॥

भूतात्मा प्रयतात्मा च संयतात्मा प्रधानधृक् ।

सर्वभास्वस्तरुस्तारो धर्मसाधारणो वरः ॥ २१८॥

चराचरात्मा सूक्ष्मात्मा सुवृषो गोवृषेश्वरः । 900

साध्यर्षिर्वसुरादित्यो विवस्वान् सुमहाबलः ॥ २१९॥

व्यासस्सर्वस्सुसङ्क्षेपो विस्तरः पर्ययो नयः ।

ऋतुस्संवत्सरो मासः पक्षस्सङ्ख्यासमागतः ॥ २२०॥

कला काष्ठा लवो मात्रा मुहूर्ताहःक्षपाः क्षणः ।

विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्त्वनिन्दितः ॥ २२१॥

सदसद्व्यक्तमव्यक्तः पिता माता पितामहः ।

स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ २२२॥

निर्वाणं ह्लादनश्चैव ब्रह्मलोकः परा गतिः ।

देवासुरविनिर्माता देवासुरपरायणः ॥ २२३॥

देवासुरगुरुर्देवो देवासुरनमस्कृतः ।

देवासुरमहात्मा च देवासुरमहाश्रयः ॥ २२४॥

देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ।
देवादिदेवो देवर्षिर् देवासुरवरप्रदः ॥ २२५॥

देवासुरवरो देवो देवासुरमहेश्वरः ।
सर्वदेवमयोऽचिन्त्यो देवतात्माऽऽत्मसम्भवः ॥ २२६॥

उद्भिजस्त्रिक्रमो वैद्यो विरजो विरजेश्वरः ।
उग्रो हस्तिमुखो व्याघ्रो हस्तिसिंहो नरर्षभः ॥ २२७॥

विबुधाग्रचरश्रेष्ठस् सर्वदेवोत्तमोत्तमः ।
[1]गुरुकान्तो जितस्वर्गः पवित्रं सर्ववाहनः ॥ २२८॥

प्रवृत्तिशोभनो वृत्त ईशानः प्रभुरव्ययः ।
शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः ॥ २२९॥

आपत्सहायो [2]वीरोऽपि श्रीरामस्सर्वसाधनः ।
ललाटाक्षो विश्वरेता हरिणो ब्रह्मवर्चसः ॥ २३०॥

स्थावराणां पतिश्चैव नियमेन्द्रियवर्धनः ।
निधार्थस्सर्वभूतादिः [3]भूत्यस्सत्यव्रतश्शुचिः ॥1000 २३१॥

व्रताधिपः परं ब्रह्म मुक्तानां परमा गतिः ।
विमुक्तो दीप्ततेजाश्च श्रीमाञ् श्रीवर्धनो गजः ॥1008 २३२॥

॥ इति शिवसहस्रनाम स्तोत्रं सम्पूर्णम् ॥

---

1. अ—गुहः कान्तो    2. ख—धीरोऽपि
3. क-घ—नित्यः

यथाप्रसादो भगवान् इति भक्त्या स्तुतो मया ॥ २३३
यतो ब्रह्मादयो देवा विदुर्ये न महर्षयः ।
तं स्तव्यमर्च्यं वन्द्यं च कस्तोष्यति जगत्पतिम् ॥ २३४
भक्तिं त्वेवं पुरस्कृत्य मया यज्ञपतिर्वसुः ।
ततोऽभ्यनुज्ञां प्राप्यैव स्तुतोत्पत्तिमतां गतिः ॥ २३५
शिवमेवं स्तुवन् देवं नामभिः पुष्टिवर्धनम् ।
नित्ययुक्तश्शुचिर्भूत्वा प्राप्नोति पतिमात्मनः ॥ २३६
एतद्धि परमं ब्रह्म स्वयं गीतं स्वयम्भुवा ।
ऋषयश्चैव देवाश्च स्तुवन्त्येतं च तत्परम् ॥ २३७
स्तूयमानो महादेवः प्रीयते चात्मनामभिः ।
भक्तानुकम्पी भगवान् आत्मसंस्थं करोति तम् ॥ २३८
तथैव च मनुष्येषु ये मनुष्याः प्रधानतः ।
आस्तिकाश्श्रद्दधानाश्च बहुभिर्जन्मभिस्तथा ॥ २३९
जाग्रतो ये स्वपन्तश्च व्रजन्तोऽपि शिवं स्थिताः ।
स्तुवन्ति च स्तूयमाने तुष्यन्ति च रमन्ति च ॥ २४०
जन्मकोटिसहस्रेषु नानासंसारयोनिषु ।
जन्तोर्विशुद्धपापस्य भवे भक्तिः प्रजायते ॥ २४१
उत्पन्ना च शिवे भक्तिर् अनन्या सर्वभावतः ।
कारणं भावितं तस्य सर्वमुक्तस्य सर्वतः ॥ २४२

एतद्देवेषु दुष्प्रापं मनुष्येषु न लभ्यते ।
निर्विघ्ना निश्चला रुद्रे भक्तिरव्यभिचारिणी ॥ २४३

तस्यैव च प्रसादेन भक्तिरुत्पद्यते नृणाम् ।
यथा यान्ति परां सिद्धिम् तद्भावेन [1]सुचेतसः ॥ २४४

[2]ये सर्वभावेन गता भवत्वेनाभवन्नराः ।
प्रपन्नवत्सलो देवस् संसारात्तान् समुद्धरेत् ॥ २४५

एवमन्ये न कुर्वन्ति देवास्संसारमोचनम् ।
मनुष्याणां महादेवाद् अन्यत्रापि तपोबलम् ॥ २४६

इति तेनेन्द्रकल्पेन भगवान् सदसत्पतिः ।
कृत्तिवासास्तुतः कृष्ण तण्डिना शुद्धबुद्धिना ॥ २४७

स्तवमेतद्गतो ब्रह्मा स्वयमाराधयन् प्रजाः ।
ब्रह्मोवाच च शक्राय शक्रः प्रोवाच मृत्यवे ॥ २४८

मृत्युः प्रोवाच रुद्राणां रुद्रात्तण्डिरथालभत् ।
महादेवप्रसादात्तु तण्डिना ब्रह्मसद्मनि ॥ २४९

तण्डिः प्रोवाच शुक्राय योगेश्वरमयाय च ।
वैवस्वताय मनवे गौतमः प्राह साधनः ॥ २५०

1. क-ख-घ—विचेतसः
2. क—यैः सर्वभावांपहता
ख—ये सर्वभावोपगता
घ—यैः सर्वपापोपहता

नारायणाय साध्याय मनुबिष्टाय धीमते ।
यमाय प्राह भगवान् साध्यो नारायणोऽच्युतः ॥ २५१

नाचिकेताय भगवान् आह वैवस्वतो यमः ।
मार्कण्डेयाय भगवान् नाचिकेतोऽभ्यभाषत ॥ २५२

मार्कण्डेयान्मया प्राप्तम् नियमेन जनार्दन ।
तवाप्यहममित्रघ्न स्तवं तं देवविश्रुतम् ॥ २५३

स्वर्ग्यमारोग्यमायुष्यम् धन्यं बल्यं तथैव च ॥ २५३॥

न चास्य विघ्नं कुर्वन्ति दानवा यक्षराक्षसाः ।
सयातुधाना भूताश्च गुह्यका भुजगास्तथा ॥ २५४॥

यः पठन् स शुचिर्भूत्वा ब्रह्मचारी जितेन्द्रियः ।
अभयं योगसिद्धिं च सोऽश्वमेधमवाप्नुयात् ॥ २५५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[ अस्मिन्नध्याये २५५॥ श्लोकाः ]

## ॥ चतुर्विंशोऽध्यायः ॥

वैशम्पायनेन जनमेजयं प्रति द्वैपायनादिभिर्युधिष्ठिरं प्रत्युक्तमहादेवमहिमानुवादः ॥

वैशम्पायनः—

महायोगी सुतं प्राह कृष्णद्वैपायनो मुनिः ।

कृष्णद्वैपायनः—

पठस्व पुत्र भद्रं ते प्रीयतां ते महेश्वरः ॥ १

पुरा पुत्र मया मेरौ तप्यता परमं तपः ।
पुत्रहेतोर्महाराज स्तव एषोऽनुकीर्तितः ॥ २

लब्धवानस्मि तं कामं ततोऽहं पाण्डुनन्दन ।
तथा त्वमपि शर्वाद्धि सर्वान् कामानवाप्स्यसि ॥ ३

वैशम्पायनः—

चतुश्शीर्षस्ततः प्राह शक्रस्य दयितस्सखा ।
नालम्पावन इत्येवं विश्रुतः करुणात्मकः ॥ ४

नालम्पावनः—

मया गोकर्णमासाद्य तपस्तप्त्वा शतं समाः ।
अयोनिजानां दान्तानां धर्मज्ञानां सुवर्चसाम् ॥ ५

अजराणामदुःखानां शतवर्षसहस्रिणाम् ।
लब्धं पुत्रशतं शर्वात् पुरा पाण्डुनृपात्मज ॥ ६

वैशम्पायनः—

वाल्मीकिश्चापि भगवान् युधिष्ठिरमभाषत ॥ ६॥

[1]विवादे साम्नि मुनिभिर् ब्रह्मघ्नो वै भवानिति ।
उक्तः क्षणेन चाविष्टस् तेनाधर्मेण भारत ॥ ७॥

वाल्मीकिः—

सोऽहमीशानमनघम् अस्तौषं शरणं गतः ॥ ८

मुक्तश्चास्म्यवशः पापात् ततो दुःखविनाशनः ।
आह मां त्रिपुरघ्नो वै यशस्तेऽद्य भविष्यति ॥ ९

वैशम्पायनः—

जामदग्न्योऽथ कौन्तेयम् आह धर्मभृतां वरः ।
ऋषिमध्ये स्थितस्तात तपन्निव विभावसुः ॥ १०

जामदग्न्यः—

पुरा क्षत्रवधेनाहम् आर्तो वै पाण्डवाग्रहात् ।
शुचिर्भूत्वा महादेवं गतवाञ् शरणं नृप ॥ ११

नामभिश्चास्तुवं देवं ततस्तुष्टोऽभवद्भवः ।
परशुं च ददौ देवो दिव्यान्यस्त्राणि चैव हि ॥ १२

पापं तेऽद्य न भविता ते जयश्च भविष्यति ।
न ते प्रभविता मृत्युर् यशस्वी च भविष्यसि ॥ १३

आह मां भगवान् देवश् शिखण्डी शिवविग्रहः ।

1. क-ख—अर्धद्वयं नास्ति

यदवाप्तं च मे सर्वम् प्रसादात्तस्य धीमतः ॥ १४

वैशम्पायनः—

असितो देवलश्चैव प्राह पाण्डुसुतं नृपम् ॥ १४॥

असितोदेवलः—

शापाच्छक्रस्य कौन्तेय गतो धर्मो महद्यशः ।
तन्मे धर्मं यशश्चाग्र्यम् आयुश्चैवाददद्भवः ॥ १५॥

वैशम्पायनः—

ऋषिर्गृत्समदो नाम शक्रस्य दयितस्सखा ।
प्राहाजमीढं भगवान् बृहस्पतिसमद्युतिः ॥ १६॥
[1]वरिष्ठो नाम भगवांश् चाक्षुपस्य मनोस्सुतः ।
शतक्रतोरचिन्त्यस्य सत्रे वर्षसहस्रिके ॥ १७॥
वर्तमानेऽब्रवीद्वाक्यं साम्नि ह्युच्चारिते मया ॥ १८

वरिष्ठः—

रथन्तरे द्विजश्रेष्ठ न सम्यगनुवर्तते ॥ १८॥
समीक्षस्व पुनर्बुद्ध्या हर्षं त्याज्य द्विजोत्तम ।
प्रज्ञया रहितः पापम् अकार्षीस्त्वं सुदुर्मते ॥ १९॥

वैशम्पायनः—

एवमुक्तो महाक्रोधः प्राह शक्रः पुनर्वचः ॥ २०

---

1. अ—१७॥ श्लोकादारभ्य ५७ श्लोकपर्यन्तं    अ—कोश एवास्ति

शक्रः—

प्रज्ञया रहितो दुःखी नित्यं भीतो वनेचरः ॥ २०॥

दशवर्षसहस्राणि शतानि दश चाष्ट च ।

नष्टपानीययवसे मृगैरन्यैश्च वर्जिते ॥ २१॥

अयज्ञीयद्रुमे देशे रुरुसिंहनिषेविते ।

भविता त्वं मृगः क्रूरो महादुःखसमन्वितः ॥ २२॥

वरिष्ठः—

तस्य वाक्यस्य निधने पार्थ जातो ह्यहं मृगः ।

ततो मां शरणं प्राप्तं प्राह योगी महेश्वरः ॥ २३॥

श्रीमहादेवः—

अजरश्चामरश्चैव भविता दुःखवर्जितः ।

सौम्यत्वमस्तु ते सौम्य युवयोर्वर्धतां क्रतुः ॥ २४॥

वरिष्ठः—

अनुग्रहानेवमेष करोति भगवान् विभुः ।

अयं धाता विधाता च सुखदुःखे च सर्वदा ॥ २५॥

अचिन्त्य एष भगवान् कर्मणा मनसा गिरा ॥ २६

जैगीषव्यः—

ममाष्टगुणमैश्वर्यं मनोयज्ञेन तोषितः ।

यत्नेनाल्पेन च विना दत्तवान् भगवान् पुरा ॥ २७

वैशम्पायनः—

पराशरश्चाह मुनिः पुरा मम च तोषितः ।

महातपा महातेजा महायोगी महायशाः ॥ २८

वेदावासः क्रियावासो ब्रह्मण्यः करुणामयः ॥ २८॥

पराशरः—

अपि नामेप्सितः पुत्रो मम स्याद्वै महेश्वरात् ॥ २९

तमभिज्ञाय मामाह शङ्करस्त्रिपुरार्दनः ।

पितृकन्या वसोः पुत्री शापाद्दाशगृहोषिता ॥ ३०

तस्यां हि दुष्कृतानां च विद्यया शोधकस्सुतः ।

वेदानां च स वै कर्ता कुरुवंशकरस्तथा ॥ ३१

इतिहासस्य कर्ता च पुत्रस्ते जगतो हितः ।

भविष्यतीति मामुक्त्वा तत्रैवान्तरधीयत ॥ ३२

वैशम्पायनः—

माण्डव्यश्चाह देवे च भक्तो लोकहितो भवे ॥ ३२॥

माण्डव्यः—

अचोरश्चोरशङ्कायां शूलभिन्नो ह्यहं सदा ॥ ३३

तत्रस्थेन स्तुतो देवः प्राह मां वै महेश्वरः ।

श्रीमहादेवः—

मोक्षं प्राप्स्यसि शूलाग्राद् भविष्यसि समाऽयुतम् ॥ ३४

रुजा शूलकृता चैव न ते विप्र भविष्यति ।

आधिभिर्व्याधिभिश्चैव वर्जितस्त्वं भविष्यसि ॥ ३५

अमर्षं समलङ्कर्तुं शक्तो निर्विघ्नधर्मभाक् ।
तीर्थाभिषेकं सकलं त्वमविघ्नेन चाप्स्यसि ॥ ३६
स्वर्गं चैवाक्षयं विप्र विदधामि तवोर्जितम् ॥ ३६॥

माण्डव्यः—
एवमुक्त्वा स भगवान् वरेण्यो वृषवाहनः ।
महेश्वरो महाराज कृत्तिवासा महाद्युतिः ॥ ३७॥
सगणो देवताश्रेष्ठस् तत्रैवान्तरधीयत ॥ ३८

गालवः—
विश्वामित्राभ्यनुज्ञातो ह्यहं पितरमागतः ।
अब्रवीन्मां ततो माता दृष्ट्वाऽस्मत्पितरं मृतम् ॥ ३९

गालवमाता—
कौशिकेनाभ्यनुज्ञातं पुत्रं वेदविभूषितम् ।
न तात तरुणं दान्तं पिता त्वां पश्यतेऽनघ ॥ ४०

गालवः—
श्रुत्वा जनन्या वचनं शोकाच्छर्वमतोषयम् ।
नियतात्मा महादेवम् अपश्यं सोऽब्रवीच्च माम् ॥ ४१

श्रीमहादेवः—
पिता माता च ते त्वं च पुत्र मृत्युविवर्जिताः ।
भविष्यथ वशं क्षिप्रं द्रष्टासि पितरं क्षये ॥ ४२

गालवः—
अनुज्ञातो भगवता गृहं गत्वा युधिष्ठिर ।
अपश्यं पितरं तात इष्टिं कृत्वा विनिस्सृतम् ॥ ४३

स जीवितश्च मां प्राह पिता सास्राविलेक्षणः ।
प्रणमन्तं परिष्वज्य मूर्ध्नि चाघ्राय पाण्डव ॥ ४४

गालवपिता—

दिष्ट्या दृष्टोऽसि मे पुत्र कृतविद्य इवागतः ॥ ४४॥

वैशम्पायनः—

एतान्यत्यद्भुतान्येव कर्माण्यथ महात्मनः ।
प्रोक्तानि मुनिभिश्श्रुत्वा विस्मयामास पाण्डवः ॥ ४५॥

ततः कृष्णोऽब्रवीद्वाक्यं पुनर्मतिमतां वरः ।
युधिष्ठिरं धर्मनित्यं पुरुहूतमिवेश्वरः ॥ ४६॥

श्रीभगवान्—

आदित्यचन्द्रावनिलानलौ च
द्यौर्भूमिरापो वसवश्च विश्वे ।
धाताऽर्यमा शुक्रबृहस्पती च
रुद्रास्साध्या वरुणो विश्वगोप्ता ॥ ४७॥

ब्रह्मा शक्रो मारुतो ब्रह्म सत्यं
वेदा यज्ञा दक्षिणा यज्ञवाहः ।
सोमो यष्टा यच्च हव्यं हविश्च
रक्षा दीक्षा नियमा ये च केचित् ॥ ४८॥

स्वाहा वेदा ब्राह्मणास्सौरभेयी
धर्म्यं चक्रं कालचक्रं परं च ।

यशो दमो भूतिमतिस्तिथिश्च
शुभाशुभं मुनयो ये च सप्त ॥ ४९॥

अग्र्या सिद्धिर्मनसो दर्शने च
स्वार्थोऽसिद्धिः कर्मणा या च सिद्धिः ।
गणा देवानामूष्मपास्सोमपाश्च
रेखास्सुयामास्तुषिता ब्रह्मकायाः ॥ ५०॥

अभास्वरा गन्धपा वृष्टिपाश्च
वाचो विरुद्धाश्च मनोविरुद्धाः ।
शुद्धाश्च निर्वाणतराश्च देवास्
स्पर्शाशना दर्शपा आज्यपाश्च ॥ ५१॥

चितागता ये च देवेषु मुख्या
या चाप्यन्या देवता आजमीढ ।
सुपर्णगन्धर्वपिशाचदानवा
यक्षास्तथा पन्नगचारणाश्च ॥ ५२॥

सूक्ष्मं स्थूलं मृदु चातिसूक्ष्मं
सुखं दुःखं सुखदुःखान्तरं च ।
सौख्यं योगो यत् पराणां परं च
शर्वाज्जातं विद्धि यत् कीर्तितं मे ॥ ५३॥

तत्सम्भूता भूतभूता वरेण्याः
　पूर्वे देवा भुवनस्यास्य गोपाः ।
आविश्येमां धरणीं ये ह्यरक्षन्
　पुरातनास्तस्य देवस्य सृष्टिम् ॥ ५४॥

तं वै प्रभुं मनसा तोषयामि
　किन्तेत्वन्त प्राणहेतोर्नतास्स्म (?)।
ददातु देवस्स वरानिहेष्टान्
　अभिष्टुतो यः प्रभुरव्ययस्सदा ॥ ५५॥

इमं स्तवं सन्नियम्येन्द्रियाणि
　शुचिर्भूत्वा यः पुरुषः पठेत ।
अभग्नयोगो नियतस्त्वब्दमेकं
　सम्प्राप्नुयादश्वमेधे फलं यत् ॥ ५६॥

वेदान् कृत्स्नान् ब्राह्मणः प्राप्नुयात्तु
　जयेद्राजा पृथिवीं प्राप्य कृत्स्नाम् ।
वैश्यो लाभं प्राप्नुयाद्वै धनं च
　शूद्रो यथा प्रेत्य गतिं च राजन् ॥ ५७॥

स्तवराजमिमं भक्त्या रुद्रस्य च महात्मनः ।
सर्वदोषापहं पुण्यम् [1]शृणुयाच्छ्रावयेत वा ॥ ५८॥

1. क-ब—पवित्रं च यशस्करम्

यावन्त्यस्य शरीरेषु रोमकूपाणि भारत ।
तावद् वर्षसहस्राणि स्वर्गे वसति मानवः ॥ ५९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[ अस्मिन्नध्याये ५९॥ श्लोकाः ]

---

## ॥ पञ्चविंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति स्त्रीस्वभावप्रदर्शनाय दृष्टान्ततयाऽष्टावक्रोपाख्यानकथनारम्भः ॥ १ ॥ अष्टावक्रेण भार्यात्वाय वदान्यं प्रति कन्यायाचनम् ॥ २ ॥ तथा वदान्यनियोगादुत्तरदिगन्तगमनम् ॥ ३ ॥ तत्रोत्तरदिगभिमानिन्या जरतीरूपधारिण्या संवादः ॥ ४ ॥

---

युधिष्ठिरः—

यदिदं सहधर्मेति प्रोच्यते भरतर्षभ ।
पाणिग्रहणकाले तु स्त्रीणामेतत् कथं स्मृतम् ॥ १

आर्ष एव भवेद्धर्मः प्राजापत्योऽथवाऽऽसुरः ।
यदेतत् सहधर्मेति पूर्वमुक्तं महर्षिभिः ॥ २

सन्देहस्सुमहानेष विरुद्ध इति मे मतिः ।
इह यस्सहधर्मो वै प्रेत्यायं विहितः क नु ॥ ३

स्वर्गे मृतानां भवति सहधर्मस्सनातनः ।
पूर्वमेकस्य म्रियतः क चैकस्तिष्ठते वद ॥ ४

नानाकर्मबलोपेता नानाकर्मनिवासिनः ।
नानाविधाननिष्ठाना मानुषा बहवो यदा ॥ ५

अनृतास्स्त्रिय इत्येवम् सूत्रकारो व्यवस्यति ।
अनृतास्स्त्रिय इत्येवम् वेदेष्वपि हि पठ्यते ॥ ६

धर्मो यः पौर्विको दृष्ट उपचारः क्रियाविधिः ।
गह्वरं प्रतिभात्येतन्मम चिन्तयतोऽनिशम् ॥ ७

निस्सन्देहमिदं सर्वम् पितामह यथाश्रुतम् ॥ ७॥

यथा तद् यादृशं वैतद् यथा चैतत् प्रकीर्तितम् ।
निखिलेन महाप्राज्ञ भवानेतद्ब्रवीतु मे ॥ ८॥

भीष्मः—

अत्राप्युदाहरन्तीमम इतिहासं पुरातनम् ।
अष्टावक्रस्य संवादम् दिशया सह भारत ॥ ९॥

निर्वेष्टुकामस्तु पुरा ह्यष्टावक्रो महामनाः ।
ऋषेरथ वदान्यस्य कन्यां वव्रे महात्मनः ॥ १०॥

सुप्रभां नाम वै नाम्ना रूपेणाप्रतिमां भुवि ।
गुणप्रगल्भां शीलेन साध्वीं चारित्रशोभनाम् ॥ ११॥

सा तस्यर्षेर्मनो दृष्ट्वा जहार शुभलोचना ।

वनराजिर्यथा चित्रा वसन्ते कुसुमाचिता ॥ १२॥

ऋषिस्तमाह देया मे सुता तुभ्यं शृणुष्व मे ॥ १३

अनन्यस्त्रीजनः प्राज्ञो ह्यप्रवासी प्रियंवदः ।
सुरूपस्सम्मतो वीरश् शीलवान भोगभुक् छुचिः ॥ १४

दारानुमतयज्ञश्च सुनक्षत्रामथोद्वहेत् ।
[1]स्वभर्त्रास्स्वजनोपेत इह प्रेत्य च मोदते ॥ १५

गच्छ तावद्दिशं पुण्याम् उत्तरां द्रक्ष्यसे ततः ॥ १५॥

अष्टावक्रः—

किं द्रष्टव्यं मया तत्र वक्तुमर्हति मे भवान् ।
तथेदानीं मया कार्यम् यथा वक्ष्यति मां भवान् ॥ १६॥

ऋषिः—

धनदं समतिक्रम्य हिमवन्तं तथैव च ।
रुद्रस्यायतनं दृष्ट्वा सिद्धचारणसेवितम् ॥ १७॥

हृष्टैः पारिषदैर्जुष्टम् नृत्यद्भिर्विविधाननैः ।
दिव्याङ्गरागैः पैशाचैर् अन्यैर्नानाविधैस्तथा ॥ १८॥

पाणितालसतालैश्च शम्यातालैस्समैस्तथा ।
सम्प्रहृष्टैः प्रनृत्यद्भिश् शर्वस्तत्र निषेव्यते ॥ १९॥

इष्टं किल गिरौ स्थानम् तद्दिव्यमनुशुश्रुम ।

---

1. अ-ख—सभृत्यस्

नित्यं सन्निहितो देवस् तथा पारिषदाश्शुभाः ॥ २०॥
अत्र देव्या तपस्तप्तम् शङ्करार्थं सुदुश्चरम् ।
तथैतदिष्टं देवस्य तथोमाया इति श्रुतिः ॥ २१॥
ततः कोपो महान् पार्श्वे देवस्योत्तरतस्तथा ॥ २२
ऋतवः कालरात्रिश्च ये दिव्या ये च मानुषाः ।
सर्वे देवमुपासन्ते रूपिणः किल तत्र ह ॥ २३
तदतिक्रम्य भवनं त्वया यातव्यमेव हि ॥ २३॥
ततो नीलं वनोद्देशं द्रक्ष्यसे नीलसन्निभम् ।
रमणीयं मनोग्राहि तत्र द्रक्ष्यसि वै स्त्रियम् ॥ २४॥
तपस्विनीं महाभागां वृद्धां दीक्षामनुष्ठिताम् ॥ २५
द्रष्टव्या सा त्वया तत्र सम्पूज्या चैव यत्नतः ॥ २५॥
तां दृष्ट्वा विनिवर्तस्व ततः पाणीं ग्रहीष्यसि ।
यद्येष समय[1]स्सम्यक् साध्यते तत्र गम्यताम् ॥* २६॥

अष्टावक्रः—

तथा तत् साधयिष्यामि तत्र यास्याम्यसंशयम् ।
यत्र त्वं वदसे साधो भवान् भवतु सत्यवाक् ॥ २७॥

भीष्मः—

ततोऽगच्छत् स भगवान् उत्तरामुत्तरां दिशम् ।

---

1. अ-ख—सद्यम्

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिः

हिमवन्तं गिरिश्रेष्ठं सिद्धचारणसेवितम् ॥ २८॥

स गत्वा द्विजशार्दूलो हिमवन्तं महागिरिम् ।
अध्यगच्छन्नदीं पुण्यां बाहुदां पुण्यदायिनीम् ॥ २९॥

अशोके विमले तीर्थे स्नात्वा तर्प्य च देवताः ।
तत्र वासाय शयने कौशे सुखमुवास ह ॥ ३०॥

ततो रात्र्यां व्यतीतायां प्रातरुत्थाय स द्विजः ।
स्नात्वा प्रादुश्चकाराग्निं हुत्वा चव विधानतः ॥ ३१॥

रुद्राणीकूपमासाद्य ह्रदे तत्र समाश्वसत् ॥ ३२
विश्रान्तश्च समुत्थाय कैलासमभितो ययौ ॥ ३२॥

सोऽपश्यत् काञ्चनद्वारं पुरं दीप्तमिव श्रिया ।
मन्दाकिनीं च नलिनीं धनदस्य महात्मनः ॥ ३३॥

अथ ते राक्षसास्सर्वे ये तां रक्षन्ति पद्मिनीम् ।
अभ्युत्थिता भोगवन्तो माणिभद्रपुरोगमाः ॥ ३४॥

स तान् प्रत्यर्चयामास राक्षसान भीमविक्रमान् ।
निवेदयत मां क्षिप्रं धनदायेति चाब्रवीत् ॥ ३५॥

ते राक्षसास्तथा राजन् भगवन्तमथाब्रुवन् ॥ ३६

राक्षसाः—

असौ वैश्रवणो राजा स्वयमायाति तेऽन्तिकम् ॥ ३६॥

वेदितो भगवानस्य कार्यमागमने च यत् ।

पश्यैनं च महाभागं ज्वलन्तमिव तेजसा ॥ ३७॥

भीष्मः—

ततो वैश्रवणोऽभ्येत्य अष्टावक्रमनिन्दितम् ।
विधिवत् कुशलं पृष्ट्वा ततो ब्राह्मणमब्रवीत् ॥ ३८॥

कुबेरः—

सुखं प्राप्तो भवान् किं स्वित् किं वा मत्तश्चिकीर्षसि ।
ब्रूहि सर्वं करिष्यामि यन्मां त्वं वक्ष्यसे द्विज ॥ ३९॥

भवनं प्रविश त्वं मे यथाकामं द्विजोत्तम ।
सत्कृतः कृतकार्यश्च भवान् यास्यत्यविघ्नतः ॥ ४०॥

भीष्मः—

प्राविशद्भवनं स्वं स गृहीत्वा तं द्विजोत्तमम् ।
आसनं स्वं ददौ चैव पाद्यमर्घ्यं तथैव च ॥ ४१॥

अथोपविष्टयोस्तत्र माणिभद्रपुरोगमाः ।
निषेदुस्तत्र कौबेरा यक्षगन्धर्वराक्षसाः ॥ ४२॥

ततस्तेषां निषण्णानां धनदो वाक्यमब्रवीत् ॥ ४३

कुबेरः—

भवच्छन्दं समाज्ञाय नृत्येरन् पुंश्चलीरिह ।
आतिथ्यं परमं कार्यं शुश्रूषा भवतस्तथा ॥ ४४

भीष्मः—

संवर्त्यतामित्युवाच मुनिर्मधुरया गिरा ॥ ४४॥

अथाप्सरा मिश्रकेशी रम्भा चैवोर्वशी तथा ।
अलम्बुसा घृताची च चित्रा चित्राङ्गदा शुचिः ॥ ४५॥

मनोहरा सुकेशी च सुमुखी हासिनी प्रभा ।
विद्युत्प्रभा शमा दान्ता रताना रतिरेव च ॥ ४६॥

एताश्चान्याश्च बह्व्यश्च प्रनृत्ताप्सरसश्शुभाः ।
अवादयंश्च गन्धर्वा वाद्यानि विविधानि च ॥ ४७॥

अथ प्रवृत्ते गान्धर्वे दिव्ये सर्षिरुपावसत् ।
दिव्यं संवत्सरं तत्रारमद्वै सुमहातपाः ॥ ४८॥

ततो वैश्रवणो राजा भगवन्तमुवाच ह ॥ ४९

कुबेरः—

साग्रस्संवत्सरो यातस् तव विप्रेह पश्यतः ।
हार्ययं विषयो ब्रह्मन् गान्धर्वो नाम नामतः ॥ ५०

छन्दतो वर्ततां विप्र यथा वदतु मा भवान् ॥ ५०॥

अतिथिः पूजनीयस्त्वम् इदं च भवतो गृहम् ।
सर्वमाज्ञाप्यतामाशु परवन्तो वयं त्विति ॥ ५१॥

भीष्मः—

अथ वैश्रवणं प्रीतो भगवान् प्रत्यभाषत ॥ ५२

अष्टावक्रः—

अर्चितोऽस्मि यथान्यायं गमिष्यामि धनेश्वर ।

प्रीतोऽस्मि सदृशं चैतत् तव सर्वं धनेश्वर ॥ ५३

तव प्रसादाद्भगवन् महर्षेश्च महात्मनः ।
नियोगादद्य यास्यामि वृद्धिमानृद्धिमान् भव ॥ ५४

भीष्मः—

अथ निष्क्रम्य भगवान् प्रययावुत्तरामुखः ।
कैलासे शङ्करावासम् अभिवीक्ष्य प्रणम्य च ॥ ५५

गौरीशं शङ्करं दान्तम् शरणागतवत्सलम् ।
गङ्गाधरं गोपतिगं गणावृतमकल्मषम् ॥ ५६

कैलासं मन्दरं हैमम् सर्वाननुचचार ह ॥ ५६॥

तानतीत्य महाशैलान् कैलासस्थानमुत्तमम् ।
प्रदक्षिणं ततश्चक्रे प्रयतश्शिरसा नमन् ॥ ५७॥

धरणीमवतीर्याथ पूतात्मा स तदाऽभवत् ॥ ५८

स तं प्रदक्षिणं कृत्वा निर्यातश्चोत्तरामुखः ।
समेन भूमिभागेन ययौ प्रीतिपुरस्कृतः ॥ ५९

ततोऽपरं वनोद्देशम् रमणीयमपश्यत ।
सर्वर्तुफलकैर्वृक्षैः पक्षिभिश्चाभिसंवृतम् ॥ ६०

रमणीयैर्वनोद्देशैस् तत्रतत्र युधिष्ठिर ॥ ६०॥

तत्राश्रमपदं दिव्यम् ददर्श भगवानथ ।
शैलांश्च विविधाकारान् काञ्चनोद्भूषणानथ ॥ ६१॥

मणिभूमौ निविष्टाश्च पुष्करिण्यस्तथैव च ।
अन्यान्यपि च रम्याणि ददर्श सुबहून्यथ ॥ ६२॥

भृशं तस्य मनो रेमे महर्षेर्भावितात्मनः ॥ ६३

स तत्र काञ्चनं दिव्यं सर्वरत्नमयं गृहम् ।
ददर्शाद्भुतसङ्काशम् धनदस्य गृहाद्वरम् ॥ ६४

महान्तो यत्र विविधाः काञ्चनाः पर्वतोत्तमाः ।
विमानानि च रम्याणि रत्नानि विविधानि च ॥ ६५

मन्दारपुष्पसङ्कीर्णा तथा मन्दाकिनी नदी ।
स्वयम्प्रभाश्च मणयो वज्रैर्भूमिश्च भूषिता ॥ ६६

नानाविधैश्च भवनैर् विचित्रमणि[1]तोरणैः ।
मुक्ताजालपरिक्षिप्तैर् मणिरत्नविभूषितैः ॥ ६७

मनोदृष्टिहरै रम्यैस् सर्वतस्संवृतश्शुभैः ।
ऋषिस्समन्ततोऽपश्यत् तत्र तत्र मनोहरम् ॥ ६८

ततोऽभवत्तस्य चिन्ता क मे वासो भवेदिति ।
अथ द्वारं समभितो गत्वा स्थित्वा ततोऽब्रवीत् ॥ ६९

अष्टावक्रः—
अतिथिं मामनुप्राप्तम् अनुजानन्तु येऽत्र ते ॥ ६९॥

1. क—गोपुरैः

भीष्मः—

अथ कन्याः परिवृता गृहात्तस्माद्विनिस्सृताः ।
नानारूपास्सप्त विभो कन्यास्तत्र मनोहराः ॥ ७०॥

यां यामपश्यत् कन्यां स सा सा तस्य मनोऽहरत् ।
नाशक्नुवद्धारयितुं मनोऽथास्यावसीदति ॥ ७१॥

ततो धृतिस्समुत्पन्ना तस्य विप्रस्य धीमतः ।
अथ तं प्रमदाः प्राहुर् भगवान् प्रविशत्विति ॥ ७२॥

अथ तासां स्वरूपेण तस्यैव भवनस्य च ।
कौतूहलसमाविष्टः प्रविवेश गृहं द्विजः ॥ ७३॥

तत्रापश्यज्जरायुक्तां विरजोम्बरधारिणीम् ।
वृद्धां पर्यङ्क आसीनां सर्वाभरणभूषिताम् ॥ ७४॥

[1]स्वस्ति चास्त्विति तेनोक्ता सा च स्त्री स्मावदद्यथा ।
प्रत्युत्थाय च तं विप्रम् आस्यतामित्युवाच ह ॥ ७५॥

अष्टावक्रः—

सर्वास्स्वानालयान् यान्तु एका मामुपतिष्ठतु ।
सुप्रज्ञाना सुप्रशान्ता शेषा गच्छन्तु च्छन्दतः ॥ ७६॥

भीष्मः—

ततः प्रदक्षिणीकृत्य कन्यास्तास्तमृषिं तदा ।
निराक्रामन् गृहात्तस्मात् सा वृद्धा चाथ तिष्ठति ॥ ७७॥

1. ख—अर्धचतुष्टयं नास्ति

तया सम्पूजितस्तत्र शयने चापि निर्मले ॥ ७८

अथ तां संविशन् प्राह शयने भास्वरे तदा ॥ ७८॥

अष्टावक्रः—

त्वयाऽपि सुप्यतां भद्रे रजनी ह्यतिवर्तते ॥ ७९

भीष्मः—

संलापात्तेन विप्रेण तथा सा तत्र भाषिता ।
द्वितीये शयने दिव्ये सा विवेश महाप्रभे ॥ ८०

अथ सा वेपमानाङ्गी निमित्तं शीतजं तदा ।
व्यपदिश्य महर्षेर्वै शयनं साऽध्यरोहत ॥ ८१

स्वागतेनागतं तेऽस्तु भगवांस्तामभाषत ॥ ८१॥
सा जुगूहे भुजाभ्यां तम् ऋषिं प्रीत्या नरर्षभ ॥ ८२

निर्विकारमृषिं चापि काष्ठकुड्योपमं तदा ।
दुःखिता प्रेक्ष्य सञ्जल्पम् अकार्षीदृषिणा सह ॥ ८३

वृद्धा—

ब्रह्मन् न कामकारोऽस्ति स्त्रीणां पुरुषतो धृतिः ।
कामेन मोहिता चाहं त्वां भजन्तीं भजस्व माम् ॥ ८४

[1]प्रहृष्टो भव विप्रर्षे समागच्छ मया सह ।
उपगूह च मां विप्र कामार्ता सुभृशं त्वया ॥ ८५

एतद्धि तव धर्मात्मंस् तपसः पूज्यते फलम् ।

1. ख—अर्धचतुष्टयं नास्ति

प्रार्थितं दर्शनादेव भजमानां भजस्व माम् ॥ ८६

सद्म चेदं वनं चेदं यच्चान्यदपि पश्यसि ।
प्रभुत्वं तव सर्वत्र मयि चैव न संशयः ॥ ८७

सर्वान् कामान् विधास्यामि रमस्व सहितो मया ।
रमणीये वने विप्र सर्वकामफलप्रदे ॥ ८८

त्वद्वशाऽहं भविष्यामि क्रीडन्निह मया सह ।
सर्वान् कामानवाप्नोषि ये दिव्या ये च मानुषाः ॥ ८९

नातः परं हि नारीणां विद्यते कार्यमण्वपि ।
यथा पुरुषसंसर्गः फलमेतद्धि नः परम् ॥ ९०

आत्मच्छन्देन वर्तन्ते नार्यो मन्मथचोदिताः ।
न च दह्यन्ति गच्छन्त्यस् सुतप्तैरपि पांसुभिः ॥ ९१

अष्टावक्रः—

परदारानहं भद्रे न गच्छेयं कथञ्चन ।
दूषितं धर्मशास्त्रेषु परदाराभिमर्शनम् ॥ ९२

शुद्धक्षेत्रे ब्रह्महत्याप्रायश्चित्तमथोच्यते ।
पुनश्च पातकं दृष्टम् विप्रक्षेत्रे विशेषतः ॥ ९३

भद्रे निर्वेष्टुकामोऽहम् तत्रापचरणं मम ।
प्रायश्चित्तं महदहो दारग्रहणपूर्वकम् ॥ ९४

बीजं न शुद्ध्यते वोढुर् अस्य चाकृतनिष्कृतेः ।

मातृतः पितृतश्शुद्धो ज्ञेयः पुत्रो यथार्थतः ॥ ९५

विषयेष्वनभिज्ञोऽहं आत्मार्थी किल सन्ततिः ।
एवं लोकान् गमिष्यामि पुत्रैरिति न संशयः ॥ ९६

भद्रे धर्मं विजानीष्व ज्ञात्वा चोपरमस्व ह ॥ ९६॥

वृद्धा—

नानिलोऽग्निर्न वरुणो न चान्ये त्रिदशा द्विज ।
प्रियास्स्त्रीणां यथा कामो रतिशीला हि योषितः ॥ ९७॥

सहस्रैर्न रतिं नारी प्राप्नोतीह कदाचन ।
तथा शतसहस्रेषु यदि काचित् पतिव्रता ॥ ९८॥

न हि जानन्ति पितरं न कुलं न च मातरम् ।
न भ्रातॄन् न च भर्तारं न पुत्रान् न च देवरान् ॥ ९९॥

लीलायिताः कुलं घ्नन्ति कूलानीव सरिद्वराः ।
दोषानमन्दान् मन्दासु प्रजापतिरभाषत ॥ १००॥

भीष्मः—

ततस्स ऋषिरेकाग्रस् तां स्त्रियं प्रत्यभाषत ॥ १०१

अष्टावक्रः—

आस्यतां रुचिरश्छन्दः किं वा कार्यं ब्रवीमि ते ॥ १०१॥

भीष्मः—

सा स्त्री प्रोवाच यत् कार्यं ज्ञास्यसे देशकालतः ।
वस तावन्महाप्राज्ञ कृतकृत्यो गमिष्यसि ॥ १०२॥

ब्रह्मर्षिस्तामथोवाच स तथेति युधिष्ठिर ॥ १०३

अष्टावक्रः—

वसेऽहं तावदुत्सङ्गे भवत्या नात्र संशयः ॥ १०३॥

भीष्मः—

अथर्षिरभिसम्प्रेक्ष्य स्त्रियं तां जरयाऽन्विताम् ।
चिन्तां परमिकां भेजे सन्तप्त इव चाभवत् ॥ १०४॥

यत् तदङ्गं हि सोऽपश्यत् तस्या विप्रर्षभस्तदा ।
नारमत् तत्र तस्यास्य दृष्टी रूपपराजिता ॥ १०५॥

देवतेयं गृहस्यास्य शापान्नूनं विरूपिणी ।
अस्याश्च कारणं वेत्तुं न शक्यं सहसा मया ॥ १०६॥

इति चिन्ताविषक्तस्य तमर्थं श्रोतुमिच्छतः ।
व्यगमद्रात्रिशेषस्स मनसा व्याकुलेन तु ॥ १०७॥

अथ सा स्त्री तथोवाच भगवन्नस्य वै रवेः ।
रूपं सन्ध्याभ्रसंरक्तम् किमुपस्थाप्यतां तव ॥ १०८॥

स उवाच तदा तां स्त्रीं स्नानोदकमिहानय ।
उपासिष्ये ततस्सन्ध्यां वाग्यतो नियतेन्द्रियः* ॥ १०९॥

अथ सा स्त्री तमुक्त्वा तु विप्रमेवं भवत्विति ।
तैलं दिव्यमुपानीय स्नानशाटीमुपानयत् ॥ ११०॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

अनुज्ञाता च मुनिना सा स्त्री तेन महात्मना ।
अथास्य तैलेनाङ्गानि सर्वाण्येव [1]व्यमृक्षयत् ॥ १११॥
शनैश्चाच्छादितस्तत्र स्नानशालामुपागमत् ।
भद्रासनं ततश्चित्रम् ऋषिरन्वविशन्नवम् ॥ ११२॥
अथोपविष्टश्च यदा तस्मिन् भद्रासने तदा ।
स्नापयामास शनकैस् तमृषिं सुखहस्तवत् ॥ ११३॥
दिव्यं च विधिवच्चक्रे सोपचारं मुनेस्तदा ।
जलेन सुसुखोष्णेन तस्या हस्तसुखेन च ॥ ११४॥
व्यतीतां रजनीं कृत्स्नां नाजानात् स महाव्रतः ॥ ११५
तत उत्थाय स मुनिस् तदा परमविस्मितः ।
पूर्वस्यां दिशि सूर्यं च सोऽपश्यदुदितं दिवि ॥ ११६
सन्ध्योपासनमित्याहो सर्वपापहरं न मे ।
तस्य बुद्धिरियं किं नु मोहस्तत्त्वमिदं भवेत् ॥ ११७
अथोपास्य सहस्रांशुं किं करोमीत्युवाच ताम् ।
सा चामृतरसप्रख्यम् ऋषेरन्नमुपाहरत् ॥ ११८
तस्य स्वादुतयाऽन्नस्य न प्रभूतं चकार सः ।
व्यगमच्चाप्यहश्शेषस् ततस्सन्ध्याऽऽगमत् पुनः ॥ ११९
अथ स्त्री भगवन्तं सा सुप्यतामित्यचोदयत् ।

---

1. ख—व्यमर्दयत्

तत्र वै शयने दिव्ये तस्य तस्याश्च कल्पिते ॥ १२०

अष्टावक्रः—

न भद्रे परदारेषु मनो मे सम्प्रसज्जति ।
उत्तिष्ठ भद्रे भद्रं ते स्वापं वै विरमस्व च ॥ १२१

भीष्मः—

सा तदाऽनेन विप्रेण तदा धृत्या निवर्तिता ।
स्वतन्त्राऽस्मीत्युवाचेदं न धर्मच्छलमस्ति ते ॥ १२२

अष्टावक्रः—

नास्ति स्वतन्त्रता स्त्रीणाम् अस्वतन्त्रा हि योषितः ।
प्रजापतिमतं ह्येतन्न स्त्री स्वातन्त्र्यमर्हति ॥ १२३

वृद्धा—

बाधते मैथुनं विप्र मम भक्तिं च पश्य वै ।
अधर्मं प्राप्स्यसे विप्र [1]यन्मां त्वं नाभिनन्दसि ॥ १२४

अष्टावक्रः—

हरन्ति दोषजातानि नरमिन्द्रियकिङ्करम् ।
प्रभवामि स्वयं धृत्या भद्रे स्वं शयनं व्रज ॥ १२५

वृद्धा—

शिरसा प्रणमे विप्र प्रसादं कर्तुमर्हसि ।
भूमौ हि पतमानायाश् शरणं भव मेऽनघ ॥ १२६

---

1- क-ख-घ—इतः षट् पादा न सन्ति

यदि वा दोषजातं त्वं परदारेषु पश्यसि ।
आत्मानं स्पर्शयाम्यद्य पाणिं गृह्णीष्व मेऽनघ ॥ १२७

न दोषो भविता चैव सत्येनैतद्ब्रवीम्यहम् ।
स्वतन्त्रां मां विजानीहि योऽधर्मस्सोऽस्तु वो मयि ॥ १२८

अष्टावक्रः—

स्वतन्त्रा स्त्री कथं भद्रे ब्रूहि कारणमत्र मे ।
नास्ति लोकेषु स्त्री काचिद् या वै स्वातन्त्र्यमर्हति ॥ १२९

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ १३०

न वृद्धामक्षतां मन्ये न चेच्छा त्वयि मेऽनघे ॥ १३०॥

वृद्धा—

कौमारं ब्रह्मचर्यं मे कन्यैवास्मि न संशयः ।
कुरु मा विमतिं विप्र श्रद्धां जहिहि मा मयि ॥ १३१॥

यथा मह्यं तथा तुभ्यम् यथा तव तथा मम ॥ १३२

भीष्मः—

जिज्ञासेयमृपेस्तस्य विघ्नस्सत्यं नु किं भवेत् ।
आश्चर्यं परमं हीदम् किं नु श्रेयो हि मे भवेत् ॥ १३३

दिव्याभरणवस्त्रा हि कन्येयं समुपस्थिता ॥ १३३॥

किं त्वस्याः परमं रूपम् जीर्णमासीत् कथं पुनः ।

कन्यारूपमिहाद्यैव किमिहात्रोत्तरं भवेत् ॥ १३४॥
यथा मे परमा शक्तिर् न ह्युत्थास्ये कथञ्चन ।
न रोचयेहाभ्युत्थानं धृत्यैनां साधयाम्यहम् ॥* १३५॥

युधिष्ठिरः—

न बिभेति कथं सा स्त्री शापस्य परमद्युतेः ।
कथं निवृत्तो भगवांस् तद्भवान् प्रब्रवीतु मे ॥ १३६॥

भीष्मः—

अष्टावक्रोऽन्वपृच्छत् तां रूपं विकुरुषे कथम् ।
न चानृतं ते वक्तव्यम् ब्रूहि ब्राह्मणकाम्यया ॥ १३७॥

वृद्धा—

द्यावापृथिवीमात्रैषा काम्या ब्राह्मणसत्तम ।
शृणुष्वावहितस्सर्वम् यदिदं सत्यविक्रम ॥ १३८॥

उत्तरां मां दिशं विद्धि दृष्टं स्त्रीचापलं च ते ।
अभ्युत्थानेन ते लोका जितास्सत्यपराक्रम ॥ १३९॥

जिज्ञासेयं प्रयुक्ता मे स्थैर्यं कर्तुं तवानघ ।
स्थविराणामपि स्त्रीणां बाधते मैथुनज्वरः ॥ १४०॥

अविश्वासान्न व्यसनी नातिसक्तोऽप्रवासकः ।
विद्वान् सुशीलः पुरुषस् सदारस्सुखमश्नुते ॥ १४१॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

तुष्टाः पितामहास्तेऽद्य तथा देवास्सवासवाः ॥ १४२

सत्यं येन च कार्येण सम्प्राप्तो भगवानिह ।
प्रेषितस्तेन विप्रेण कन्यापित्रा द्विजर्षभ ॥ १४३

निकृतिस्त्री भोगपरा प्रियवादाप्रवासनात् ।
रक्ष्यते चा कुचेलाद्यैर् अप्रसङ्गानुवर्तनैः ॥ १४४

[1]अपर्वस्वनिषिद्धासु रात्रिष्वप्यनृतौ व्रजेत् ।
रात्रौ च नातिनियमो [2]न वै ह्यनियमो भवेत् ॥ १४५

प्रेषितश्चोपदेशाय तच्च सर्वं श्रुतं मया ॥ १४५॥

क्षेमी गमिष्यसि गृहान् श्रमश्च न भविष्यति ।
कन्यां त्वं प्राप्स्यसे विप्र पुत्रिणी च भविष्यति ॥ १४६॥

काम्यया पृष्टवांस्त्वं मां ततो व्याहृतमुत्तरम् ।
अनतिक्रमणीयैषा कृत्स्नैर्लोकैस्त्रिभिस्सदा ॥ १४७॥

गच्छस्व कृतकृत्यस्त्वम् किं वाऽन्यच्छ्रोतुमिच्छसि ।
यावद्ब्रवीमि विप्रर्षे अष्टावक्र यथातथम् ॥ १४८॥

ऋषिप्रवासिता चास्मि तव हेतोर्द्विजर्षभ ।
तस्य सम्माननार्थं तु त्वयि वाक्यं प्रभाषितम् ॥ १४९॥

---

1. क-घ—सर्वास्वपि च निन्द्यासु रात्रिष्व

2. क-घ—नये ह्यनवमो

भीष्मः—

श्रुत्वा तु वचनं तस्यास् स विप्रस्साञ्जलिस्स्थितः ।
अनुज्ञातस्तया चापि स्वगृहं पुनराव्रजत् ॥ १५०॥

गृहमागत्य विश्रान्तस् स्वजनं परिपूज्य च ।
अभ्यगच्छत तं विप्रम् न्यायतः कुलनन्दनः ॥ १५१॥

पृष्टश्च तेन विप्रेण दृष्टं त्वेतन्निदर्शनम् ।
प्राह विप्रं तदा विप्रस् सुप्रीतेनान्तरात्मना ॥ १५२॥

अष्टावक्रः—

भवताऽहमनुज्ञातः प्रस्थितो गन्धमादनम् ।
अस्य चोत्तरतो देशे दृष्टं तद् दैवतं महत् ॥ १५३॥

तया चाहमनुज्ञातो भगवांश्चापि कीर्तितः ।
श्रावितश्चापि तद्वाक्यम् गृहमभ्यागतः प्रभो ॥ १५४॥

भीष्मः—

तमुवाच ततो विप्रः प्रतिगृह्णीष्व मे सुताम् ॥ १५५

विप्रः—

नक्षत्रतिथिसंयोगे पात्रं हि परमं भवान् ॥ १५५॥

भीष्मः—

अष्टावक्रस्तथेत्युक्त्वा प्रतिगृह्य च तां विभो ।
कन्यां प्रगृह्य धर्मात्मा प्रीतिमांश्चाभवत्तदा ॥ १५६॥

कन्यां तां प्रतिगृह्यैव भार्यां परमशोभनाम् ।
उवास मुदितस्तत्र आश्रमे स्वे गतज्वरः ॥ १५७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
[ अस्मिन्नध्याये १५७॥ श्लोकाः ]

---

## ॥ षड्विंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ऋष्यादीनां वियोनिजत्वेऽपि तपोविद्यादीनामेव माहात्म्यप्रयोजकत्वे निदर्शनतया तादृशानां सम्भवप्रकारादिकथनम् ॥

---

युधिष्ठिरः—

वैश्ययोन्यां समुत्पन्नाः शूद्रयोन्यां तथैव च ।
ब्रह्मर्षय इति प्रोक्ताः पुराणा द्विजसत्तमाः ॥ १

कथमेतन्महाराज तत्त्वं शंसितुमर्हसि ।
विरुद्धमिह पश्यामि वियोनौ ब्राह्मणो भवेत् ॥ २

भीष्मः—

अलं कौतूहलेनात्र निबोध त्वं युधिष्ठिर ।
शुभेतरं शुभं वाऽपि न चिन्तयितुमर्हसि ॥ ३

ईशन्त्यात्मन इत्येतद् गतिश्चैषां न सज्जते ।

ब्रह्मभूयांस इत्येव ऋषयश्श्रुतिचोदिताः ॥ ४
निन्द्या न चैते राजेन्द्र [1]प्रमाणं हि प्रमाणिनाम् ।
लोकोऽनुमन्यते चैतान् प्रमाणं ह्यत्र वै तपः ॥ ५
एवं महात्मभिस्तात तपोज्ञानसमन्वितैः ।
प्रवर्तितानि कार्याणि प्रमाणान्येव सत्तम ॥ ६
भार्याश्चतस्रो राजेन्द्र ब्राह्मणस्य स्वधर्मतः ।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च भरतर्षभ ॥ ७
[2]राज्ञस्तु क्षत्रिया वैश्या शूद्रा च भरतर्षभ ।
वैश्यस्य वैश्या विहिता शूद्रा च भरतर्षभ ॥ ८
शूद्रस्यैका स्मृता भार्या प्रतिलोमो हि सङ्करः ।
शूद्रायास्तु नरश्रेष्ठ चत्वारः पतयस्स्मृताः ॥ ९
वर्णोत्तमायास्तु पतिस् सवर्णस्त्वेक एव सः ।
द्वौ क्षत्रियाया विहितौ ब्राह्मणः क्षत्रियस्तथा ॥ १०
वैश्यायास्तु नरश्रेष्ठ विहिताः पतयस्त्रयः ।
सवर्णः क्षत्रियश्चैव ब्राह्मणश्च विशां पते ॥ ११
एवं विधिमनुस्मृत्य ततस्ते ऋषिभिः पुरा ।
उत्पादिता महात्मानः पुत्रा ब्रह्मर्षयः पुरा ॥ १२
पुराणाभ्यामृषिभ्यां तु मित्रेण वरुणेन च ।

1. क—अष्टौ पादा न सन्ति 2. अ-ख—नास्तीदमर्धम्

वसिष्ठोऽथ तथाऽगस्त्यो बहुमिस्तु तथैव च ॥ १३

कक्षीवानार्ष्टिषेणश्च पुरुषः कष एव च ।
[1]माऋतेयस्य वै पुत्रा गौतमस्यात्मजास्स्मृताः ॥ १४

वत्सप्रियश्च भगवान् स्थूलरश्मिस्तथा क्षणिः ।
गौतमस्यैव तनया ये दास्यां जनिताऽच्युत ॥ १५

कपिञ्जलादो ब्रह्मर्षिश् चाण्डाल्यामुदपद्यत ।
वैनतेयस्तथा पक्षी तुर्यायाश्च वसिष्ठतः ॥ १६

प्रसादाच्च वसिष्ठस्य शुक्लाभ्युपगमेन च ।
अदृश्यन्त्याः पिता वैश्यो नाम्ना चित्रमुखः पुरा ॥ १७

ब्राह्मणत्वमनुप्राप्तो ब्रह्मर्षित्वं च कौरव ॥ १७॥

वैश्यश्चित्रमुखः कन्यां वसिष्ठतनयस्य वै ।
शुभां प्रादाद्यतो जातो ब्रह्मर्षिस्तु पराशरः ॥ १८॥

तथैव दाशकन्यायां सत्यवत्यां महानृषिः ।
पराशरात् प्रसूतश्च व्यासो [2]वेदमयो मुनिः ॥ १९॥

[3]विभण्डकस्य मृग्यां च तपोयोगात्मको मुनिः ।
ऋश्यशृङ्गस्समुत्पन्नो ब्रह्मचारी महायशाः ॥ २०॥

शार्ङ्गर्यो च मन्दपालस्य चत्वारो ब्रह्मवादिनः ।

---

1. क-घ—माम
2. क-ख-घ—योग
3. अ—इदमर्धं नास्ति

जाता ब्रह्मर्षयः पुण्या यैरस्तुतो हव्यवाहनः ॥ २१॥

द्रोणश्च स्तम्बमित्रश्च शारिसृक्कश्च बुद्धिमान् ।
जरितारिश्च विख्यातश् चत्वारस्सूर्यसन्निभाः ॥ २२॥

महर्षेः कालवृक्षस्य [1]शकुन्त्यामेव जज्ञिवान् ।
हिरण्यहस्तो भगवान् महर्षिः काञ्चनप्रभः ॥ २३॥

पावकात्तात सम्भूता मनसा च महर्षयः ।
पितामहस्य राजेन्द्र पुलस्त्यपुलहादयः ॥ २४॥

सवर्णश्चापि राजर्षिस् सवर्णायामजायत ।
मृण्मय्यां भरतश्रेष्ठ आदित्येन विवस्वता ॥ २५॥

शाण्डिल्यश्चाग्नितो जातः काश्यपस्यात्मजः प्रभुः ।
शरद्वतश्शरस्तम्बात् कृपश्च कृपया सह ॥ २६॥

पद्माच्च जज्ञे राजेन्द्र सोमपस्य महात्मनः ।
रेणुश्च रेणुका चैव राममाता यशस्विनी ॥ २७॥

यमुनायां समुद्भूतस् सोमकेन महात्मना ।
अर्कदत्तो महानृषिः प्रथितः पृथिवीतले ॥ २८॥

अग्नेराहवनीयाच्च द्रुपदस्येन्द्रवर्चसः ।
धृष्टद्युम्नश्च सम्भूतो वेद्यां कृष्णा च भारत ॥ २९॥

[2]व्याघ्रयोन्यां ततो जाता वसिष्ठस्य महात्मनः ।

---

1. अ-क—कुशन्त्या 2. क-ग—विप्रयो

एकोनविंशतिः पुत्राः ख्याता व्याघ्रपदादयः ॥ ३०॥

मन्धश्च बादलोमश्च जाबालिश्च महानृषिः ।
मन्युश्चैवोपमन्युश्च सेतुकर्णस्तथैव च ॥ ३१॥

एते चान्ये च विख्याताः पृथिव्यां गोत्रतां गताः ॥ ३२

विश्वाकाशस्य राजर्षेर् इक्ष्वकोस्तु महात्मनः ।
बालाश्वो नाम पुत्रोऽभूच् छित्वां भित्त्वा विनिस्सृतः ॥ ३३

मान्धाता चैव राजर्पिर् युवनाश्वेन धीमता ।
स्वयं धृतोऽथ गर्भेण दिव्यास्त्रबलसंयुतः ॥ ३४

[1]गौरतश्चापि राजर्षिश् चक्रवर्ती महायशाः ।
बाहुदायां समुत्पन्नो नद्यां राज्ञा सुबाहुना ॥ ३५

भूमेश्च पुत्रो नरकस् संवर्तश्चैव पुष्कलः ।
अद्रिश्चैव महातेजा ऋषिर्गार्ग्यो ह्यजायत ॥ ३६

एते चान्ये च बहवो राजन्या ब्राह्मणास्तथा ।
प्रभावेनाभिसम्भूता महर्षीणां महात्मनाम् ॥ ३७

नासाध्यं तपसा तेषां विद्ययाऽऽत्मगुणैः परैः ॥ ३७॥

अस्मिन्नर्थे च मनुना गीतश्श्लोको नराधिप ।
धर्मं प्रथयता राजंस् तं निबोध युधिष्ठिर ॥ ३८॥

---

1 अ-व—गौरिक

ऋषीणां च नदीनां च साधूनां च महात्मनाम् ।
प्रभवो नाधिगन्तव्यस् स्त्रीणां दुश्चरितस्य च ॥ ३९॥

तन्नात्र चिन्ता कर्तव्या महर्षीणां समुद्भवे ।
यथा सर्वगतो ह्यग्निस् तथा तेजो महात्मसु ॥ ४०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[ अस्मिन्नध्याये ४०॥ श्लोकाः ]

---

## ॥ सप्तविंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति युगचतुष्टयधर्मादिप्रतिपादकनारदमार्कण्डेय-संवादानुवादः ॥

---

युधिष्ठिरः—

पुत्रैः कथं महाराज पुरुषस्तारितो भवेत् ।
यावन्न लब्धवान् पुत्रम् अफलः पुरुषो नृप ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
नारदेन पुरा गीतम् मार्कण्डेयाय पृच्छते ॥ २

पर्वतं नारदं चैवम् असितं देवलं च तम् ।

आरुणेयं च रैभ्यं च एतानत्रागतान् पुरा ॥ ३
गङ्गायमुनयोर्मध्ये भोगवत्यास्समागमे ।
दृष्ट्वा पूर्वं समासीनान् मार्कण्डेयोऽभ्यगच्छत ॥ ४
ऋषयस्तु मुनिं दृष्ट्वा समुत्थायोन्मुखास्स्थिताः ।
अर्चयित्वाऽर्हतो विप्रम् किं कुर्म इति चाब्रुवन् ॥ ५

मार्कण्डेयः—

अयं समागमस्सद्भिर् यत्नेनासादितो मया ।
अत्र प्राप्स्यामि धर्माणाम् आचारस्य च निश्चयम् ॥ ६
ऋजुः कृतयुगे धर्मस् तस्मिन् क्षीणे विमुह्यति ।
युगे युगे महर्षिभ्यो धर्ममिच्छामि वेदितुम् ॥ ७

भीष्मः—

ऋषिभिर्नारदः प्रोक्तो ब्रूहि यत्रास्य संशयः ।
धर्माधर्मेषु तत्त्वज्ञ त्वं विच्छेत्ताऽसि संशयान् ॥ ८
ऋषिभ्योऽनुमतो वाक्यं नियोगान्नारदोऽब्रवीत् ।
सर्वधर्मार्थतत्त्वज्ञं मार्कण्डेयं ततोऽब्रवीत् ॥ ९

नारदः—

दीर्घायो तपसा दीप्त वेदवेदाङ्गतत्त्ववित् ।
यत्र ते संशयो ब्रह्मन् समुत्पन्नस्स उच्यताम् ॥ १०
धर्मे लोकोपकारं वा यच्चान्यच्छ्रोतुमिच्छसि ।
तदहं कथयिष्यामि ब्रूहि त्वं सुमहातपाः ॥ ११

मार्कण्डेयः—

युगे युगे व्यतीतेऽस्मिन् धर्मसेतुः प्रणश्यति ।
कथं धर्मच्छलेनाहम् प्राप्नुयामिति मे मतिः ॥ १२

नारदः—

आसीद्धर्मः पुरा विप्र चतुष्पादः कृते युगे ।
ततो ह्यधर्मः कालेन प्रवृत्तः किञ्चिदुन्नतः ॥ १३
ततस्त्रेतायुगं नाम प्रवृत्तं धर्मदूषणम् ॥ १३॥
तस्मिन् व्यतीते सम्प्राप्तम् तृतीयं द्वापरं युगम् ।
तदा धर्मस्य द्वौ पादावधर्मो नाशयिष्यति ॥ १४॥
द्वापरे तु परिक्षीणे [1]नन्दिके समुपस्थिते ।
लोकवृत्तं च धर्मं च उच्यमानं निबोध मे ॥ १५॥
चतुर्थं नन्दिकं नाम धर्मः पादावशेषितः ।
ततः प्रभृति जायन्ते क्षीणप्रज्ञायुषो नराः ॥ १६॥
क्षीणप्राणधना लोके धर्माचारबहिष्कृताः ॥ १७

मार्कण्डेयः—

एवं विलुलिते धर्मे लोके चाधर्मसंयुते ।
[2]किं चतुर्वर्णनियतं हव्यं कव्यं न नश्यति ॥ १८

---

1. ख—चान्तिके
2. अ—चातुर्वर्ण्यस्य नियतं+नियच्छति
ख—चातुर्वर्ण्यस्य निधनं हव्यं क

नारदः—

मन्त्रपूतं सदा हव्यं कव्यं चैव न नश्यति ।
प्रतिगृह्णन्ति तद्देवा दातुर्न्यायान् प्रयच्छतः ॥ १९
सत्त्वयुक्तश्च दाता च सर्वान् कामानवाप्नुयात् ।
अवाप्तकामस्स्वर्गे च महीयेत यथेप्सितम् ॥ २०

मार्कण्डेयः—

चत्वारो ह्यथ ये वर्णा हव्यं कव्यं प्रदास्यते ।
मन्त्रहीनमवज्ञातम् तेषां दत्तं क्व गच्छति ॥ २१

नारदः—

[1]असुरान् गच्छते दत्तं विप्रै रक्षांसि क्षत्रियैः ।
वैश्यैः प्रेतानि वै दत्तम् शूद्रैर्भूतानि गच्छति ॥ २२

मार्कण्डेयः—

अथ वर्णावरे जाताश् चातुर्वर्ण्योपदेशिनः ।
दास्यन्ति हव्यकव्यानि तेषां दत्तं क्व गच्छति ॥ २३

नारदः—

वर्णावराणां भूतानां हव्यकव्यप्रदातृणाम् ।
नैव देवा न पितरः प्रतिगृह्णन्ति तत् स्वयम् ॥ २४
यातुधानाः पिशाचाश्च भूता ये चापि नैर्ऋताः ।
तेषां सा विहिता वृत्तिः पितृदैवतनिर्गता ॥ २५

---

1. क-ख—अर्धचतुष्टयं नास्ति

तेषां सर्वप्रदातॄणां हव्यकव्यं समाहिताः ।
यत् प्रयच्छन्ति विधिवत् तद्धै भुञ्जन्ति देवताः ॥* २६

मार्कण्डेयः—

श्रुतं वर्णावरैर्दत्तम् हव्यं कव्यं च नारद ।
सम्प्रयोगे च पुत्राणां कन्यानां च ब्रवीहि मे ॥ २७

नारदः—

कन्याप्रदानं पुत्राणां स्त्रीणां संयोगमेव च ।
आनुपूर्व्यान्मया सम्यग् उच्यमानं निबोध मे ॥ २८

जातमात्रा तु दातव्या कन्यका सदृशे वरे ।
काले दत्तासु कन्यासु पिता धर्मेण युज्यते ॥ २९

यस्तु पुष्पवतीं कन्यां बान्धवो न प्रयच्छति ।
मासि मासि गते बन्धुस् तस्या भ्रौणघ्न्यमाप्नुते ॥ ३०

यस्तु कन्यां गृहे रुन्ध्याद् ग्राम्यैर्भोगैर्विवर्जिताम् ।
अवध्यातस्स कन्याया बन्धुः प्राप्नोति भ्रूणहाम् ॥ ३१

दूषिता पाणिमात्रेण मृते भर्तरि दारिका ।
[1]संस्कारं लभते नारी द्वितीये सा पुनः पतौ ॥ ३२

पुनर्भूर्नाम सा कन्या सपुत्रा हव्यकव्यदा ।
अदूष्या सा प्रसूतीषु प्रजानां दारकर्मणि ॥ ३३

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. क-घ—सन्तानं

मार्कण्डेयः—

या तु कन्या प्रसूयेत गर्भिणी या तु वा भवेत् ।
कथं दारक्रियां भूयस् सा भजेदृषिसत्तम ॥ ३४

नारदः—

तत्त्वार्थनिश्चितं शब्दं कन्यका नयतेऽग्रये ।
तस्मात् कुर्वन्ति भावं याः कुमार्यस्ता न कन्यकाः ॥ ३५

ब्रह्महत्यात्रिभागेन गर्भाधानविशोधितः ।
गृह्णीयात् तां चतुर्भागं विशुद्धां सर्जनात् पुनः ॥ ३६

मार्कण्डेयः—

कथं कन्यासु ये जाता बन्धूनां दूषितास्सदा ।
कस्य ते हव्यकव्यानि प्रदास्यन्ति महामुने ॥ ३७

नारदः—

कन्यायास्तु पितुः पुत्राः कानीना हव्यकव्यदाः ।
अन्तर्वत्न्यास्तु यः पाणिं गृह्णीयात् स सहोढजः ॥ ३८

मार्कण्डेयः—

अथ येनाहितो गर्भः कन्यायां तत्र नारद ।
कथं पुत्रफलं तस्य भवेदेतत् प्रचक्ष्व मे ॥ ३९

नारदः—

धर्माचारेषु ते नित्यं दूषकाः कृतशोधनाः ।
बीजं च नश्यते तेषां मोघचेष्टा भवन्ति ते ॥ ४०

मार्कण्डेयः—

अथ काचिद् भवेत् कन्या क्रीता दत्ता हृताऽपि वा ।
कथं पुत्रकृतं तस्यास् तद्भवेदृपिसत्तम ॥ ४१

नारदः—

क्रीता दत्ता हृता चैव या कन्या पाणिवर्जिता ।
कौमारी नाम सा भार्या प्रसवेदौरसान् सुतान् ॥ ४२
न पत्न्यर्थे शुभा प्रोक्ता तत्कर्मण्यपवार्जिते ॥ ४२॥

मार्कण्डेयः—

केन मङ्गलकृत्येषु विनियुज्यन्ति कन्यकाः ।
एतदिच्छामि विज्ञातुं तत्त्वेनेह महामुने ॥ ४३॥

नारदः—

नित्यं निवसते लक्ष्मीः कन्यकासु प्रतिष्ठिता ।
शोभना शुभयोग्या च पूज्या मङ्गलकर्मसु ॥ ४४॥
आकरस्थं यथा रत्नं सर्वकामफलोपगम् ।
तथा कन्या महालक्ष्मीस् [1]सर्वलोकस्य मङ्गलम् ॥ ४५॥
एवं कन्या परा लक्ष्मी [2]रतिस्तोषश्च देहिनाम् ।
महाकुलानां चारित्रं वृत्तेन निकषोपलम् ॥ ४६॥
आनयित्वा स्वकाद्वर्णात् कन्यकां यो भजेन्नरः ।

1. घ—अयं पादोऽनन्तरश्च न स्तः  2. क—अयं पादोऽनन्तरश्च न स्तः

दातारं हव्यकव्यानां पुत्रकं या प्रसूयते ॥ ४७॥

साध्वी कुलं वर्धयति साध्वी पुष्टिर्गृहे परा ।
साध्वी लक्ष्मी रतिस्साक्षात् प्रतिष्ठा सन्ततिस्तथा ॥* ४८॥

मार्कण्डेयः—

श्रुतं बहुविधं वृत्तं कन्यकानां महामते ।
इच्छामि योषितां श्रोतुं धर्माधर्मौ परिग्रहे ॥ ४९॥

नारदः—

अष्टौ भार्यागमा धर्म्या नराणां दारकर्मणि ।
प्रेत्येह च हिता यास्तु सपुत्रा हव्यकव्यदाः ॥ ५०॥

साध्वी पाणिगृहीता या कौमारी पाणिवर्जिता ।
भ्रातृभार्या स्वभार्येति प्रसूयेत पुत्रमौरसम् ॥ ५१॥

मार्कण्डेयः—

त्रयो भार्यागमा ज्ञेया यत्र धर्मो न नश्यति ।
पञ्चान्याः पश्चिमा ब्रूहि भार्यास्तासां च ये सुताः ॥ ५२॥

नारदः—

सगोत्रभार्या क्रीता च परभार्या च कारिता ।
गतागता च या भार्या आश्रमादाहृता च या ॥ ५३॥

एता भार्यागमाः पञ्च पुनर्भार्या भवन्ति याः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

एता भार्या नृणां गम्यास् तत्पुत्रा हव्यकव्यदाः ॥* ५४॥

मार्कण्डेयः—

श्रुता भार्याश्च पुत्राश्च विस्तरेण महामुने ।
आश्रमस्थाः कथं नार्यो न दुष्यन्तीति ब्रूहि भो ॥ ५५॥

नारदः—

आश्रमस्थासु नारीषु बान्धवत्वं प्रणश्यति ।
नष्टवंश्या भवन्त्येता [1]बन्धूनामथ भर्तृणाम् ॥ ५६॥

परदारा मुक्तदोषास् ता नार्यो श्रमसंस्थिताः ।
स्वयमीशास्स्वदेहानां काम्यास्तद्गतमानसाः ॥ ५७॥

एवं नार्यो न दुष्यन्ति नराणां तत्प्रसूतिषु ।
धर्मपत्न्यो भवन्त्येतास् सपुत्रा हव्यकव्यदाः ॥ ५८॥

मार्कण्डेयः—

परस्य भार्या या पूर्वं मृते भर्तरि या पुनः ।
अन्यं भजति भर्तारं ससुता ह्यसुता कथम् ॥ ५९॥

नारदः—

असुता वा प्रसूता वा गृहस्थानां परस्त्रियः ।
परामृष्टेति ता वर्ज्या धर्माचारेषु दूषिताः ॥ ६०॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. क-घ—इतः अष्टौ पादा न सन्ति

न चासां हव्यकव्यानि प्रतिगृह्णन्ति देवताः ।
यस्तासु जनयेत् पुत्रान् न तैः पुत्रमवाप्नुयात् ॥ ६१॥

मार्कण्डेयः—

[1]परक्षेत्रेषु यो बीजं चापल्याद्विसृजेन्नरः ।
कथं पुत्रफलं तस्य भवेत्तदृषिसत्तम ॥ ६२॥

नारदः—

अस्वामिके परक्षेत्रे यो नरो बीजमुत्सृजेत् ।
स्वयंवृतो श्रमस्थायां तद्बीजं न विनश्यति ॥ ६३॥
परक्षेत्रेषु यो बीजं नरो दर्पात् समुत्सृजेत् ।
क्षेत्रिकस्यैव तद्बीजं न बीजी लभते फलम् ॥ ६४॥
नातः परमधर्म्यं चाप्ययशस्यं तथोत्तरम् ।
गर्भादीनां च [2]बहुभिष् ताश्च त्याज्यास्समेष्वपि ॥ ६५॥

मार्कण्डेयः—

अथ ये परदारेषु पुत्रा जायन्ति नारद ।
कस्य ते बन्धुदायादा भवन्ति परमद्युते ॥ ६६॥

नारदः—

परदारेषु जायेते द्वौ पुत्रौ कुण्डगोलकौ ।
जीवत्यथ पतौ कुण्डो मृते भर्तरि गोलकः ॥ ६७॥

---

1. ख-घ-अर्धचतुष्टयं नास्ति 2. क—सर्वेषां

ते च जाताः परक्षेत्रे देहिनां प्रेत्य चेह च ।
दत्तानि हव्यकव्यानि नाशयन्त्यथ दातृणाम् ॥ ६८॥

पितुर्हि नरकायैते गोलकस्तु विशेषतः ।
चण्डालतुल्यौ तज्ज्ञौ हि परत्रेह च नश्यतः ॥ ६९॥

मार्कण्डेयः—

कस्य ते गर्हिताः पुत्राः पितृणां हव्यकव्यदाः ।
यस्य क्षेत्रे प्रसूयन्ते यो वा ताञ्जनयेत् सुतान् ॥ ७०॥

नारदः—

क्षेत्रिकश्चैव बीजी च द्वावेतौ निरयं गतौ ।
न रक्षति च यो दारान् परदारांश्च गच्छति ॥ ७१॥

गर्हितास्ते नरा नित्यं धर्माचारबहिष्कृताः ।
कुण्डो भोक्ता च भोजी च कुत्सितः पितृदैवतैः ॥ ७२॥

मार्कण्डेयः—

तथैते गर्हिताः पुत्रा हव्यकव्यानि नारद ।
कस्य नित्यं प्रयच्छन्ति धर्मो वा तेषु किं फलम् ॥ ७३॥

नारदः—

यातुधानाः पिशाचाश्च प्रतिगृह्णन्ति तैर्हुतम् ।
हव्यं कव्यं च तैर्दत्तं ये च भूता निशाचराः ॥ ७४॥

मार्कण्डेयः—

अथ ते राक्षसाः प्रीताः किं प्रयच्छन्ति दातृणाम् ।
किं वा धर्मफलं तेषां भवेत्तद्वृषिसत्तम ॥ ७५॥

नारदः—

न दत्तं नश्यते किञ्चित् सर्वभूतेषु दातृणाम् ।
प्रेत्य चेह च तां पुष्टिम् उपाश्नन्ति प्रदायिनः ॥ ७६॥

मार्कण्डेयः—

अथ गोलककुण्डाभ्यां सन्ततिर्या भविष्यति ।
तयोर्ये बान्धवाः केचित् प्रदास्यन्ति कथं तु तत् ॥ ७७॥

नारदः—

साध्वीजातास्सुतास्तेषां तां वृत्तिमनुतिष्ठताम् ।
प्रीणन्ति पितृदैवत्यम् हव्यकव्यं समाहिताः ॥ ७८॥

एवं गोलककुण्डाभ्यां ये च वर्णापदेशिनः ।
हव्यं कव्यं च शुद्धानां प्रतिगृह्णन्ति देवताः* ॥ ७९॥

मार्कण्डेयः—

श्रुतं नराणां चापल्यं परस्त्रीषु प्रजायताम् ।
प्रमदानां तु चापल्ये दोषमिच्छामि वेदितुम् ॥ ८०॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

नारदः—

एकवर्णे विदोषं तु गमनं पूर्वकालिकम् ।
धाता च समनुज्ञातो विष्णुना तत्तथाऽकरोत् ॥ ८१॥

भगलिङ्गे महाप्राज्ञ पूर्वमेव प्रजापतिः ।
ससर्ज ताभ्यां संयोगम् अनुज्ञातश्चकार सः ॥ ८२॥

अथ विष्णुप्रसादेन भगो दत्तवरः किल ।
तेन चैव प्रसादेन सर्वांल्लोकानुपाश्नुते ॥ ८३॥

तस्मात्तु पुरुषे दोषो ह्यधिको नात्र संशयः ।
विना गर्भे सवर्णेषु न त्याज्या गमनात् स्त्रियः ॥ ८४॥

प्रायश्चित्तं यथान्यायं दण्डं कुर्यात् स पण्डितः ।
[1]वहिर्वा दर्शनं स्नानं स्वनयं त्रितयं निशि ॥ ८५॥

भूमौ च भस्मशयनं दानं भोगविवर्जितम् ।
[2]दोषगौरवतः कालो द्रव्यगौरवमेव च ॥ ८६॥

मर्यादा स्थापिता पूर्वम् इति तीर्थान्तरं गते ॥ ८७

तद्योषितां तु दीर्घायो नास्ति दोषो व्यतिक्रमे ।
भगस्तीर्थान्तरे शुद्धो विष्णोस्तु वचनादिह ॥ ८८

---

1. क—श्वभिर्वा दंशनं स्नानं स्वनयं
2. ख—कस्य ते गर्हिताः पुत्राः पितॄणां हव्यकव्यदाः ।
यस्य क्षेत्रे प्रसूयन्ते यो वा ताञ् जनयेत् सुतान् ॥
[ अधिकः पाठः ]

रक्ष्यश्चैवान्धसंवादैर् अन्य[1]देहाद्विमोक्षणैः ।
आसां शुद्धौ विशेषेण कर्मणा फलमश्नुते ॥ ८९

नैता वाच्या न वै वध्या न क्लेश्याश्शुभमिच्छता ।
विष्णुप्रसादादित्येष भगस्तीर्थान्तरं गतः ॥ ९०
मासि मासि ऋतुस्तासां दुष्कृतान्यपकर्षति ॥ ९०॥

स्त्रियस्तोषकरा नृणां स्त्रियः पुष्टिप्रदास्सदा ।
पुत्रसेतुप्रतिष्ठाश्च स्त्रियो लोके महाद्युते ॥* ९१॥

मार्कण्डेयः—

श्रुतं बलं प्रभावश्च योषितां मुनिसत्तम ।
एकस्य बहुभार्यस्य धर्ममिच्छामि वेदितुम् ॥ ९२॥

नारदः—

बहुभार्यासु सक्तस्य नारी[2]भोगेषु देहिनः ।
ऋतौ विमुञ्चमानस्य सान्निध्ये भ्रूणहा स्मृतः ॥ ९३॥

वृद्धां वन्ध्यां [3]सुव्रतां च मृतापत्यामपुष्पिणीम् ।
कन्यां च बहुपुत्रां च वर्जयन् मुच्यते भयात् ॥ ९४॥

व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु ।
ऋतुकाले तु नारीणां भ्रूणहत्यां प्रमुञ्चति ॥ ९५॥

---

1. क-घ—गर्भा ख—गेहा
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
2. क-ख—भोग्येषु भोगिनः 3. क-ख-घ—सुवृत्तां

मार्कण्डेयः—

वैश्यनारीषु वै जाताः परप्रेष्यासु वा सुताः ।
कस्य ते बन्धुदायादा भवन्ति हि महामुने ॥ ९६॥

नारदः—

पण्यस्त्रीषु प्रसूता ये यस्य स्त्री तस्य ते सुताः ।
क्रयाच्च कृत्रिमाः पुत्राः प्रदानाच्चैव दत्रिमाः ॥ ९७॥

मार्कण्डेयः—

[1]पण्यनारीष्वनियतः पुंसोऽर्थो वर्तते ध्रुवम् ।
अत्र चाहितगर्भायाः कस्य पुत्रं वदन्ति तम् ॥ ९८॥

नारदः—

तीर्थव्रतासु नारीषु न्यायतो योऽभिगच्छति ।
ऋतौ तस्य भवेद्गर्भो यं वा नारी न शङ्कते ॥ ९९॥

मार्कण्डेयः—

नराणां त्यजतां भार्यां कामक्रोधगुणान्विताम् ।
अप्रसूतां प्रसूतां वा तेषां पृच्छामि निष्कृतिम् ॥ १००॥

नारदः—

अपापां त्यजमानस्य साध्वीं मत्वैवमादितः ।
[2]आत्मवंशस्वधर्मौ तु त्यजतां निष्कृतिर्न तु ॥ १०१॥

---

1. क-ख—अर्धचतुष्टयं नास्ति

2. क-घ—आत्मवश्यां हि त्यजतो निष्कृतिर्नोपलभ्यते [ पाठान्तरम् ]

[1]यो नरस्त्यजते भार्यां पुष्पिणीमप्रसूतिकाम् ।
स नष्टवंशः पितृभिर् युक्तस्त्यज्येत दैवतैः ॥ १०२॥

भार्यामपत्यसञ्जातां प्रसूतां पुत्रपौत्रिणीम् ।
पुत्रदारपरित्यागी न सम्प्राप्नोति निष्कृतिम् ॥ १०३॥

एवं हि भार्यां त्यजतां नराणां नास्ति निष्कृतिः ।
नार्हन्ति प्रमदास्त्यक्तुं पुत्रपौत्रप्रतिष्ठिताः ॥ १०४॥

मार्कण्डेयः—

कीदृशीं सन्त्यजन् भार्यां नरो दोषैर्न लिप्यते ।
एतदिच्छामि तत्त्वेन विज्ञातुमृषिसत्तम ॥ १०५॥

नारदः—

मोक्षधर्मस्थितानां तु अन्योन्यमनुजानताम् ।
भार्यापतीनां मुक्तानाम् अधर्मो न विधीयते ॥ १०६॥

अन्यसङ्गां गतापत्यां शूद्रगां पर[2]गामिनीम् ।
परीक्ष्य त्यजमानानां नराणां नास्ति पातकम् ॥ १०७॥

पातकेऽपि तु भर्तव्यौ द्वौ तु माता पिता तथा ॥ १०८

मार्कण्डेयः—

भार्यायां व्यभिचारिण्यां नरस्य त्यजतो रुषा ।
कथं धर्मोऽप्यधर्मो वा भवतीह महामते ॥ १०९

1. घ—पञ्चार्धानि न सन्ति 2. क-घ—हारिणीम्

नारदः—

अनृतेऽपि हि सत्ये वा यो नारीं दूषितां त्यजेत् ।
अरक्षमागस्त्वां भार्यां नरो भवति भ्रूणहा ॥ ११०

अपत्यहेतोर्या नारी भर्तारमतिलङ्घयेत् ।
लोलेन्द्रियेति सा रक्ष्या न सन्त्याज्या कथञ्चन ॥ १११

नद्यश्च नार्यश्च समस्वभावा
नैता दुष्यन्ति नरावगाढाः ।
स्रोतांसि नद्यो वहते निपातं
नारी रजोभिः पुनरेति शौचम् ॥ ११२

एवं नार्यो न दुष्यन्ति व्यभिचारेऽपि भर्तृणाम् ।
मासि मासि भवेद्रागस् ततश्शुद्धा भवन्त्युत ॥ ११३

मार्कण्डेयः—

कानि तीर्थानि भगवन् नृणां देहाश्रितानि वै ।
तानि वै शंस भगवन् याथातथ्येन पृच्छतः ॥ ११४

सर्वतीर्थेषु [1]तीर्थज्ञ किं तीर्थं परमं नृणाम् ।
[2]यत्रोपस्पृश्य पूतो यो नरो भवति नित्यशः ॥ ११५

नारदः—

देवर्षिपितृतीर्थानि ब्राह्मं मध्येऽथ वैष्णवम् ।

1. क-घ—सर्वज्ञ  2. क-घ—अर्धचतुष्टयं नास्ति

नृणां तीर्थानि पञ्चाहुः पाणौ सन्निहितानि वै ॥ ११६

आद्यतीर्थं तु तीर्थानां वैष्णवो भाग उच्यते ।
यत्रोपस्पृश्य वर्णानां चतुर्णां वर्धते कुलम् ॥ ११७

पितृदैवतकार्याणि वर्धन्ते प्रेत्य चेह च ॥ ११७॥

मार्कण्डेयः—

[1]नराणां कामवृत्तानां या नार्यो निरवग्रहाः ।
यासामभिग्रहो नास्ति ता मे कथय नारद ॥ ११८॥

नारदः—

पशुर्वेश्या नटी गोपी तान्तुकी तुन्नवायिकी ।
नारी किराती शवरी नर्तकी चानवग्रहा ॥ ११९॥

मार्कण्डेयः—

एतासु जाता नारीषु सर्ववर्णेषु ये सुताः ।
[2]तेषु के बन्धुदायादा भवन्ति ऋषिसत्तम ॥ १२०॥

नारदः—

य एताः परिगृह्णन्ति तेषामेव हि ते सुताः ।
सर्वत्र तु प्रवृत्तासु बीजं नश्यति देहिनाम् ॥ १२१॥

मार्कण्डेयः—

सर्वस्त्रीषु प्रवृत्ताश्च साधुवेदविवर्जिताः ।
मानवाः काण्डपृष्ठाश्च [3]वेदमन्त्रबहिष्कृताः ॥ १२२॥

---

1. क-घ—नारीणां
2. अ—केषु
3. घ—अयं पादो नास्ति

नियुक्ता हव्यकव्येषु [1]तेषां दत्तं कथं भवेत् ॥ १२३

नारदः—

नार्हन्ति हव्यकव्यानि सावित्रीवर्जिता द्विजाः ।
दौत्यं नाम प्रदानं तद् यथा शूद्रेषु वै तथा ॥ १२४

मार्कण्डेयः—

धर्मेष्वधिकृतानां तु नराणां मुह्यते मनः ।
कथं न विघ्नं भवति एतदिच्छामि वेदितुम् ॥ १२५

नारदः—

अर्थाश्च नार्यश्च समानमेतच्
छ्रेयांसि पुंसामिह मोहयन्ति ।
रतिप्रमोदात् प्रमदा हरन्ति
भोगैर्धनं चाप्युपहन्ति धर्मान् ॥ १२६

हव्यं कव्यं च [2]धर्मात्मा सर्वं तच्छ्रोत्रियोऽर्हति ।
दत्तं हि श्रोत्रिये साधौ ज्वलिताग्नाविवाहुतिः ॥ १२७

मार्कण्डेयः—

श्रोत्रियाणां कुले जाता वेदार्थविदितात्मनाम् ।
हित्वा कस्मात् त्रयीं विद्यां वार्तां वृत्तिमुपाश्रिताः ॥ १२८

नारदः—

चातुर्वर्ण्यं पुरा न्यस्तं सुविद्वत्सु द्विजातिषु ।

1. क-ख—इतः अष्टौ पादा न सन्ति 2. क-घ—यत् किञ्चि

तस्माद्वर्णैस्संविभज्या वृत्तिस्सङ्करवर्जिता ॥ १२९

मार्कण्डेयः—

ये चान्ये श्रोत्रिया जातास् संस्कृताः पुत्रगृध्नुभिः ।
असंस्कृताश्श्रोत्रियजास् संस्कृता [1]ज्ञानिजाः कथम् ॥ १३०

नारदः—

असंस्कारो वैदिकश्च स मान्योऽश्रोत्रियात्मजः ।
शुद्धान्वयश्श्रोत्रियस्तु सुविद्वद्भिस्समोऽन्यथा ॥ १३१
अनधीयानधीयांश्च वेदसंस्कारवर्जिताः ।
तस्मात्ते वेदविज्ञाऽपि विप्राश्श्रुतिनिकारिणः ॥ १३२
ब्रह्मराशौ पुरा सृष्टा वेदसंस्कारसंस्कृताः ।
तस्मात्तेष्वेव ते जातास् साधवः कुलधारिणः ॥ १३३

मार्कण्डेयः—

स्वयं क्रीतासु प्रेष्यासु प्रसूयन्ते तु ये नराः ।
कस्य नार्यस्सुताश्चैव भवन्ति ऋषिसत्तम ॥ १३४

नारदः—

स्वदास्यां यो नरो मोहात् प्रसूयेत स पापकृत् ।
इहाभिनिन्दितः प्रेत्य अपत्यं प्रेष्यतां नयेत् ॥ १३५
सा तस्य भार्या पुत्रा ये हव्यकव्यप्रदा न च ।
तस्या ये बान्धवाः केचिद् विषक्ताः प्रेष्यतां गताः ॥ १३६

1. क—ज्ञानजाः अ-ख—ज्ञानिनः

सर्वे तस्यास्तु सम्बन्धान्मुच्यन्ते प्रेष्यकर्मसु ॥ १३६॥

एतत्ते कथितं सर्वं यदभिव्याहृतं त्वया ।
अथवा संशयः कश्चिद् भूयस्सम्प्रष्टुमर्हसि ॥ १३७॥

मार्कण्डेयः—

अमिथ्यादर्शनो लोके नारदस्सर्वकोविदः ।
प्रत्यक्षदर्शी लोकानां स्वयम्भूरिव सत्तमः ॥ १३८॥

भीष्मः—

इति सम्भाष्य ऋषिभिर् मार्कण्डेयो महातपाः ।
नारदं चापि सत्कृत्य तेन चैवाभिसत्कृतः ॥ १३९॥

आमन्त्रयित्वा ऋषिभिः प्रययावाश्रमं मुनिः ॥ १४०

ऋपयश्चापि तीर्थानां परिचर्यां प्रचक्रमुः ॥ १४०॥

[1]सुक्षेत्रबीजसंस्कारविशुद्धो ब्रह्मचर्यया ।
नित्यनैमित्तिकात् स्नातो मनश्शुद्ध्या च शुद्ध्यति ॥ १४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[ अस्मिन्नध्याये १४१॥ श्लोकाः ]

---

1. क-घ—इदमर्धद्वयं नास्ति

## ॥ अष्टाविंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति दाने पात्राणां लक्षणादिकथनम् ॥

युधिष्ठिरः—

किमाहुर्भरतश्रेष्ठ पात्रं विप्रास्सनातनम् ।
ब्राह्मणं लिङ्गिनं चेह ब्राह्मणं वाऽप्यलिङ्गिनम् ॥ १

भीष्मः—

[1]श्रद्धापूतो नरस्तात दुर्दान्तोऽपि न संशयः ।
पूतो भवति सर्वत्र किं पुनस्त्वं महामते ॥ २

युधिष्ठिरः—

न ब्राह्मणं परीक्षेत दैवेषु सततं नरः ।
[2]कव्यप्रदाने तु बुधाः परीक्ष्यं ब्राह्मणं विदुः ॥ ३

भीष्मः—

दैवप्रमादाद्दिज्यन्ते [3]द्विजन्मानो न संशयः ॥ ३॥

[4]सुवृत्तमभिपन्नाय लिङ्गिने चेतराय वा ।
देयमाहुर्महाराज उभावेतौ तपस्विनौ ॥ ४॥

---

1. क-घ—शुद्धः पूतो
2. क-घ—अथ कन्याप्रदानेषु
3. क-घ—यजमाना न
4. घ—इदमर्धचतुष्टयं नास्ति घ—अर्धपञ्चकं नास्ति

युधिष्ठिरः—

श्रद्धया परया पूतो यः प्रयच्छेद्द्विजातये ।
हव्यं कव्यं तथा दानं न दोषस्स्यात् पितामह ॥ ५॥

भीष्मः—

ब्राह्मणाः पात्रभूताश्च शुद्धा नैवं पितृष्विह[1] ॥ ६

युधिष्ठिरः—

अपूर्वोऽप्यथवा विद्वान् सम्बन्धी वाऽथ योभवेत् ।
तपस्वी यज्ञशीलो वा कथं पात्रं भवेच्च सः ॥ ७

भीष्मः—

कुलीनः कर्मकृद्विद्वांस् तथा चाप्यनृशंसवान् ।
ह्रीमानृजुस्सत्यवादी पात्रं पूर्वे तु ते त्रयः ॥ ८

अत्रेदं शृणु मे पार्थ चतुर्णां तेजसां मतम् ।
पृथिव्याः काश्यपस्याग्नेर् मार्कण्डेयस्य चैव हि ॥ ९

पृथिवी—

यथा महार्णवे क्षिप्तस् स्फीतो लोष्टो विनश्यति ।
तथा दुश्चरितं सर्वम् त्रयीनित्ये निमज्जति ॥ १०

1. ब—पूतो भवति सर्वत्र किं पुनस्त्वं महामते ।
ब्राह्मणाः पात्रभूताश्च शुद्धा नैवं पितृष्वपि ॥ [ अधिकः पाठः ]

काश्यपः—

सर्वे च वेदास्सह षड्भिरङ्गैस्
साङ्ख्यं पुराणं च कुले च जन्म ।
नैतानि सर्वाणि गतिर्भवन्ति
शीलव्यपेतस्य नृप द्विजस्य ॥ ११

अग्निः—

अधीयानः पण्डितंमन्यमानो
यो विद्यया हन्ति यशः परेषाम् ।
ब्रह्मन् स तेन लभते ब्रह्मवध्यां
लोकास्तस्य ह्यन्तवन्तो भवन्ति ॥ १२

मार्कण्डेयः—

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
[1]नाभिजानामि यज्ञं तु सत्यस्यार्धमवाप्नुयात् ॥ १३

भीष्मः—

इत्युक्त्वा ते तथा जग्मुश् चत्वारोऽमिततेजसः ।
पृथिवी काश्यपोऽग्निश्च प्रकृष्टायुश्च भार्गवः ॥ १४

युधिष्ठिरः—

यदिदं ब्राह्मणा लोके व्रतिनो भुञ्जते हविः ।
[2]भुक्तं ब्राह्मणकामाय कथं तत् सुकृतं भवेत् ॥ १५

---

1. क-च—अभिजानामि
2. क—भक्तं च—भक्त

भीष्मः—

[1]अदृष्टतो ये राजेन्द्र ब्राह्मणा वेदपारगाः ।
[2]भुञ्जते ब्रह्मकामाय व्रतलुप्ता भवन्ति वै ॥ १६

युधिष्ठिरः—

अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः ।
किं निमित्तं भवेत्तत्र तन्मे ब्रूहि पितामह ॥ १७

भीष्मः—

अहिंसा सत्यमस्तेयम् आनृशंस्यं दमश्शमः ।
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम् ॥ १८

ये तु धर्मं प्रशंसन्तश्‌ चरन्ति पृथिवीमिमाम् ।
अनाचरन्तस्तद्धर्मं [3]सङ्करानियताः प्रभोः ॥ १९

तेभ्यो रत्नं हिरण्यं वा गाश्चाश्वांश्च ददाति यः ।
दशवर्षाणि विष्ठां स भुङ्क्ते निरयमाश्रितः ॥ २०

धनेन पुल्कसानां च तथैवान्तावसायिनाम् ।
कृतं कर्माकृतं वाऽपि रागमोहेन जल्पताम् ॥ २१

वैश्वदेवं च ये मूढा विप्राय ब्रह्मचारिणे ।
न ददन्तीह राजेन्द्र ते लोकान् भुञ्जतेऽशुभान् ॥ २२

---

1. अ-क-ख—आदिष्टितो
2. घ—न भुञ्जते ब्रह्मकामा व्रतलुब्धा
3.—सङ्करे नियताः प्रभो-इतिचेत् साधीयान् त्वस्तिपाठः

युधिष्ठिरः—

किं परं ब्रह्मचर्यं स्यात् किं परं ब्रह्मलक्षणम् ।
किं च श्रेष्ठतमं शौचं तन्मे ब्रूहि पितामह ॥ २३

भीष्मः—

[1]ब्रह्मचर्यं परं तात मधुमांसस्य वर्जनम् ।
मर्यादायां स्थितो धर्मश् शमश्शौचस्य लक्षणम् ॥ २४

युधिष्ठिरः—

कस्मिन् काले चरेद्धर्मं कस्मिन् काले शमं चरेत् ।
कस्मिन् काले सुखी च स्यात् तन्मे ब्रूहि पितामह ॥ २५

भीष्मः—

काल्यमर्थं निषेवेत [2]ततो धर्ममनन्तरम् ।
पश्चात् कामं निषेवेत न च गच्छेत् ससङ्गताम् ॥ २६

ब्राह्मणान् बहु मन्येत गुरूंश्चैवाभिपूजयेत् ।
सर्वभूतानुलोमश्च मृदुशीलः प्रियंवदः ॥ २७

अधिकारो यदनृतं राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्बन्धस् समानि ब्रह्महत्यया ॥ २८

प्रहरेन्न नरेन्द्रेषु न गां हन्यान्न पीडयेत् ।
भ्रूणहत्यासमं चैतद् उभयं यो निषेवते ॥ २९

1. अ—इदमर्धचतुष्टयं नास्ति
2. अ—अयं पादोऽनन्तरश्च न स्तः

नाग्निं परित्यजेज्जातु न च [1]देवान् परित्यजेत् ।
न च ब्राह्मणमाक्रोशेत् समं तद्ब्रह्महत्यया ॥ ३०

युधिष्ठिरः—

कीदृशानां च दातव्यं केषां दत्तं महत् फलम् ।
कीदृशास्साधवो विप्रास् तन्मे ब्रूहि पितामह ॥ ३१

भीष्मः—

अक्रोधना धर्मपरास् सत्यनित्या दमे रताः ।
तादृशास्साधवो विप्रास् तेषां दत्तं महत् फलम् ॥ ३२

अमानिनस्सर्वसहा दृष्टान्ता विजितेन्द्रियाः ।
सर्वभूतहिता मैत्रास् तेभ्यो दत्तं महत् फलम् ॥ ३३

अलुब्धाश्शुचयो वैद्या ह्रीमन्तस्सत्यवादिनः ।
स्वकर्मनिरता ये च तेभ्यो दत्तं महत् फलम् ॥ ३४

साङ्गांश्च चतुरो वेदान् योऽधीते वेदपारगः ।
षड्भ्योऽनिवृत्तः कर्मभ्यो वेदस्य जपतत्परः ॥ ३५

सहस्रगुणमाप्नोति गुणार्हाय प्रदायकः ॥ ३५॥

प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः ।
तारयेत कुलं कृत्स्नं [2]एकोऽपीह द्विजर्षभः ॥ ३६॥

गामश्वं वित्तमन्नं वा तद्विधे प्रतिपादयेत् ।

1. अ-ख—वेदान्　　2. क-घ—इतः षट् पादा न सन्ति

द्रव्याणि चान्यानि तथा प्रेत्यभावे न शोचति ॥ ३७॥

तारयेत कुलं कृत्स्नं तृप्त एको द्विजोत्तमः ।
तृप्ते तृप्तास्सर्वदेवाः पितरो मुनयोऽपि च ॥ ३८॥

निशम्य च गुणोपेतान् ब्राह्मणान् साधुसम्मतान् ।
दूरादप्यानयेत् कृत्ये सर्वतश्चापि पूजयेत् ॥ ३९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[ अस्मिन्नध्याये ३९॥ श्लोकाः ]

## ॥ एकोनत्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति श्राद्धे निमन्त्रणार्हानर्हब्राह्मणलक्षणादिकथनम्॥

युधिष्ठिरः—

श्राद्धकाले च दैवे च धर्मे चापि पितामह ।
इच्छामि तत् त्वयाऽऽख्यातुं विहितं यत् सुरर्षिभिः ॥ १

भीष्मः—

दैवं पौर्वाह्णिके कुर्याद् अपराह्णे तु पैतृकम् ।
मङ्गलाचारसम्पन्नः कृतशौचः प्रयत्नवान् ॥ २

मनुष्याणां तु मध्याह्ने प्रदद्यादुपपत्तितः ।
कालहीनं च यद्दानं तद्भागं रक्षसां विदुः ॥ ३

[1]परोच्छिष्टं यत्तु कृतं परिभुक्तं च यद्भवेत् ।
दैवे पित्र्ये च सततं तद्भागं रक्षसां विदुः ॥ ४

लङ्घितं चावलीढं च कालपूर्वं च यत् कृतम् ।
रजस्वलाभिमृष्टं च तद्भागं रक्षसां विदुः ॥ ५

[2]केशकीटावपतितं क्षुतं श्वभिरवेक्षितम् ।
रुदितं चावधूतं च तद्भागं रक्षसां विदुः ॥ ६

निरोङ्कारेण यद्भुक्तं सशस्त्रेण च भारत ।
दुरात्मना च यद्भुक्तं तद्भागं रक्षसां विदुः ॥ ७

आज्याहुतिं विना चैव यत् किञ्चित् परिविष्यते ।
दुराचारैश्च यद्भुक्तं तद्भागं रक्षसां विदुः ॥ ८

ये भागा रक्षसां प्रोक्तास् त उक्ता भरतर्षभ ।
अत ऊर्ध्वं विसर्गस्य परीक्षां ब्राह्मणे शृणु ॥ ९

यावन्तः पतिताः प्रोक्ता जडोन्मत्तास्तथैव च ।
दैवे वाप्यथ वा पित्र्ये राजन्नार्हन्ति केतनम् ॥ १०

श्वित्री कुष्ठी च क्लीबश्च तथा यक्ष्महतश्च यः ।

---

1. अ—अर्धद्वयं नास्ति
2. अ—अर्धद्वयं नास्ति

अपस्मारी च यश्चापि राजन् नार्हन्ति सत्कृतिम् ॥ ११
चिकित्सका देवलका वृथा नियमधारिणः ।
सोमविक्रयिणश्चैव श्राद्धे नार्हन्ति केतनम् ॥ १२
गायका नर्तकाश्चैव प्लवका वादकास्तथा ।
दूतका यौतकाश्चैव राजन् नार्हन्ति केतनम् ॥ १३
[1]होतारो वृषलानां च वृषलाध्यापकास्तथा ।
तथा वृषलमित्राश्च वृषलान्नभुजस्तथा ॥ १४
[2]अनग्नयश्च ये विप्रा मृतनिर्यातकास्तथा ।
स्तेना मित्रद्रुहश्चैव राजन् नार्हन्ति केतनम् ॥ १५
[3]अपरिज्ञातपूर्वश्च गणपूर्वश्च भारत ।
पुत्रिकापूर्वपुत्रश्च श्राद्धे नार्हन्ति केतनम् ॥ १६
ऋणकर्ता च यो राजन् यश्च वार्धुषिको द्विजः ।
प्राणिविक्रयवृत्तिश्च राजन् नार्हन्ति केतनम् ॥ १७
अनुयोक्ता च यो विप्रो ह्यनुयुक्तश्च भारत ।
नार्हतस्तावपि श्राद्धं ब्रह्मविक्रयिकौ हि तौ ॥ १८
अग्रणीर्यः कृतः पूर्वं वर्णावरपरिग्रहः ।
ब्राह्मणस्सर्वविद्योऽपि राजन् नार्हति केतनम् ॥ १९

---

1. अ—इदमर्धद्वयं नास्ति
2. अ-क-ब—नास्त्यर्धद्वयमिदम्
3. क-ब—अर्धचतुष्टयं नास्ति

[1]स्त्रीपूर्वाः परपुत्राश्च [2]यावन्तो भरतर्षभ ।
अजपा ब्राह्मणाश्चैव श्राद्धे नार्हन्ति केतनम् ॥ २०
श्राद्धे दैवे च निर्दिष्टा ब्राह्मणा भरतर्षभ ।
दातुः प्रतिग्रहीतुश्च शृणुष्वानुग्रहं पुनः ॥ २१
चीर्णव्रता गुणैर्युक्ता भवेयुर्ये च [3]कर्शिताः ।
सावित्रीज्ञाः क्रियावन्तस् ते राजन् केतनक्षमाः ॥ २२
क्षत्रधर्माणमप्यादौ केतयेत् कुशलं पुनः ।
न त्वेव वणिजं तात श्राद्धेषु परिकल्पयेत् ॥ २३
अग्निहोत्री च यो विप्रो ग्रामयाजी च यो भवेत् ।
अस्तेनश्चातियज्ञश्च स राजन् केतनक्षमः ॥ २४
[4]अकल्कः क्रोधकल्कश्च ब्राह्मणो भरतर्षभ ।
ससंज्ञो भैक्षवृत्तिश्च स राजन् केतनक्षमः ॥ २५
अव्रती कितवस्स्तेनः प्राणिविक्रयिको वणिक् ।
सनिष्कृतिः पुनस्सोमं पीतवान् केतनक्षमः ॥ २६
आर्जयित्वा धनं पूर्वं दारुणैः [5]क्रूरकर्मभिः ।
भवेत् सर्वातिथिः पश्चात् सोऽपि केतनमर्हति ॥ २७

---

1. अ—नास्त्यर्धद्वयम्
2. ख-घ—सन्ध्योपासनवर्जिताः
3. क-घ—कर्षकाः
4. क-घ—अकल्ककोऽथ कल्कश्च
5. क-ख-घ—कृतक

ब्रह्मविक्रयनिर्दिष्टं स्त्रिया यच्चार्जितं धनम् ।
अदेयं पितृदेवेभ्यो यच्च क्लीबादुपार्जितम ॥ २८

क्रियमाणेऽ[1]पवर्गे तु यो द्विजो भरतर्षभ ।
न व्याहरति यद्युक्तं तस्याधर्मो गवानृतम् ॥ २९

श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा ।
सोमक्षयश्च मांसं च यदारण्यं युधिष्ठिर ॥ ३०

[2]मुहूर्तानां त्रयं पूर्वम् अह्नः प्रातरिति स्मृतम् ।
जपध्यानादिभिस्तस्मिन् विप्रैः कार्यं शुभव्रतम् ॥ ३१

सङ्गवाख्यं त्रिभागं तु मध्याह्नस्त्रिमुहूर्तकः ।
लौकिकं सङ्गवेऽर्थ्यं च स्नानादि ह्यथ मध्यमे ॥ ३२

चतुर्थमपराह्णं तु त्रिमुहूर्तं तु पित्र्यकम् ।
सायाह्नस्त्रिमुहूर्तं च मध्यमं कविभिस्स्मृतम् ॥ ३३

चतुर्थे त्वपराह्णाख्ये श्राद्धं कुर्यात् सदा नृप ॥ ३३॥

प्रागुदीचीमुखा विप्रास् स्युर्विश्वेदेवदक्षिणाः ।
आवितेषु सुतृप्तेषु पिण्डं दद्यात् सदक्षिणम् ॥ ३४॥

श्राद्धापवर्गे विप्रस्य दातारो वोऽस्त्विवर्तीरयेत् ।
क्षत्रियस्याप्यथो ब्रूयात् प्रीयन्तां पितरस्त्विति ॥ ३५॥

---

1. क-घ—विमर्शे तु
2. क-घ—नवार्धानि न सन्ति

अपवर्गे तु वैश्यस्य श्राद्धकर्मणि भारत ।
अक्षय्यं त्वभिधातव्यं स्वस्ति शूद्रस्य भारत ॥ ३६॥
एतदेव निरोङ्कारं शूद्रस्य तु विधीयते ॥ ३७
गोहिंसायां चतुर्भागं पूर्वं विप्रादिकेतनम् ।
वर्णावरेषु भुञ्जानं क्रमाच्छूद्रे चतुर्गुणम् ॥ ३८
नान्यत्र ब्राह्म[1]णोऽश्नीयात् पूर्वं विप्रेण केतितः ॥ ३८॥
अभोजने च दोषस्स्याद् वर्जयेच्छूद्रकेतनम् ।
शूद्रान्नरसपुष्टाङ्गो द्विजो नोर्ध्वां गतिं व्रजेत् ॥ ३९॥
अशौचिनैव चाश्नीयान्नास्तिको मानवर्जितः ।
न पूर्वं लङ्घयेल्लोभाद् एकवर्णोऽपि पार्थिव ॥ ४०॥
विप्रास्स्मृता भूमिदेवा उपकुर्वाण[2]धर्मिताः ॥ ४१
कर्मणामानुपूर्व्यं च विधिपूर्वं कृतं शृणु ॥ ४१॥
जातकर्मादिकं सर्वं त्रिषु वर्णेषु भारत ।
ब्रह्मक्षत्रेषु मन्त्रोक्ता वैश्यस्य च युधिष्ठिर ॥ ४२॥
विप्रस्य रशना मौञ्जी मौर्वी राजन्यगामिनी ।
बिल्वजा चैव वैश्यस्य धर्म एष युधिष्ठिर ॥ ४३॥
[3]पालाशो द्विजदण्डस्स्याद् अश्वत्थः क्षत्रियस्य तु ।

---

1. अ-ख-घ—णोमूयात्   2. घ—वर्जिताः
3. क-घ—अर्धद्वयं नास्ति

औदुम्बरश्च वैश्यस्य धर्म एष युधिष्ठिर ॥ ४४॥

दातुः प्रतिग्रहीतुश्च धर्माधर्माविमौ शृणु ।
ब्राह्मणस्यानृतेऽधर्मः प्रोक्तः पातकसंज्ञितः ॥ ४५॥

चतुर्गुणः क्षत्रियस्य वैश्यस्याष्टगुणस्स्मृतः ॥ ४६

नान्यत्र ब्राह्मणोऽश्नीयात् पूर्वं विप्रेण केतितः ।
अस्नातो ब्राह्मणो राजंस् तस्याधर्मोऽनृतं स्मृतम् ॥ ४७

अवेदव्रतचारित्रैस् त्रिभिर्वर्णैर्युधिष्ठिर ।
मन्त्रवत् परिविष्यन्ते तेष्वधर्मो गवानृतम् ॥* ४८

युधिष्ठिरः—

पित्र्यं वाऽप्यथ वा दैवं दीयते यत् पितामह ।
एतदिच्छाम्यहं [1]ज्ञातुं दत्तं येषु महाफलम् ॥ ४९

भीष्मः—

[2]येषां दाराः प्रतीक्षन्ते पर्जन्यमिव कर्षकाः ।
उच्छेषपरिशेषं हि तान् भोजय युधिष्ठिर ॥ ५०

चारित्रनिरता राजन् ये कृशाः कृशवृत्तयः ।
अर्थिनश्चोपगच्छन्ति तेषु दत्तं महाफलम् ॥ ५१

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिदृश्यते

1. क-घ—श्रोतुं 2. अ—इदमर्धचतुष्टयं नास्ति

तद्भक्ता[1]स्तद्धना राजंस् तद्गृहा तदपाश्रयाः ।
अर्थिनश्च भवन्त्यर्थे तेभ्यो दत्तं महाफलम् ॥ ५२

तस्करेभ्यः परेभ्यो ये [2]हृतस्वा भयदुःखिताः ।
अर्थिनो [3]भोक्तुमिच्छन्ति तेषु दत्तं महत् फलम् ॥ ५३

नित्यार्जवस्य विप्रस्य भैक्षाहारकृतात्मनः ।
साधवो यस्य भिक्षन्ति तस्य दत्तं महाफलम् ॥ ५४

व्रतिनो नियमस्थाश्च ये विप्राश्श्रुतिसम्मताः ।
तत्समाप्त्यर्थमीप्सन्ते तेषु दत्तं महत् फलम् ॥ ५५

अव्युत्क्रान्तास्स्वधर्मेषु पाषण्डसमयेषु च ।
कृशप्रा[4]णाः कृशाहारास् तेषु दत्तं महाफलम् ॥ ५६

व्रतानां पारणार्थाय [5]गुर्वर्थे यज्ञदक्षिणाम् ।
निवेशार्थं च विद्वांसस् तेषां दत्तं महाफलम् ॥ ५७

पित्रोश्च रक्षणार्थाय पुत्रदारार्थमेव वा ।
महाव्याधिविमोक्षाय तेषु दत्तं महाफलम् ॥ ५८

बालास्स्त्रियश्च वाञ्छन्ति सुभक्तं चाप्यसाधनाः ।
स्वर्गमायान्ति दत्त्वैषां निरयान् नोपयान्ति ते ॥ ५९

---

1. क-घ—स्तद्भवा राजंस् तज्जनास्तद

2. क-घ—जातास्तु

3. क-घ—हातु

4. क-घ—पाशाः

5. क-घ—इतः चत्वारः पादा न सन्ति

महानेष विधिर्दाने श्रुतस्ते भरतर्षभ ।
निरयं ये तु गच्छन्ति स्वर्गं चावहितश्शृणु ॥ ६०

गुर्वर्थे [1]भवनार्थं वा वर्जयित्वा युधिष्ठिर ।
येऽनृतं कथयन्त्यन्ये ते वै निरयगामिनः ॥ ६१

[2]परदाराभिहर्तारः परदाराभिमर्शकाः ।
परदारप्रयोक्तारस् ते वै निरयगामिनः ॥ ६२

ये परस्वापहर्तारः परस्वानां च नाशकाः ।
सूचकाश्च परेषां ये ते वै निरयगामिनः ॥ ६३

प्रपाणां च सभानां च सङ्क्रमाणां च भारत ।
आश्रमाणां च भेत्तारो नरा निरयगामिनः ॥ ६४

शूलैर्वा शङ्कुभिर्वाऽपि श्वभ्रैर्वा भरतर्षभ ।
ये मार्गमवरुन्धन्ति ते वै निरयगामिनः ॥ ६५

उपाध्यायांश्च भृत्यांश्च रक्तांश्च भरतर्षभ ।
ये त्यजन्ति समर्थास्तांस् ते वै निरयागामिनः ॥ ६६

वृत्तिच्छेदं गृहच्छेदं दारच्छेदं च भारत ।
मन्त्रच्छेदं तथाऽऽशायास् ते वै निरयगामिनः ॥ ६७

वेदविक्रयिणश्चैव वेदानां चैव दूषकाः ।

1. क—हवना
2. अ-क-ख—नास्त्यर्धचतुष्टयम्

[1]लेखिनश्चैव वेदानां ते वै निरयगामिनः ॥ ६८

अप्राप्तदण्डकाश्चैव नासानां वेधकास्तथा ।
वधकाश्च पशूनां च ते वै निरयगामिनः ॥ ६९

क्षान्तान् दान्तांस्तथा प्राज्ञान् दीर्घकालं सहोषितान् ।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ॥ ७०

सूचकास्सन्धिभेत्तारः परवृत्त्युपजीविनः ।
अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ॥ ७१

अनाथां प्रमदां बालां वृद्धां भीतां तपस्विनीम् ।
वञ्चयन्ति नरा ये च ते वै निरयगामिनः ॥ ७२

[2]पाषण्डा दूषकाश्चैव समयानां च दूषकाः ।
ये प्रत्यवसिताश्चैव ते वै निरयगामिनः ॥ ७३

विषमव्यवहाराश्च विषमाश्चैव वृद्धिषु ।
लाभेषु विषमाश्चैव ते वै निरयगामिनः ॥ ७४

द्यूतसंव्यवहाराश्च निष्परीक्षाश्च मानवाः ।
प्राणिहिंसाप्रवृत्ताश्च ते वै निरयगामिनः ॥ ७५

कृताशं कृतनिर्देशं कृतभक्तं कृतश्रमम् ।
भेदैर्ये व्यपकर्षन्ति ते वै निरयगामिनः ॥ ७६

---

1. ख-घ—इदमर्धं नास्ति
2. अ—अर्धाष्टकं नास्ति

पर्यश्नन्ति च ये दाराञ् शिशून् [1]भृत्यातिथींस्तथा ।
उत्सन्नपितृदेवेज्यास् ते वै निरयगामिनः ॥ ७७

स्ववर्णाश्रमबाह्याश्च [2]ये लोके नास्तिका नराः ।
[3]विकर्मभिश्च जीवन्ति ते वै निरयगामिनः ॥ ७८

केशविक्रयिणो राजन् विषविक्रयिणस्तथा ।
क्षीरविक्रयिकाश्चैव ते वै निरयगामिनः ॥ ७९

ब्राह्मणानां गवां चैव कन्यानां च युधिष्ठिर ।
[4]येऽन्तरा यान्ति कार्येषु ते वै निरयगामिनः ॥ ८०

शस्त्रविक्रयिकाश्चैव कर्तारश्च युधिष्ठिर ।
शल्यानां धनुषां चैव नरा निरयगामिनः ॥ ८१

शिलाभिश्शङ्कुभिर्वाऽपि श्वभ्रैर्वा भरतर्षभ ।
ये मार्गमुपरुन्धन्ति ते वै निरयगामिनः ॥ ८२

अगोप्तारः फलद्रव्यं बलिषड्भागतत्पराः ।
सन्निन्दकाश्च राजेन्द्र ते वै निरयगामिनः ॥ ८३

[5]संश्रुत्य चाप्रदातारो दरिद्राणां विनिन्दकाः ।

---

1. क-घ—भृत्यान् द्विजांस्तथा।
2. क-घ—श्रुतिबाह्याश्च ये नराः
3. ख—अर्धपञ्चकं नास्ति
4. क-घ—ये नरा यान्त्यकामेषु
5. क-घ—इदमर्धं नास्ति

श्रोत्रियाणां विनीतानां दरिद्राणां विशेषतः ॥ ८४
क्षमिणां निन्दकाश्चैव ते वै निरयगामिनः ॥ ८४॥
एते पूर्वर्षिभिर्दृष्टाः प्रोक्ता निरयगामिनः ॥ ८५
शुश्रूषाभिस्तपोभिश्च श्रुतमादाय भारत ।
ये प्रतिग्रहनिस्स्नेहास् ते नरास्स्वर्गगामिनः ॥ ८६
मातरं पितरं चैव शुश्रूषन्ति जितेन्द्रियाः ।
भ्रातॄणां चैव सस्नेहास् ते नरास्स्वर्गगामिनः ॥ ८७
आढ्याश्च बलवन्तश्च यौवनस्थाश्च भारत ।
ये वै जितेन्द्रिया धीरास् ते नरास्स्वर्गगामिनः ॥ ८८
भयात् पापात्तथा बाधाद् दारिद्र्याद्व्याधिकर्षणात् ।
तत्कृते धनमीप्सन्तस् ते नरास्स्वर्गगामिनः ॥ ८९
क्षमावन्तश्च धीराश्च धर्मकार्येषु चोदिताः ।
मङ्गलाचारयुक्ताश्च पुरुषास्स्वर्गभागिनः ॥ ९०
निवृत्ता मधुमांसेभ्यः परदारेभ्य एव च ।
निवृत्ताश्चैव मद्येभ्यस् ते नरास्स्वर्गगामिनः ॥ ९१
[1]आश्रमाणां च भर्तारः कुलानां चैव भारत ।
देशानां नगराणां च ते नरास्स्वर्गभागिनः ॥ ९२
वस्त्राभरणदातारो भक्ष्यपानान्नदास्तथा ।

1. ख—अर्धषट्कं नास्ति

कुटुम्बानां च भर्तारस् ते नरास्स्वर्गगामिनः ॥ ९३

सर्वहिंसानिवृत्ताश्च नरास्सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नरास्स्वर्गगामिनः ॥ ९४

अवरुद्धेषु सस्नेहा मृदवो मित्रवत्सलाः ।
अपराधसहाश्चैव ते नरास्स्वर्गभागिनः ॥ ९५

सहस्रपरिवेष्टारस् तथैव च सहस्रदाः ।
त्रातारश्च सहस्राणां पुरुषास्स्वर्गभागिनः ॥ ९६

सुवर्णस्य च दातारो गवां च भरतर्षभ ।
यानानां वाहनानां च ते नरास्स्वर्गभागिनः ॥ ९७

[1]वैवाहिकानां कन्यानां प्रेष्याणां भरतर्षभ ।
दातारो वाससां चैव ते नरास्स्वर्गभागिनः ॥ ९८

विहारावसथोद्यानकूपारामसभाप्रदाः ।
प्रपाणां चैव कर्तारस् ते नरास्स्वर्गभागिनः ॥ ९९

[2]निवेशनानां क्षेत्राणां वसतीनां च भारत ।
[3]दातारश्चतुराणां च ते नरास्स्वर्गभागिनः ॥ १००

रसानां चाथ बीजानां धान्यानां च युधिष्ठिर ।

---

1. अ—इदमर्धद्वयं नास्ति
2. अ—इदमर्धचतुष्टयं नास्ति
3 ख—दातारश्च कृशानां च रक्षकास्स्वर्ग

स्वयमुत्पाद्य दातारस् ते नरास्स्वर्गभागिनः ॥ ॥ १०१

यस्मिन् कस्मिन् कुले जाता बहुपुत्राश्शतायुषः ।
सानुक्रोशा जितक्रोधाः पुरुषास्स्वर्गभागिनः ॥ १०२

एतदुक्तममुत्रार्थं दैवं पित्र्यं च भारत ।
धर्माधर्मौ वदान्यस्य यथा पूर्वर्षिभिः कृतौ ॥ १०३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
[ अस्मिन्नध्याये १०३ श्लोकाः ]

---

## ॥ त्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति हिंसाभावेऽपि ब्रह्महत्याप्राप्तिप्रतिपादकव्यासवचनानुवादः ॥

---

युधिष्ठिरः—

इदं मे तत्त्वतो राजन् वक्तुमर्हसि भारत ।
अहिंसयित्वा केनेह ब्रह्महत्या विधीयते ॥ १

भीष्मः—

व्यासमामन्त्र्य राजेन्द्र पुरा यत् पृष्टवानहम् ।
तत्तेऽहं सम्प्रवक्ष्यामि तदिहैकमनाश्शृणु ॥ २

चतुर्थस्त्वं वसिष्ठस्य तत्त्वमाख्याहि मे मुने ।
अहिंसयित्वा केनेह ब्रह्महत्या विधीयते ॥ ३

इति पृष्टो महाराज पराशरशरीरजः ।
अब्रवीन्निपुणो धर्मे निस्संशयमनुत्तमम् ॥ ४

व्यासः—

ब्राह्मणं स्वयमाहूय भैक्षार्थे कृशवृत्तिनम् ।
ब्रूयान्नास्तीति यः पश्चात् तं विद्याद्ब्रह्मघातकम् ॥ ५

मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत ।
वृत्तिं हरति दुर्बुद्धिस् तं विद्याद्ब्रह्मघातिनम् ॥ ६

गोकुलस्य तृषार्तस्य जलार्थमभिधावतः ।
उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातिनम् ॥ ७

यः प्रवृत्तां श्रुतिं सम्यक् शास्त्रं वा मुनिभिः कृतम् ।
[1]दूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातिनम् ॥ ८

[2]जातितो ब्राह्मणानां हि महापरिभवात्तथा ।
तद्वृत्तिच्छेदनाच्चैव तद्दारपरिभावनात् ॥ ९

आत्मजां रूपसम्पन्नां बृहतीं सदृशे वरे ।
न प्रयच्छति यः कन्यां तं विद्याद्ब्रह्मघातकम् ॥ १०

अधर्मनिरतो मूढो मिथ्या यो वै द्विजातिषु ।

1. अ—इदमर्धं नास्ति 2. क-ख—इदमर्धद्वयं नास्ति

दद्यान्मर्मातिगं शोकं तं विद्याद्ब्रह्मघातिनम् ॥ ११

चक्षुषा विप्रहीणस्य पङ्गोरथ जडस्य वा ।
हरेत यश्च वित्तानि तं विद्याद्ब्रह्मघातिनम् ॥ १२

आश्रमे वा वने वा यो ग्रामे वा यदि वा पुरे ।
अग्निं समुत्सृजेत् क्रोधान तं विद्याद्ब्रह्मघातिनम् ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[ अस्मिन्नध्याये १३ श्लोकाः ]

## ॥ एकत्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति नद्यादितीर्थानां तत्तन्नामविशेषनिर्देशेन तत्सेवनफलप्रतिपादकगीतमाङ्गिरस्संवादानुवादः ॥

युधिष्ठिरः—

तीर्थानां दर्शनं श्रेयस् स्नानं च भरतर्षभ ।
श्रवणं च महाप्राज्ञ श्रोतुमिच्छामि तत्त्वतः ॥ १

पृथिव्यां यानि तीर्थानि पुण्यानि भरतर्षभ ।
वक्तुमर्हसि मे तात श्रोतास्मि नियतः प्रभो ॥ २

भीष्मः—

इममङ्गिरसा प्रोक्तं तीर्थवंशं महा[1]मते ।
श्रोतुमर्हसि धर्मज्ञ प्राप्स्यसे धर्ममुत्तमम् ॥ ३
तपोवनगतं विप्रम् अभिवाद्य महामुनिम् ।
पप्रच्छाङ्गिरसं वीर गौतमस्संशितव्रतम् ॥ ४

गौतमः—

अस्ति मे भगवन् कश्चिन् तीर्थेभ्यो धर्मसंशयः ।
तन् सर्वं श्रोतुमिच्छामि तन्मे शंस महामुने ॥ ५
उपस्पृश्य फलं किं स्यात् केषु तीर्थेषु वै मुने ।
प्रेत्यभावे महाप्राज्ञ तद्यथाऽस्ति तथा वद ॥ ६

अङ्गिराः—

सप्ताहं चन्द्रभागां वै वितस्तामूर्मिमालिनीम् ।
विगाह्य वै निराहारो निर्मलो मुनिवद्भवेत् ॥ ७
काश्मीरमण्डले नद्यो याः पतन्ति महास्वनम् ।
ता नदीस्सिन्धुमासाद्य शीलवान् स्वर्गमाप्नुयात् ॥ ८
पुष्करं च प्रभासं च नैमिशं सागरोदकम् ।
देविकामिन्द्रमार्गं च स्वर्गबिन्दुं विगाह्य च ॥ ९
विबुध्यते विमानस्थस् सोऽप्सरोभिरभिष्टुतः ॥ ९॥
हिरण्य[2]बिन्दुमालक्ष्य प्रयतश्चाभिवाद्य तम् ।

1. क-घ—द्युते 2. क-घ—बिन्दुंप्रक्षोभ्य

कुशेशये च देवत्वं पूयते तस्य किल्बिषम् ॥ १०॥
इन्द्रतोयां समासाद्य गन्धमादनसन्निधौ ।
करतोयां कुरङ्गेषु त्रिरात्रोपोषितो नरः ॥ ११॥
अश्वमेधमवाप्नोति विगाह्य नियतश्शुचिः ॥ १२
गङ्गाद्वारे कुशावर्ते बिल्वके कुलपर्वते ।
ततः कनखले स्नात्वा धूतपाप्मा दिवं व्रजेत् ॥ १३
अपांह्रदमुपस्पृश्य वाजपेयफलं लभेत् ।
ब्रह्मचारी जितक्रोधस् सत्यसन्धस्त्वहिंसकः ॥ १४
यत्र भागीरथी गङ्गा वहते दिशमुत्तराम ।
महेश्वरस्य निष्ठाने यो नरस्त्वभिषिच्यते ॥ १५
एकमासं निराहारस् स्वयं पश्यति देवताः ।
सप्तगङ्गेति गङ्गेति चन्द्रमार्गेति तर्पयेत् ॥ १६
अर्थान् वै लभते तत्र भोक्तुं योऽभिलषेन्नरः ॥ १६॥
बिम्बाश्रममुपस्पृश्य [1]योऽग्निहोत्रपरश्शुचिः ।
एकमासं निराहारस् सिद्धिं मासेन स व्रजेत् ॥ १७॥
महाह्रदमुपस्पृश्य भृगुतुन्दमलोलुपः ।
त्रिरात्रोपोषितो भूत्वा मुच्यते ब्रह्महत्यया ॥ १८॥
कन्याहोत्रमुपस्पृश्य योऽग्निहोत्रपरश्शुचिः ।

1. ख—इतः अर्धपद्द्कं नास्ति

देवेषु कीर्तिं लभते यशसा च विराजते ॥ १९॥

एककालमुपस्पृश्य तथा सुन्दरिकाह्रदे ।
अश्विभ्यां रूपवर्चस्त्वं प्रेत्यासौ लभते नरः ॥ २०॥

महागङ्गामुपस्पृश्य कृत्तिकाङ्गारके तथा ।
पक्षमेकं निराहारस् स्वर्गमाप्नोति कर्मतः ॥ २१॥

वैतानिकमुपस्पृश्य कर्णिकस्याश्रमे तथा ।
निवासेऽप्सरसां दिव्ये कामचारी महीयते ॥ २२॥

कालिकाश्रममासाद्य विपाशायां कृतोदकः ।
ब्रह्मचारी जितक्रोधस् त्रिरात्रं मुच्यते भयात् ॥ २३॥

[1]आश्रमे कृत्तिकानां तु स्नात्वा यस्तर्पयेत् पितॄन् ।
तोषयित्वा महादेवं निर्मलस्स्वर्गमाप्नुयात् ॥ २४॥

महाकूपमुपस्पृश्य त्रिरात्रोपोषितो नरः ।
[2]त्रसानां स्थावराणां च द्विपदत्वाद्भयं त्यजेत् ॥ २५॥

देवदारुवने स्नात्वा धूतपापः कृतोदकः ।
देवशब्दमवाप्नोति त्रिरात्रोपोषितो नरः ॥ २६॥

केशाब्दे तु शरस्तम्बे द्रोणशर्मपदे तथा ।
आपः प्रवर्तने सौम्य सेव्यते चाप्सरोगणैः ॥ २७॥

---

1. क-घ—आयामे
2. अ—अर्धद्वयं नास्ति

चित्रकूटे जनस्थाने तथा मन्दाकिनीजले ।
विगाह्य वै निराहारो राजलक्ष्मीं निगच्छति ॥ २८॥

श्यामायास्त्वाश्रमं गत्वा उपोष्यैवाभिषिच्य च ।
एकपक्षं निराहारो ह्यन्तर्धानफलं लभेत् ॥ २९॥

कौशिकीपारमासाद्य वायुभक्षस्त्वलोलुपः ।
एकविंशतिरात्रेण स्वर्गमारोहते नरः ॥ ३०॥

मतङ्गवाप्यां यस्स्नायाद् एकरात्रेण सिध्यति ।
विगाहितोऽप्यनालम्बे अन्वक्षं वै सनातनम् ॥ ३१॥

नैमिशे स्वर्गप्रस्थेषु उपस्पृश्य जितेन्द्रियः ।
फलं पुरुषमेधस्य लभेन्मासं कृतोदकः ॥ ३२॥

गङ्गाह्रदमुपस्पृश्य तथा चैवोत्पलावृतम् ।
[1]अर्धाश्वमेधमाप्नोति तत्र मासं कृतोदकः ॥ ३३॥

गङ्गायमुनयोर्मध्ये तीर्थे कालञ्जने गिरौ ।
दशाश्वमेधानाप्नोति तत्र मासं कृतोदकः ॥ ३४॥

षष्टिह्रदमुपस्पृश्य [2]दानं नान्यद्विशिष्यते ॥ ३५

दशतीर्थसहस्राणि तिस्रः कोट्यस्तथाऽपराः ।
समागच्छन्त्यमावास्यां प्रयागे भरतर्षभ ॥ ३६

माघमासप्रयागे तु नियतस्संशितव्रतः ।

1. क-घ—अश्वमेधमवा 2. क-घ—इतः अर्धपञ्चकं नास्ति

स्नात्वा तु भरतश्रेष्ठ निर्मलस्स्वर्गमाप्नुयात् ॥ ३७

मरुद्गण उपस्पृश्य पितॄणामाश्रमे शुचिः ।
वैवस्वते च तीर्थे च तीर्थभूतो भवेन्नरः ॥ ३८

अथ ब्रह्मशिरस्स्नात्वा भागीरथ्यां कृतोदकः ।
एकमासं निराहारस् सोमलोकमवाप्नुयात् ॥ ३९

कपोतके नरस्स्नात्वा अष्टावक्रे कृतोदकः ।
तृतीयक्रौञ्चपादे च ब्रह्महत्यां विशोधयेत् ॥ ४०

कलापिकामुपस्पृश्य वेदांश्च बहुशो जलम् ।
अग्नेः पुरे नरस्स्नात्वा विशालायां कृतोदकः ॥ ४१
[1]द्वादशाहं विशेषेण कल्मषाद्विप्रमुच्यते ॥ ४१॥

महाह्रदमुपस्पृश्य शुद्धेन मनसा नरः ।
एकमासं निराहारो जमदग्निगतिं लभेत् ॥ ४२॥

विन्ध्ये सन्ताप्य चात्मानं सत्यसन्धस्त्वहिंसकः ।
द्वादशाहं निराहारो नरमेधफलं लभेत् ॥ ४३॥

मुण्डे ब्रह्मगवां चैव [2]निरिर्चि देवपर्वतम् ।
देवह्रदमुपस्पृश्य ब्रह्मभूतो विराजते ॥ ४४॥

[3]तथा प्रवृत्तनन्दां च महानन्दां च सेवते ।

---

1. ख—अर्धसप्तकं नास्ति    2. घ—निनिचिम्
3. ख—अर्धद्वयं नास्ति

नन्दने सेव्यते दान्तस्त्वप्सरोभिरहिंसकः ॥ ४५॥

ऊर्वशीकृत्तिकायोगे कृतवासस्समाहितः ।
लौहित्ये विधिवत् स्नात्वा पौण्डरीकफलं लभेत् ॥ ४६॥

रामह्रदमुपस्पृश्य विशालायां कृतोदकः ।
एकपक्षं निराहारः कल्मषाद्विप्रमुच्यते ॥ ४७॥

कुमारपदमास्थाय मासेनैकेन शुध्यति ॥ ४८

नर्मदायामुपस्पृश्य तथा शूर्पाकरोदके ।
एकपक्षं निराहारो राजपुत्रो विधीयते ॥ ४९

जम्बूमार्गे त्रिभिर्मासैस् संयतस्सुसमाहितः ।
अहोरात्रेण चैकेन सिद्धिं समधिगच्छति ॥ ५०

कोकामुखे विगाह्यापो गत्वा तण्डुलिकाश्रमम् ।
[1]शाकभक्षश्चीरवासाः कुमार्यो विन्दते दश ॥ ५१

वैवस्वतस्य सदनं न गच्छेद्वै कदाचन ।
यस्य कन्याह्रदे वासो देवलोकं स गच्छति ॥ ५२

प्रभासे त्वेकरात्रेण अमावास्यां समाहितः ।
सिद्ध्यत्यत्र महाबाहो यो नरो जायते नरः ॥ ५३

[2]गुञ्जानदमुपस्पृश्य आर्ष्टिषेणस्य चाश्रमे ।

---

1. क-घ—एकभ
2. क-घ—भुञ्जानद

गङ्गायाश्चाश्रमे स्नात्वा सर्वपापैः प्रमुच्यते ॥ ५४
कुल्यायां समुपस्पृश्य जप्त्वा चैवाघमर्षणम् ॥
अश्वमेधमवाप्नोति त्रिरात्रोपोषितश्शुचिः ॥ ५५
पिण्डारक उपस्पृश्य त्रिरात्रोपोषितो नरः ।
[1]अग्निष्टोममवाप्नोति प्रभातां शर्वरीं शुचिः ॥ ५६
तथा ब्रह्मसरो गत्वा धर्मारण्योपशोभितम् ।
पुण्डरीकमवाप्नोति प्रभातां शर्वरीं शुचिः ॥ ५७
मैनाके पर्वते स्नात्वा तथा सन्ध्यामुपास्य च ।
कामं जित्वा च वै मोहं सर्वमेधफलं लभेत् ॥ ५८
विख्यातो हिमवान् पुण्यश् शङ्करश्वशुरो गिरिः ।
आकरस्सर्वरत्नानां सिद्धचारणसेवितः ॥ ५९
दर्शनाद्गमनात् पूतो भवेदनशनादपि ॥ ५९॥
अध्रुवं जीवितं ज्ञात्वा यो वै वेदान्तगो द्विजः ।
अभ्यर्च्य देवांस्तत्रस्थो नमस्कृत्य मुनींस्तथा ॥ ६०॥
[2]ततस्सिद्धो मुनिर्गच्छेद् ब्रह्मलोकं सनातनम् ॥ ६१
कामं क्रोधं च लोभं च यो जित्वा तीर्थमावसेत् ।
न तेन किञ्चिदप्राप्यं तीर्थाभिगमनाद्भवेत् ॥ ६२

1. क-घ—अर्धचतुष्टयं नास्ति
2. व—नास्तीदमर्धम्

[1]यान्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च ।
मनसा तानि गम्यानि सर्वतीर्थे समासतः ॥ ६३

इदं मेध्यमिदं मान्यम इदं स्वर्गस्य वै मुखम् ।
इदं रहस्यं देवानाम्[2]आप्लाव्यानां च पावनम् ॥ ६४

इदं दद्याद्द्विजातीनां साधूनामात्मजस्य वा ।
सुहृदां च जपेत् कर्णे शिष्यस्यानुगतस्य वा ॥ ६५

भीष्मः—

दत्तवान् गौतमस्येदम् अङ्गिरा वै महातपाः ।
गुरुभिस्समनुज्ञातः काश्यपेन च धीमता ॥ ६६

महर्षीणामिदं जप्यं पावनानां तथोत्तमम् ।
जपंश्चाभ्युत्थितस्सम्यङ् निर्मलस्स्वर्गमाप्नुयात् ॥ ६७

य इदं चापि शृणुयाद् रहस्यं त्वङ्गिरोदितम् ।
उत्तमे च कुले जन्म लभेज्जातिं च संस्मरेत् ॥ ६८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
[ अस्मिन्नध्याये ६८ श्लोकाः ]

---

1. क-घ—प्राणिग

2. क-घ—पावनानां च पावनम्

## ॥ द्वात्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गङ्गामहिमप्रतिपादकसिद्धशिलवृत्तिसंवादानुवादः ॥

---

वैशम्पायनः—

बृहस्पतिसमं बुद्ध्या क्षमया ब्रह्मणस्समम् ।
पराक्रमे शक्रसमम् आदित्यसमतेजसम् ॥ १
गाङ्गेयमर्जुनेनाजौ निहतं भूरिवर्चसम् ।
भ्रातृभिस्सहितोऽन्यैश्च पर्युपासद्युधिष्ठिरः ॥ २
शयानं वीरशयने कालाकाङ्क्षिणमच्युतम् ।
आजग्मुर्भरतश्रेष्ठं द्रष्टुकामा महर्षयः ॥ ३
अत्रिर्वसिष्ठोऽथ भृगुः पुलस्त्यः पुलहः क्रतुः ।
अङ्गिरा गौतमोऽगस्त्यस् सुमतिस्स्वायुरात्मवान् ॥ ४
विश्वामित्रस्स्थूलशिरास् संवर्तः प्रतिमर्दनः ।
उशना बृहस्पतिर्व्यासश् च्यवनः काश्यपो ध्रुवः ॥ ५
[1]दुर्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः ।
भरद्वाजश्च [2]रैभ्यश्च यवक्रीतस्त्रितस्तथा ॥ ६

---

1. घ—अर्वावसुर्जमदग्निः
2. क—स्वायुश्च

स्थूलाक्षश्शकटाक्षश्च कण्वो मेधातिथिः कृतः ।
नारदः पर्वतश्चैव सुधन्वा चैकतो द्विजः ॥ ७
नितन्तुः कवषो धौम्यश्च शतानन्दोऽकृतव्रणः ।
जामदग्न्यस्तथा रामः [1]कचश्चेत्येवमादयः ॥ ८
समागता महात्मानो भीष्मं द्रष्टुं महर्षयः ॥ ८॥
तेषां महात्मनां पूजाम् आगतानां युधिष्ठिरः ।
भ्रातृभिस्सहितश्चक्रे यथावदनुपूर्वशः ॥ ९॥
ते पूजितास्समासीनाः कथाश्चक्रुर्महर्षयः ।
भीष्माश्रितास्सुमधुरास् सर्वेन्द्रियमनोहराः ॥ १०॥
भीष्मस्तेषां कथाश्श्रुत्वा ऋषीणां भावितात्मनाम् ।
मेने दिविष्ठमात्मानं तुष्ट्या परमया युतः ॥ ११॥
ततस्ते भीष्ममामन्त्र्य पाण्डवांश्च महर्षयः ।
अन्तर्धानं गतास्सर्वे सर्वेषामेव पश्यताम् ॥ १२॥
तानृषीन् सुमहाभागान् अन्तर्धानगतानपि ।
पाण्डवास्तुष्टुवुस्सर्वे प्रणेमुश्च मुहुर्मुहुः ॥ १३॥
प्रसन्नमनसस्सर्वे गाङ्गेयं कुरुसत्तमाः ।
उपतस्थुर्यथोद्यन्तम् आदित्यं मन्त्रकोविदाः ॥ १४॥
प्रभावं तपसस्तेषाम् ऋषीणां वीक्ष्य पाण्डवाः ।

1. ख—कण्व

प्रकाशन्तो दिशस्सर्वा विस्मयं परमं ययुः ॥ १५॥

महाभाग्यं परं तेषाम् ऋषीणामनुचिन्त्य ते ।
पाण्डवास्सह भीष्मेण कथाश्चक्रुस्तदाश्रयाः ॥ १६॥

कथान्ते शिरसा स्पृष्ट्वा पादौ भीष्मस्य धीमतः ।
धर्म्यं धर्मसुतः प्रश्नं पर्यपृच्छद्युधिष्ठिरः ॥ १७॥

के देशाः के जनपदाः केऽऽश्रमाः के च पर्वताः ।
प्रकृष्टाः पुण्यदाः कास्स्विद् याश्च नद्यस्तदुच्यताम् ॥ १८॥

भीष्मः—

[1]अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
सिलोञ्छवृत्तेस्संवादं सिद्धस्य च युधिष्ठिर ॥ १९॥

इह कश्चित् परिक्रम्य पृथिवीं शैलभूषिताम् ।
असकृद्द्विपदां श्रेष्ठश् श्रेष्ठस्य गृहमेधिनः ॥ २०॥

सिलवृत्तेर्गृहं प्राप्तस् स तेन विधिनाऽर्चितः ।
कृतकृत्य उपातिष्ठत् सिद्धं तमतिथिं गृही ॥ २१॥

तौ समेत्य महात्मानौ सुखासीनौ कथाश्शुभाः ।
चक्रतुर्वेदसम्बद्धास् तच्छीलकृतलक्षणाः ॥ २२॥

सिलवृत्तिः कथान्ते तु सिद्धमामन्त्र्य भारत ।
प्रश्नं पप्रच्छ मेधावी यन्मां त्वं परिपृच्छसि ॥ २३॥

1. अ—इदमर्धं नास्ति

शिलोञ्छवृत्तिः—

के देशाः के जनपदाः केऽऽश्रमाः के च पर्वताः ।
प्रकृष्टाः पुण्यतः कास्विज् ज्ञेया नद्यस्तदुच्यताम् ॥ २४॥

सिद्धः—

ते देशास्ते जनपदास् तेऽऽश्रमास्ते च पर्वताः ।
येषां भागीरथी गङ्गा मध्येनैति सरिद्वरा ॥ २५॥

तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः ।
गतिं तां न लभेद्राजन् गङ्गां संसेव्य यां लभेत् ॥ २६॥

स्पृष्टानि येषां गाङ्गेयैस् तोयैर्गात्राणि देहिनाम् ।
त्यक्तानि यानि वै येषां त्यागात् स्वर्गो विधीयते ॥ २७॥

ये वा यथाविधि स्नाता गङ्गायां सावमर्षणाः ।
गां त्यक्त्वा मानवा विप्रा दिवि तिष्ठन्ति तेऽचलाः ॥ २८॥

पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः ।
पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्ति परां गतिम् ॥ २९॥

युक्ताश्च पातकैस्त्यक्त्वा देहं शुद्धा भवन्ति ते ।
मुच्यन्ते देहसन्त्यागाद् गङ्गायमुनसङ्गमे ॥ ३०॥

स्नातानां प्रयतैस्तोयैर् गाङ्गेयैः प्रयतात्मनाम् ।
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥ ३१॥

यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति ।

तावद्वर्षसहस्राणि स्वर्गे प्राप्य महीयते ॥ ३२॥

अपहृत्य तमस्तीव्रं यथा भात्युदये रविः ।
तथाऽपहृत्य पाप्मानं भाति गङ्गाजलोक्षितः ॥ ३३॥

विसोमा इव शर्वर्यो विपुष्पास्तरवो यथा ।
तद्वद्देशा दिशश्चैव हीना गङ्गाजलैश्शुभैः ॥ ३४॥

वर्णाश्रमा यथा सर्वे स्वधर्मा ज्ञानवर्जिताः ।
क्रतवश्च यथाऽसोमास् तथा गङ्गां विना जगत् ॥ ३५॥

यथा हीनं नभोऽर्केण भूश्शैलैः खं च वायुना ।
तथा देशा दिशश्चैव गङ्गाहीना न संशयः ॥ ३६॥

त्रिषु लोकेषु ये केचित् प्राणिनस्सर्व एव ते ।
तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गाजलैश्शुभैः ॥ ३७॥

अन्ये च देवा मुनयः प्रेतानि पितृभिस्सह ।
तर्पितास्तृप्तिमायान्ति त्रिषु लोकेषु सर्वशः ॥ ३८॥

यथा सूर्यांशुनिष्टप्तं गाङ्गेयं पिबते जलम् ।
गवां नीहारनिर्वृत्ताद् यावकात्तद्विशिष्यते ॥ ३९॥

इन्दुव्रतसहस्रं तु चरेद्यः कायशोधनम् ।
पिबेद्यश्चापि गङ्गाम्भस् समौ स्यातां न वा समौ ॥ ४०॥

[1]तिष्ठेद्युगसहस्रं तु पदेनैकेन यः पुमान् ।

1. अ—इदमर्धद्वयं नास्ति

एकाहं वा स गङ्गायां समौ स्यातां न वा समौ ॥ ४१॥

लम्बेदवाक्शिरा यस्तु युगानामयुतं पुनः ।
[1]संवत्सरं जले वासं गङ्गायां तत्समं मतम् ॥ ४२॥

अग्नौ प्रास्तं प्रदूयेत यथा तूलं द्विजोत्तम ।
तथा गङ्गावगाढस्य सर्वपापं प्रदूयते ॥ ४३॥

भूतानामिह सर्वेषां दुःखोपहतचेतसाम् ।
[2]गतिमन्वेषमाणानां न गङ्गासदृशी गतिः ॥ ४४॥

भवन्ति निर्विषास्सर्पा यथा तार्क्ष्यस्य दर्शनात् ।
गङ्गाया दर्शनात् सद्यः पापानि त्रिविधानि च ॥ ४५॥

अप्रतिष्ठाश्च ये केचिद् अधर्मशरणाश्च ये ।
तेषां प्रतिष्ठा गङ्गेह शरणं शर्म वर्म च ॥ ४६॥

प्रकृष्टैरशुभैर्ग्रस्तान अनेकैः पुरुषाधमान् ।
पततो नरके गङ्गा संश्रितान् प्रेत्य तारयेत् ॥ ४७॥

ते संविभक्ता मुनिभिर् नूनं देवैस्सवासवैः ।
ये हि गच्छन्ति सततं गङ्गामभिगतां सुरैः ॥ ४८॥

विनयाचारहीनाश्चाप्यशिवाश्च नराधमाः ।
न भवन्त्यशिवा विप्रा ये वै गङ्गामुपाश्रिताः ॥ ४९॥

1. क-घ—चरेद्यथेष्टं गङ्गायां यश्चापि स विशिष्यते । [ पाठान्तरम् ]
2. क-घ—अर्धचतुष्टयं नास्ति

यथा सुराणाममृतं पितृणां च यथा स्वधा ।
यथा सुधा च नागानां तथा गङ्गाजलं नृणाम् ॥ ५०॥
उपासते यथा बाला मातरं क्षुधयाऽर्दिताः ।
श्रेयस्कामास्तथा गङ्गाम् उपासन्ति हि देहिनः ॥ ५१॥
[1]उपजीव्या यथा धेनुर् लोकानां ब्राह्ममेव वा ।
हविषां च यथा सोमस् तारणेषु यथाक्षयम् ॥ ५२॥
स्वायम्भुवं यथा स्थानं सर्वेषां श्रेष्ठमुच्यते ।
स्थानानां सरितां श्रेष्ठा गङ्गा तद्वदिहोच्यते ॥ ५३॥
यथोपजीविनां धेनुर् देवादीनां परा स्मृता ।
तथोपजीविनां गङ्गा सर्वप्राणभृतामिह ॥ ५४॥
देवास्सोमार्कसंस्थाभिर् यथा सङ्ख्यादिभिर्मखैः ।
अमृतान्युपजीवन्ति तथा गङ्गाजलं नराः ॥ ५५॥
जाह्नवीपुलिनोत्थाभिस् सिकताभिस्समुक्षितम् ।
मन्यते पुरुषोऽऽत्मानं दिविष्ठमिव शोभितम् ॥ ५६॥
जाह्नवीतीरसम्भूतां मृदं मूर्ध्ना बिभर्ति यः ।
बिभर्ति रूपं सोऽर्कस्य तमोनाशात् सुनिर्मलम् ॥ ५७॥
गङ्गोर्मिभिरथो दिग्धः पुरुषं पवनो यदा ।
स्पृशते सोऽपि तेनाघं सद्य एवाभिमार्जति ॥ ५८॥

---

1. क-घ—इदमर्धद्वयं नास्ति

व्यसनैरभितप्तस्य नरस्य विनशिष्यतः ।
गङ्गादर्शनजा प्रीतिर् व्यसनान्यपमार्जति ॥ ५९॥

[1]हंसकारण्डवातालैर् नादैरन्यैश्च पक्षिणाम् ।
पस्पर्ध गङ्गा गन्धर्वान् पुलिनैश्च शिलोच्चयान् ॥ ६०॥

हंसादिभिस्सुबहुभिर् विविधैः पक्षिभिर्वृताम् ।
गङ्गां गोकुलसम्पन्नां दृष्ट्वा स्वर्गोऽपि विस्मृतः ॥ ६१॥

न सा प्रीतिर्दिविष्ठस्य सर्वकामानुपाश्नतः ।
अभवद्या परा प्रीतिर् गङ्गायाः पुलिने नृणाम् ॥ ६२॥

वाङ्मनःकायजैर्ग्रस्तः पापैरपि पुमानिह ।
वीक्ष्य गङ्गां भवेत् पूतस् तत्र मे नास्ति संशयः ॥ ६३॥

सप्तावरान् सप्त परान पितॄंस्तेभ्यश्च ये परे ।
सर्वांस्तारयते गङ्गां वीक्ष्य स्पृश्यावगाह्य च ॥ ६४॥

श्रुताऽभिलषिता दृष्टा स्पृष्टा पीताऽवगाहिता ।
गङ्गा तारयते नृणाम् उभौ वंशौ विशेषतः ॥ ६५॥

[2]तत्तीरगानां तपसा श्राद्धपारायणादिभिः ।
गङ्गाद्वारप्रभृतिभिस् तत्तीर्थैर्न परं नृणाम् ॥ ६६॥

सायं प्रातस्स्मरेद्गङ्गां नित्यं स्नाने तु कीर्तयेत् ।

---

1. क-घ—भास
2. क-घ—अर्धचतुष्टयं नास्ति

तर्पणे पितृपूजासु मरणे चापि संस्मरेत् ॥ ६७॥

दर्शनात् स्पर्शनात् पानात् तथा गङ्गेति कीर्तनात् ।
पुनात्यपुण्यान् पुरुषाञ् शतशोऽथ सहस्रशः ॥ ६८॥

य इच्छेत् सफलं जन्म जीवितं श्रुतमेव च ।
स पितॄंस्तर्पयेद्गङ्गाम् अभिगम्य सुरांस्तथा ॥ ६९॥

न श्रुतेन च वृत्तेन कर्मणा न च तत् फलम् ।
प्राप्नुयात् पुरुषोऽत्यन्तं गङ्गां प्राप्य यदाप्नुयात् ॥ ७०॥

जात्यन्धैरेव तुल्यास्ते नराः पङ्गुभिरेव च ।
समर्था ये न पश्यन्ति गङ्गां पुण्यजलाशयाम् ॥ ७१॥

भूतभव्यभविष्यज्ञैर् महर्षिभिरुपस्थिताम् ।
देवैस्सेन्द्रैश्च को गङ्गां नोपसेवेत मानवः ॥ ७२॥

वानप्रस्थैर्गृहस्थैश्च यतिभिर्ब्रह्मचारिभिः ।
विद्यावद्भिश्श्रितां गङ्गां पुमान् को नाम नाश्रयेत् ॥ ७३॥

उत्क्रामद्भिश्च यः प्राणैः प्रयतश्शिष्टसम्मतैः ।
चिन्तयेन्मनसा गङ्गां स गतिं परमां लभेत् ॥ ७४॥

न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः ।
आदेहपतनाद्गङ्गाम् उपास्ते यः पुमानिह ॥ ७५॥

गगनाद्यां पतन्तीं वै महापुण्यां महेश्वरः ।

दधार शिरसा देवीं तामेव दिवि देवताः ॥ ७६॥

अलङ्कृतास्त्रयो लोकाः पथिभिर्विमलैस्थिताः ॥ ७७

यस्तु तस्या जलं सेवेत् कृतकृत्यः पुमानिह ।

दिवि ज्योतिंष्विवादित्यः पितृणामिव चन्द्रमाः ॥ ७८

नरेन्द्रश्च यथा नृणां गङ्गेह सरितां वरा ॥ ७८॥

मातापितृसुतैर्दारैर् वियुक्तस्य धनेन वा ।

न भवेत् तु तथा दुःखं यथा गङ्गावियोगतः ॥ ७९॥

न पुण्यैर्नेष्टविषयैर् न धनैर्न सुतागमैः ।

तथा प्रसादो भवति गङ्गां वीक्ष्य यथा नृणाम् ॥ ८०॥

पूर्णमिन्दुं यथा दृष्ट्वा नृणां बुद्धिः प्रसीदति ।

[1]गङ्गां त्रिपथगां दृष्ट्वा तथा दृष्टिः प्रसीदति ॥ ८१॥

तन्नित्यस्तद्गतमनास् तन्निष्ठस्तत्परायणः ।

गङ्गां योऽनुगतो वीक्ष्य स तस्याः प्रियतां व्रजेत् ॥ ८२॥

भूस्थैस्खस्थैर्दिविष्ठैश्च भूतैरुच्चावचैरपि ।

गङ्गा विगाह्या सततम् एतत् कार्यतमं मतम् ॥ ८३॥

त्रिषु लोकेषु [2]पुण्यत्वाद् गङ्गायाः प्रथितं यशः ॥ ८४

---

1. क-घ—इदमर्धं नास्ति

2. क-घ—वन्द्यत्वात + प्रथितम्

दुर्मृताननपत्यांश्च सा मृताननयद्दिवम् ॥

[1]या पुत्रान् सगरस्यैतान् भस्माख्याननयद्दिवम् ॥ ८५

वातेरिताभिस्सुमनोरमाभिर्
द्रुताभिरत्यर्थसमुच्छ्रिताभिः ।
गङ्गोर्मिभिर्भानुमतीभिरिद्धास्
सहस्ररश्मिप्रतिमा विभान्ति ॥ ८६

पयस्विनीं ह्लादिनीमत्युदारां
संवर्धिनीं वेगिनीं दुर्विपह्याम् ।
गङ्गां गत्वा यैश्शरीरं विसृष्टं
गता वीरास्ते विबुधैस्समत्वम ॥ ८७

अन्धाञ् जडान द्रव्यहीनांश्च गङ्गा
पयस्विनी बृहती विश्वरूपा ।
देवैस्सेन्द्रैर्मुनिभिर्दानवैश्च
निषेविता सर्वकामैर्युनक्ति ॥ ८८

ऊर्जस्वतीं मधुमतीं महापुण्यां त्रिवर्त्मिनीम् ।
त्रिलोकगोप्त्रीं ये गङ्गां संश्रितास्त्रिदिवं गताः ॥ ८९

यो योक्ष्यते द्रक्ष्यते योऽपि मर्त्यस्
तस्मै प्रयच्छन्ति सुखानि देवाः ।

1. ब—नास्तीदमर्धम्

तद्भावितस्पर्शनदर्शने च
तस्मै देवा गतिमिष्टां दिशन्ति ॥ ९०
दक्षां पृथ्वीं बृहतीं विप्रकृष्टां
शिवामृतां सुरसां सुप्रसन्नाम् ।
विभावरीं सर्वभूतप्रतिष्ठां
गङ्गां गता ये त्रिदिवं गतास्ते ॥ ९१
ख्यातिर्यस्याः खं दिवं गां च नित्याम्
ऊर्ध्वं दिशो विदिशश्चाधितिष्ठेत् ।
तस्या जलं सेव्य सरिद्वराया
मर्त्यास्सर्वे कृतकृत्या भवन्ति ॥ ९२
इयं गङ्गेति नियता प्रतिष्ठा
गुह्यस्य रुद्रस्य च गर्भयोगा ।
प्रातस्त्रिमार्गेषु कृतावगाहा
[1]पापापहा पापिनां विश्वभोक्त्री ॥ ९३
नारायणादक्षयात् पूर्वजाता
विष्णोः पादाच्छिशुमाराद्भुवाच्च ।
सोमात् सूर्यान्मेरुरूपाच्च विष्णोस्
समागता शिवमूर्ध्नो हिमाद्रिम् ॥ ९४

1. क-च—विपाप्मानां वितता विश्वभोक्त्रा
ख—पाप्मापहा पापिनां विश्वभोक्त्रा

सत्यावर्ता द्रव्यपरस्य वर्या
दिवो भुवश्चापि रक्ष्यानुरूपा ॥
[1]भव्या पृथिव्यां पावनी भाति ब्रह्मन्
गङ्गा लोकानां पुण्यदा वै त्रयाणाम् ॥ १५

मधुप्रवाहा धृतरागोद्धताभिर्
महोर्मिभिश्शोधिता ब्राह्मणैश्च ।
दिवश्च्युता विधृता या भवेन
गङ्गाऽभिमान्या त्रिदिवस्य मान्या ॥ १६

योनिर्वरिष्ठा विरजा वितन्वी
पुष्पापहा परिवाहा यशोदा ।
विश्वाकृती चाकृतिर्गृद्धिरिद्धा
गङ्गोक्षितानां भुवनस्य पन्थाः ॥ १७

क्षान्त्या मह्याश्शोभते धारणेन
दीप्त्या कृशानोस्तपनस्य चैव ।
तुल्या गङ्गा सम्मता ब्राह्मणानां
गुहाऽस्य ब्रह्मण्यतया च नित्यम् ॥ १८

ऋषिष्टुतां विष्णुपदीं पुराणीं
सुपुण्यतोयां मनसाऽपि लोके ।

1. क-ख-घ—गव्या पृथ्व्या भावनी भाति ब्रह्मन्

सर्वात्मना जाह्नवीं ये प्रपन्नास्
ते ब्रह्मणस्सदनं सम्प्रयाताः ॥ ९९

लोकानिमान् नयति या जननीव पुत्रान्
सर्वात्मना सर्वगुणोपपन्ना ।
स्वस्थानमेभिर्हि समीप्समानैर्
गङ्गा सदैवात्मवशैरुपास्या ॥ १००

नदैर्जुष्टां रुशतीं विश्वतोयाम्
इरावज्ञां रेवतीं भूधराणाम् ।
शिष्टाश्रयाममृतां [1]पुण्यकान्तां
गङ्गां श्रयेदार्जवान् सिद्धिकामः ॥ १०१

प्रसाद्य देवान् स विभुस्समस्तान्
भगीरथस्तपसोग्रेण गङ्गाम् ।
गामानयद्यामभिगम्य शश्वन्
पुंसां भयं नेह नामुत्र विद्यात् ॥ १०२

उदाहृतस्सर्वथा ते गुणानां
मयैकदेशः प्रसमीक्ष्य बुद्ध्या ।
शक्तिर्न मे काचिदिहास्ति वक्तुं
सर्वान् गुणान् परिमातुं तथैव ॥ १०३

---

1. क-ब—ब्रह्म

[1]मेरोस्समुद्रस्य च सर्वरत्न-
सङ्ख्योदधीनामुदकस्य चैव ।
वक्तुं शक्या नेह गङ्गागुणानां
सङ्ख्यातुं वा परिमातुं तथैव ॥ १०४

तस्मादिमान् परया श्रद्धयोक्तान्
सर्वान् गुणाञ् जाह्नवीजांस्तथैव ।
भजेद्वाचा मनसा कर्मणा च
भक्त्या युक्तः परया श्रद्दधानः ॥ १०५

लोकानिमांस्त्रीन् विजित्येह सिद्धस्
सिद्धिं प्राप्तो महतीं तां दुरापाम् ।
गङ्गाकृतानचिरेणैव लोकान्
यथेष्टमिष्टान् विहरिष्यसे त्वम् ॥ १०६

तव मम च गुणैर्महानुभावा
जुषतु मतिं सततं स्वधर्मयुक्ताम् ।
अभिजनगुणवत्सला हि गङ्गा
भजति युनक्ति सुखैश्च भक्तिमन्तम् ॥ १०७

भीष्मः—

इति परमगुणाननेकभेदाञ्
सिलरतये त्रिपथाश्रयानुरूपान् ।

---

1. अ-क-ख—नास्त्यर्धद्वयमिदम्

बहुविधमनुगम्य तस्य रूपान्
गगनतलं द्युतिमान् विवेश सिद्धः ॥ १०८

सिलवृत्तिस्तु सिद्धस्य वाक्यैस्सम्भावितस्तदा ।
गङ्गामुपास्य विधिवत् सिद्धिं प्राप्तस्सुदुर्लभाम् ॥ १०९

तस्मात् त्वमपि कौन्तेय भक्त्या परमया युतः ।
गङ्गामभ्येत्य सततं प्राप्स्यसे सिद्धिमुत्तमाम् ॥ ११०

वैशम्पायनः—

श्रुत्वेतिहासं भीष्मोक्तं गङ्गायास्स्तवसंयुतम् ।
युधिष्ठिरः परां प्रीतिम् अगच्छद्भ्रातृभिस्सह ॥ १११

इतिहासमिमं पुण्यं शृणुयाच्च पठेत वा ।
गङ्गायास्स्तवसंयुक्तं स मुच्येद्व्याधिकिल्बिषैः ॥ ११२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[ अस्मिन्नध्याये ११२ श्लोकाः ]

---

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति मानवेषु पूज्यताप्रयोजकगुणप्रतिपादककृष्ण-नारदसंवादानुवादः ॥

युधिष्ठिरः—

के सम्पूज्यास्त्रिलोकेऽस्मिन मानवा भरतर्षभ ।
विस्तरेण तदाचक्ष्व न हि तृप्यामि कथ्यताम ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
नारदस्य च संवादं वासुदेवस्य चाभि भो ॥ २

नारदं प्राञ्जलिं दृष्ट्वा पूजया च द्विजर्षभम ।
केशवः परिपप्रच्छ भगवन् कान् नमस्यसि ॥ ३

बहुमानः परः केषु भवतो यान् नमस्यसि ।
शक्यं चेच्छ्रोतुमिच्छामि ब्रूहि तद्धर्मवित्तम ॥ ४

नारदः—

शृणु गोविन्द यानेतान् पूजयाम्यरिमर्दन ।
त्वत्तोऽन्यः कः पुमाँल्लोके श्रोतुमेतदिहार्हति ॥ ५

वरुणं वायुमादित्यं पर्जन्यं जातवेदसम् ।
स्थाणुं स्कन्दं महालक्ष्मीं विष्णुं ब्रह्मागमेव च ॥ ६

वाचस्पतिं चन्द्रमसम् अपः पृथ्वीं तथैव च ।
सततं ये नमस्यन्ति तान् नमस्याम्यहं प्रभो ॥ ७

तपोधनान् वेदविदो नित्यं वेदपरायणान् ।
महार्हान् वृष्णिशार्दूल सदा सम्पूजयाम्यहम् ॥ ८

अभुक्त्वा देवकार्याणि ये कुर्वन्त्यविकत्थनाः ।
सन्तुष्ट्याऽथ समायुक्तास् तान् नमस्याम्यहं विभो ॥ ९

सम्यग्ददति ये चेष्टान् क्षान्तान् दान्तान् जितेन्द्रियाः ।
सस्यं धनं क्षितिं गां च तान् नमस्यामि यादव ॥ १०

[1]ये वै तपसि वर्तन्ते वने मूलफलाशनाः ।
[2]असञ्चयाः क्रियावन्तस् तान् नमस्याम्यहं विभो ॥ ११

ये भृत्यभरणे सक्तास् सततं चातिथिव्रताः ।
भुञ्जते देवशेषाणि तान् नमस्यामि यादव ॥ १२

ये [3]वेदं प्राप्य दुर्धर्षं युवानो ब्रह्मवादिनः ।
याजनाध्यापनैर्युक्ता नित्यं तान् पूजयाम्यहम् ॥ १३

प्रसन्नहृदया ये च ब्रह्मण्यास्सत्यसङ्गराः ।
वोढारो हव्यकव्यानां तान् नमस्यामि यादव ॥ १४

---

1. क-घ—अर्धद्वयं नास्ति
2. ख—असंशयाः
3. क-घ—देवं प्राप्य दुर्धर्षं वशिनो ब्रह्मवादिनः

भैक्षमेव सदाऽश्नन्ति सदा गुरुकुलालयाः ।
निस्सुखा निर्धना ये च तान् नमस्यामि यादव ॥ १५

निर्ममा निष्प्रतिद्वन्द्वा निष्ठिता निष्प्रयोजनाः ।
अहिंसानिरता ये च तान् नमस्याम्यहं सदा ॥ १६

देवतातिथिपूजायां प्रसक्ता गृहमेधिनः ।
कपोतवृत्तयो नित्यं तान् नमस्याम्यहं सदा ॥ १७

[1]अवन्ध्यकाला येऽलुब्धास् त्रिवर्गे साधनेषु वा ।
विशिष्टाचारयुक्ताश्च [2]सन्ततं च नमामि तान् ॥ १८

अब्भक्षा वायुभक्षाश्च सुधाभक्षाश्च ये सदा ।
व्रतैश्च विविधैर्युक्तास् तान् नमस्याम्यहं सदा ॥ १९

अब्योनीनग्नियोनींश्च ब्रह्मयोनींस्तथैव च ।
सर्वभूतात्मयोनींश्च तान नमस्याम्यहं सदा ॥ २०

नित्यमेतान् नमस्यामि कृष्ण लोककरानृषीन ।
लोकज्येष्ठाञ् ज्ञाननिष्ठांस् तस्मात्ताँल्लोकभास्वरान् ॥ २१

तस्मात् त्वमपि वार्ष्णेय द्विजान् पूजय नित्यदा ।
पूजिताः पूजनार्हा हि सुखं दास्यन्ति तेऽनघ ॥ २२

अस्मिँल्लोके सदा ह्येते परत्र च सुखप्रदाः ।

1. क-च—अर्धद्वयं नास्ति
2. ख—नारायण नमामि तान्

त एते वन्द्यमाना वै प्रदास्यन्ति सुखं तव ॥ २३

ये सर्वातिथयो नित्यं गोषु च ब्राह्मणेषु च ।
नित्यं जप्येषु निरता दुर्गाण्यतितरन्त्यपि ॥ २४

तथैव विप्रप्रवरान् नमस्कृत्य यतव्रतान् ।
भवन्ति ये दानपरा दुर्गाण्यतितरन्ति ते ॥ २५

प्राप्तास्सोमाहुर्ताश्चैव दुर्गाण्यतितरन्ति ते ।
मातापित्रोर्गुरुषु च सम्यग्वर्तन्ति ये सदा ॥ २६

यथा त्वं वृष्णिशार्दूलेत्युक्त्वैव विरराम ह ।
तस्मात् त्वमपि कौन्तेय पितृदेवद्विजातिथीन ॥ २७

सम्यक् पूजय नित्यं हि गतिमिष्टामवाप्स्यसि ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

---

## ॥ चतुस्त्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणमहिमकथनम् ॥

युधिष्ठिरः—

किं राज्ञस्सर्वकृत्यानां गरीयस्स्यात् पितामह ।
किं कुर्वन् कर्म नृपतिर् उभौ लोकौ समश्नुते ॥ १

भीष्मः—

एतद्राज्ञः कृत्यतमम् अभिषिक्तस्य भारत ।
ब्राह्मणानां रक्षणं च पूजा च सुखमिच्छतः ॥ २

श्रोत्रियान् ब्राह्मणान् वृद्धान् नित्यमेवाभिपूजयेत् ।
पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान् ॥ ३

सान्त्वेन भोगदानेन नमस्कारैस्सदाऽर्चयेत् ॥ ३॥

एतत् कृत्यतमं राज्ञे नित्यमेवेति लक्षयेत् ।
यथाऽऽत्मानं यथा पुत्रांस् तथैतान् परिपालयेत् ॥ ४॥

ये चाप्येषां पूज्यतमास् तादृशान् प्रतिपूजयेत् ।
तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते ॥ ५॥

ते पूज्यास्ते नमस्कार्यास् सततं पितरो यथा ।
तेष्वेव यात्रा लोकस्य भूतानामिव वासवे ॥ ६॥

आभिचारैरुपायैश्च हरेयुर्बलतेजसी ।
निश्शेषं कुपिताः कुर्युर् उग्रास्सत्यपराक्रमाः ॥ ७॥

नान्तमेषां प्रपश्यामि न दिशश्चाप्यपावृताः ।
कुपितास्समुदीर्यन्ते दावेष्वग्निशिखा इव ॥ ८॥

बिभ्यत्येषां साहसिका गुणास्तेषामतीव हि ।
कूपा इव तृणच्छन्ना [1]निगूढा द्यौरिवाम्बुदैः ॥ ९॥

प्रसह्यकारिणः केचित् कार्पण्यमृदवोऽपरे ।
[2]मान्यास्तेषां साधवो ये न निन्द्याश्चाप्यसाधवः ॥ १०॥

सन्ति चैषामति[3]शठास् तथा चान्ये तपस्विनः ॥ ११

कृषिगोरक्षमप्यन्ये भैक्षमन्ये प्रतिष्ठिताः ।
चोराश्चान्ये भृताश्चान्ये तथाऽन्ये नटनर्तकाः ॥ १२

सर्वकर्मसु दृश्यन्ते प्रशान्तेष्वितरेषु च ।
विविधाचारयुक्ताश्च ब्राह्मणा भरतर्षभ ॥ १३

नानाकर्मसु युक्तानां बहुकर्मोपजीविनाम् ।
सर्वज्ञानां सतां ह्येषां नित्यमेवानुवर्तयेत् ॥ १४

पितृणां देवतानां च मनुष्योरगरक्षसाम् ।

1. अ-क—विशुद्धा द्यौरिवापरे
2. क-ख—नास्तीदमर्धम्
3. क-घ—शमास्तथा

पुरोहिता महाभागा ब्राह्मणा वै नराधिप ॥ १५
नैते देवैर्न पितृभिर् न गन्धर्वैर्न राक्षसैः ।
नासुरैर्न पिशाचैश्च शक्या जेतुं द्विजातयः ॥ १६
अदैवं दैवतं कुर्युर् दैवतं चाप्यदैवतम् ।
यमिच्छेयुस्स राजा स्याद् यं द्विष्युस्स पराभवेत् ॥ १७
[1]अतिवादं च ये कुर्युर् ब्राह्मणानामचेतसः ।
निन्दाप्रशंसाकुशलाः कीर्त्यकीर्तिपरायणाः ॥ १८
परिकुप्यन्ति ते राजन् सततं द्विषतां द्विजाः ॥ १८॥
ब्राह्मणा यं [2]प्रशंसन्ति पुरुषस्स प्रवर्तते ।
ब्राह्मणैर्यः पराकुष्टः पराभूयात् क्षणाद्धि सः ॥ १९॥
शका यवनकाम्भोजास् तास्ताः क्षत्रियजातयः ।
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥ २०॥
द्रमिळाश्च कलिङ्गाश्च पुलिन्दाश्चाप्युशीनराः ।
कौलास्सर्वा माहिषिकास् तास्ताः क्षत्रियजातयः ॥ २१॥
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥ २२
श्रेयान् पराजयस्तेभ्यो न जयो जयतां वर ॥ २२॥
यत्तु सर्वमिदं हन्याद् ब्राह्मणांश्च न तत्समम् ।

1. क—अपोहितं घ—अनिपातम्
2. ख-घ—प्रपश्यन्ति

ब्रह्मवध्या महान् दोष इत्याहुः परमर्षयः ॥ २३॥

परिवादो द्विजाग्र्याणां न श्रोतव्यः कथञ्चन ।
आसीताधोमुखस्तूष्णीं समुत्थाय व्रजेत वा ॥ २४॥

न स जातो जनिष्यो वा पृथिव्यामिह कश्चन ।
यो ब्राह्मणविरोधेन सुखं जीवितुमुत्सहेत् ॥ २५॥

दुर्ग्रहो मुष्टिना वायुर् अस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्जया ब्राह्मणा भुवि ॥ २६॥

ब्राह्मणानेव सुभृशं सततं परिपूजयेत् ।
एते हि सोमराजान ईश्वरास्सुखदुःखयोः ॥ २७॥

एते भोगैरलङ्कारैर् अन्यैश्चैव किमिच्छकैः ।
प्रतिपूज्या नमस्कार्या रक्ष्याश्च पितृवन्नृपैः ॥ २८॥

अतो राष्ट्रस्य शान्तिर्हि भूतानामिव वासवात् ॥ २९

ज्ञानवान् ब्रह्मवर्चस्वी राष्ट्रे यो ब्राह्मणश्शुचिः ।
महारथश्च राजन्य एष्टव्यश्शत्रुतापनः ॥ ३०

ब्राह्मणं जातिसम्पन्नं धर्मज्ञं संशितव्रतम् ।
भोजयीत गृहे राजन् न तस्मात् परमस्ति वै ॥ ३१

ब्राह्मणेभ्यो हविर्दत्तं प्रतिगृह्णन्ति देवताः ।
पितरस्सर्वभूतानां नैतेभ्यो विद्यते परम् ॥ ३२

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

आदित्यश्चन्द्रमा विष्णुश् शङ्करोऽग्निः प्रजापतिः ।
सर्वे ब्राह्मणमाविश्य सदाऽन्नमुपभुञ्जते ॥ ३३

[1]न तस्याश्नन्ति पितरो यस्य विप्रा न भुञ्जते ।
देवताश्चास्य नाश्नन्ति पापस्य ब्राह्मणद्विषः ॥ ३४

ब्राह्मणेषु सुतुष्टेषु प्रीयन्ते पितरस्सदा ।
तथैव देवता राजन् नात्र कार्या विचारणा ॥ ३५

तथैव तेऽपि प्रीयन्ते येषां भवति तद्धविः ।
न च प्रेत्य विनश्यन्ति गच्छन्ति परमां गतिम् ॥ ३६

येनैव हविषा राजन् ब्राह्मणांस्तर्पयेद्द्विजः ।
ते तेनैव तृप्यन्ते पितरो दैवतानि च ॥ ३७

ब्राह्मणो वेद तद्भूतं प्रभवन्ति यतः प्रजाः ।
यतश्चायं प्रभवति प्रेत्य यत्रापि गच्छति ॥ ३८

वेदैष मार्गं स्वर्गस्य नरकस्य तथैव च ।
आगतानागते चोभे ब्राह्मणो द्विपदां वरः ॥ ३९

ब्राह्मणो द्विपदां श्रेष्ठस् स्वधर्मं वेद मेधया ।
[2]ये नैनमनुवर्तन्ते ते न यान्ति परां गतिम् ॥ ४०

न ते प्रेत्य विनश्यन्ति गच्छन्ति परमां गतिम् ॥ ४०॥

---

1. अ-घ—इदमर्धं नास्ति
2. क-घ—ये चैन + पराभवम्

ये ब्राह्मणमुखात् प्राप्तं प्रतिगृह्णन्ति चैव हि ।
कृतात्मानो महात्मानस् ते यान्ति परमां गतिम् ॥ ४१॥

क्षत्रियाणां प्रतपतां तेजसा च बलेन च ।
ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च तपांसि च ॥ ४२॥

भृगवोऽजयंस्तालजङ्घान् नीपानाङ्गिरसोऽजयन् ।
भरद्वाजो वैतहव्यान ऐलांश्च भरतर्षभ ॥ ४३॥

चित्रायुधांश्चाप्यजयन्नेते कृष्णाजिनध्वजाः ॥ ४४

प्रक्षिप्य यश्च कुम्भ्यां वै पुरगामिनमाहरेत् ॥ ४४॥

यत् किञ्चित् कथ्यते लोके श्रूयते दृश्यतेऽपि वा ।
सर्वं तद्ब्राह्मणेष्वेव गूढोऽग्निरिव दारुषु ॥ ४५॥

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
संवादं वासुदेवस्य पृथिव्या भरतर्षभ ॥ ४६॥

श्रीभगवान्—

मातरं सर्वभूतानां पृच्छे त्वां संशयं शुभे ।
केनस्वित् कर्मणा पापं व्यपोहति नरो गृही ॥ ४७॥

पृथिवी—

ब्राह्मणानेव सेवेत सततं ह्येतदुत्तमम् ।
ब्राह्मणान् सेवमानस्य पापं सर्वं प्रयास्यति ॥ ४८॥

अतो भूरितरा कीर्तिर् अतो बुद्धिः प्रजायते ।

परेषामपरेषां च परेभ्यश्चैव ये परे ॥ ४९॥

ब्राह्मणा यं प्रशंसन्ति पुरुषस्स प्रवर्धते ।
अथ यो ब्राह्मणान् क्रुष्टः पराभवति सोऽचिरात् ॥ ५०॥

यथा महार्णवे क्षिप्त आमलोष्टो विनश्यति ।
तथा दुश्चरितं विप्रे पराभावाय कल्पते ॥ ५१॥

पश्य चन्द्रे कृतं लक्ष्म समुद्रे लवणोदकम् ।
तथा भगसहस्रेण महेन्द्रः परिचिह्नितः ॥ ५२॥

तेषामेव प्रभावेन सहस्रनयनोऽभवत् ।
शतक्रतुस्समभवत पश्य माधव यादृशम् ॥ ५३॥

इच्छन् भूतिं च कीर्तिं च [1]भोगांश्च मधुसूदन ।
ब्राह्मणानुमते तिष्ठेन् पुरुषश्शुचिरात्मवान् ॥ ५४॥

भीष्मः—

इत्येतद्वचनं श्रुत्वा मेदिन्या मधुसूदनः ।
साधु साध्विति तामुक्त्वा मेदिनीं पर्यपूजयत् ॥ ५५॥

एतां श्रुत्वोपमां पार्थ प्रयतो ब्राह्मणर्षभान् ।
सततं पूजयेथास्त्वं तत्र श्रेयोऽभिपत्स्यसे* ॥ ५६॥

जन्मनैव महाभागो ब्राह्मणो नाम जायते ।
नमस्यस्सर्वभूतानाम् अतिथिः प्रसृताग्रभुक् ॥ ५७॥

---

1. क-घ—लोकांश्च

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

सर्वेषां [1]सुखदास्तात ब्राह्मणास्सुमनोमुखाः ।
सर्वानेते हनिष्यन्ति ब्राह्मणा जातमन्यवः ॥　　५८॥

गीर्भिर्मङ्गलयुक्ताभिर् अनुध्येयुस्सुपूजिताः ॥　　५९

सर्वान् नो द्विषतस्तात ब्राह्मणा जातमन्यवः ।
गीर्भिर्दारुणयुक्ताभिर् हन्युश्चैते ह्यपूजिताः ॥　　६०

अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ।
सृष्ट्वा द्विजातीन् धाता हि यथापूर्वं समादधत् ॥　　६१

धाता—

न वोऽन्यदिह कर्तव्यं किञ्चिदूर्ध्वायनं [2]विधि ।
युक्ता गोपायत ब्रह्म श्रेयो वस्त्वस्तु शोभनम् ॥　　६२

स्वमेव कुर्वतां कर्म श्रीर्वो ब्राह्मी भविष्यति ।
ब्राह्मण्यं सर्वभूतानां प्रग्रहं च गमिष्यथ ॥　　६३

न शूद्रकर्म कर्तव्यं ब्राह्मणेन विपश्चिता ।
शौद्रं हि कुर्वतः कर्म ब्राह्मी श्रीरुपरुध्यते ॥　　६४

श्रीश्च बुद्धिश्च तेजश्च विभूतिश्च प्रतापिनी ।
[3]स्वाध्यायेनैव माहात्म्यं विमलं प्रतिपत्स्यथ ॥　　६५

हुत्वा चाहवनीयादि महाभाग्ये प्रतिष्ठिताः ।
अग्रभोज्याः प्रसूतीनां श्रिया ब्राह्म्याऽनुकल्पिताः ॥　　६६

---

1. क-घ—सुहृद　　2. अ-क-ख—विधिः
3. क-घ—सुध्यानेन

श्रद्धया परया युक्ता ह्यनभिद्रोहलब्धया ।
दमस्वाध्यायनिरतास् सर्वान् कामानवाप्स्यथ ॥ ६७

यच्चैव मानुषे लोके यच्च देवेषु किञ्चन ।
सर्वं वस्तपसा साध्यं ज्ञानेन विनयेन च ॥ ६८

युष्मत्सम्माननात् प्रीतिं पावनैः क्षत्रियाश्श्रियम् ।
अमुत्रेह समायान्ति वैश्यशूद्रादिकास्तथा ॥ ६९

अरक्षिताश्च युष्माभिर् विरुद्धा यान्ति विप्लवम् ।
युष्मत्तेजोधृता लोकास् तद्रक्षथ जगत्त्रयम् ॥ ७०

भीष्मः—

इत्येता ब्रह्मगीतास्तास् समाख्याता मया तव ।
विप्रानुकम्पार्थमिदं तेन प्रोक्तं हि धीमता ॥ ७१

भूयस्तेषां फलं मन्ये यथा राज्ञस्समुत्थितम् ।
दुरासदाश्च चण्डाश्च तपसा क्षिप्रकारिणः ॥ ७२

सन्त्येषां सिंहसत्त्वाश्च व्याघ्रसत्त्वास्तथाऽपरे ।
वराहमृगसत्त्वाश्च गजसत्त्वास्तथैव च ॥ ७३

कार्पासमृदवः केचिन् तथाऽन्ये मकरस्पृशः ।
विभाव्यभाविनः केचिन् तथा चक्षुर्हणः परे ॥ ७४

[1]विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर ॥ ७४॥

1. क-घ—इदमर्धं नास्ति

मेखला[1]द्रमिलाः काचाः पुण्ड्राः कोकाङ्गिरास्तथा ।
शौण्डिका गरदा दर्पाश् चोलाश्च कृशतस्कराः ॥ ७५॥

किराता यवनाश्चैव तास्ताः क्षत्रियजातयः ।
वृषलत्वमनुप्राप्ता ब्राह्मणानामदर्शनात् ॥ ७६॥

ब्राह्मणानां परिभवाद् असुरास्सलिलेशयाः ।
ब्राह्मणानां प्रसादाच्च देवास्स्वर्गनिवासिनः ॥ ७७॥

अशक्यं स्प्रष्टुमाकाशम् अचाल्यो हिमवान् गिरिः ।
अवार्या सेतुना गङ्गा दुर्जया ब्राह्मणा भुवि ॥ ७८॥

न ब्राह्मणविरोधेन शक्यं शास्तुं वसुन्धराम् ।
ब्राह्मणा हि महात्मानो देवानामपि देवताः ॥ ७९॥

तान् पूजयस्व सततं दानेन परिचर्यया ।
यदीच्छसि महीं भोक्तुम् इमां सागरमेखलाम् ॥ ८०॥

प्रतिग्रहेण तेजो हि विप्राणां शाम्यतेऽनघ ।
प्रतिग्रहं ये नेच्छेयुस् तेऽपि रक्ष्यास्त्वयाऽनघ ॥ ८१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
[अस्मिन्नध्याये ८१॥ श्लोकाः]

---

1 क-घ—प्रमिलाः

## ॥ पञ्चत्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणमाहात्म्यप्रतिपादकशक्रशम्बरसंवादानुवादः ॥

---

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
शक्रशम्बरसंवादं तं निबोध युधिष्ठिर ॥ १

शक्रो ह्यज्ञातरूपेण जटी भूत्वा सुदारुणः ।
विप्ररूपं समास्थाय प्रश्नं पप्रच्छ शम्बरम् ॥ २

शक्रः—

केन शम्बर रूपेण स्वजात्यानधितिष्ठसि ।
श्रेष्ठं त्वां केऽनुमन्यन्ते तन्मे ब्रूहीह पृच्छते ॥ ३

शम्बरः—

नासूयामि सदा विप्रान् ब्राह्मणं च पितामहम् ।
शास्त्राणि वदतो विप्रान् मानयामि यथासुखम् ॥ ४

श्रुत्वा च नावजानामि नापविध्यामि कर्हिचित् ।
अभ्यर्चयामि पृच्छामि पादौ गृह्णामि धीमताम् ॥ ५

ते विस्रब्धाः प्रभाषन्ते संयच्छान्ति च मां सदा ।
प्रमत्तेष्वप्रमत्तोऽस्मि सदा सुप्तेषु जागृमि ॥ ६

ते मां शास्त्रपदे सक्तं ब्रह्मवर्त्मानसूयकम् ।
समासिञ्चन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः ॥ ७

यच्च भाषन्ति ते तुष्टास् तत्तद् [1]गृह्णामि मेधया ।
समाधिमात्मनो नित्यम् अतुलामनुचिन्तयन् ॥ ८

सोऽहं वागग्र्यमृष्टानां रसानामनुलेहिनाम् ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ९

एतत् पृथिव्याममृतम् एतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखाच्छास्त्रम् इह श्रुत्वा प्रवर्तते ॥ १०

एतत् कारणमाज्ञाय दृष्ट्वा देवासुरं पुरा ।
युद्धं पिता मे हृष्टात्मा विस्मितः प्रत्यपद्यत ॥ ११

दृष्ट्वा च ब्राह्मणानां तु महिमानं महात्मनाम् ।
पर्यपृच्छत् कथमिमे सिद्धा इति निशाकरम् ॥ १२

सोमः—

ब्राह्मणास्तपसा सिद्धा दृश्यन्ते वाग्बलास्सदा ।
भुजवीर्या हि राजानो वाग्बलाश्च द्विजातयः ॥ १३

प्रवसन् वाऽप्यधीयीत बह्वीर्दुर्वसतीर्वसन् ।
निर्मन्युरपि निर्मानो यदि स्यात् समदर्शनः ॥ १४

अपि चेज्ज्ञानसम्पन्नस् सर्वान् वेदान् पितृगृहे ।

1. क-घ—गृह्णाम्यमायया

[1]मेरोस्समुद्रस्य च सर्वरत्न-
सङ्ख्योदधीनामुदकस्य चैव ।
वक्तुं शक्या नेह गङ्गागुणानां
सङ्ख्यातुं वा परिमातुं तथैव ॥ १०४

तस्मादिमान् परया श्रद्धयोक्तान्
सर्वान् गुणाञ् जाह्नवीजांस्तथैव ।
भजेद्वाचा मनसा कर्मणा च
भक्त्या युक्तः परया श्रद्दधानः ॥ १०५

लोकानिमांस्त्रीन् विजित्येह सिद्धस्
सिद्धिं प्राप्तो महतीं तां दुरापाम् ।
गङ्गाकृतानचिरेणैव लोकान्
यथेष्टमिष्टान् विहरिष्यसे त्वम् ॥ १०६

तव मम च गुणैर्महानुभावा
जुषतु मतिं सततं स्वधर्मयुक्ताम् ।
अभिजनगुणवत्सला हि गङ्गा
भजति युनक्ति सुखैश्च भक्तिमन्तम् ॥ १०७

भीष्मः—

इति परमगुणाननेकभेदाञ्
सिलरतये त्रिपथाश्रयानुरूपान् ।

---

1. अ-क-च—नास्त्यर्धद्वयमिदम्

बहुविधमनुगम्य तस्य रूपान्
गगनतलं द्युतिमान् विवेश सिद्धः ॥ १०८

सिलवृत्तिस्तु सिद्धस्य वाक्यैस्सम्भावितस्तदा ।
गङ्गामुपास्य विधिवत् सिद्धिं प्राप्तस्सुदुर्लभाम् ॥ १०९

तस्मात् त्वमपि कौन्तेय भक्त्या परमया युतः ।
गङ्गामभ्येत्य सततं प्राप्स्यसे सिद्धिमुत्तमाम् ॥ ११०

वैशम्पायनः—

श्रुत्वेतिहासं भीष्मोक्तं गङ्गायास्स्तवसंयुतम् ।
युधिष्ठिरः परां प्रीतिम् अगच्छद्भ्रातृभिस्सह ॥ १११

इतिहासमिमं पुण्यं शृणुयाच्च पठेत वा ।
गङ्गायास्स्तवसंयुक्तं स मुच्येद्व्याधिकिल्बिषैः ॥ ११२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[ अस्मिन्नध्याये ११२ श्लोकाः ]

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति मानवेषु पूज्यताप्रयोजकगुणप्रतिपादककृष्णनारदसंवादानुवादः ॥

युधिष्ठिरः—

के सम्पूज्यास्त्रिलोकेऽस्मिन मानवा भरतर्षभ ।
विस्तरेण तदाचक्ष्व न हि तृप्यामि कथ्यताम ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम इतिहासं पुरातनम् ।
नारदस्य च संवादं वासुदेवस्य चाभि भो ॥ २

नारदं प्राञ्जलिं दृष्ट्वा पूजया च द्विजर्षभम ।
केशवः परिपप्रच्छ भगवन् कान नमस्यसि ॥ ३

बहुमानः परः केषु भवतो यान् नमस्यसि ।
शक्यं चेच्छ्रोतुमिच्छामि ब्रूहि तद्धर्मवित्तम ॥ ४

नारदः—

शृणु गोविन्द यानेतान पूजयाम्यरिमर्दन ।
त्वत्तोऽन्यः कः पुमाँल्लोके श्रोतुमेतदिहार्हति ॥ ५

वरुणं वायुमादित्यं पर्जन्यं जातवेदसम ।
स्थाणुं स्कन्दं महालक्ष्मीं विष्णुं ब्रह्मागमेव च ॥ ६

वाचस्पतिं चन्द्रमसम् अपः पृथ्वीं तथैव च ।
सततं ये नमस्यन्ति तान् नमस्याम्यहं प्रभो ॥ ७

तपोधनान् वेदविदो नित्यं वेदपरायणान् ।
महार्हान् वृष्णिशार्दूल सदा सम्पूजयाम्यहम् ॥ ८

अभुक्त्वा देवकार्याणि ये कुर्वन्त्यविकत्थनाः ।
सन्तुष्ट्याऽथ समायुक्तास् तान् नमस्याम्यहं विभो ॥ ९

सम्यग्ददति ये चेष्टान् क्षान्तान् दान्तान् जितेन्द्रियाः ।
सस्यं धनं क्षितिं गां च तान् नमस्यामि यादव ॥ १०

[1]ये वै तपसि वर्तन्ते वने मूलफलाशनाः ।
[2]असञ्चयाः क्रियावन्तस् तान् नमस्याम्यहं विभो ॥ ११

ये भृत्यभरणे सक्तास् सततं चातिथिव्रताः ।
भुञ्जते देवशेषाणि तान् नमस्यामि यादव ॥ १२

ये [3]वेदं प्राप्य दुर्धर्षं युवानो ब्रह्मवादिनः ।
याजनाध्यापनैर्युक्ता नित्यं तान् पूजयाम्यहम् ॥ १३

प्रसन्नहृदया ये च ब्रह्मण्यास्सत्यसङ्गराः ।
वोढारो हव्यकव्यानां तान् नमस्यामि यादव ॥ १४

---

1. क-ख—अर्धद्वयं नास्ति
2. ख—असंशयाः
3. क-ख—देवं प्राप्य दुर्धर्षं वशिनो ब्रह्मवादिनः

भैक्ष्यमेव सदाऽश्नन्ति सदा गुरुकुलालयाः ।
निस्सुखा निर्धना ये च तान् नमस्यामि यादव ॥ १५
निर्ममा निष्प्रतिद्वन्द्वा निष्ठिता निष्प्रयोजनाः ।
अहिंसानिरता ये च तान् नमस्याम्यहं सदा ॥ १६
देवतातिथिपूजायां प्रसक्ता गृहमेधिनः ।
कपोतवृत्तयो नित्यं तान् नमस्याम्यहं सदा ॥ १७
[1]अवन्ध्यकाला येऽलुब्धास् त्रिवर्गे साधनेषु वा ।
विशिष्टाचारयुक्ताश्च [2]सन्ततं च नमामि तान् ॥ १८
अब्भक्षा वायुभक्षाश्च सुधाभक्षाश्च ये सदा ।
व्रतैश्च विविधैर्युक्तास् तान् नमस्याम्यहं सदा ॥ १९
अयोनीनग्नियोनींश्च ब्रह्मयोनींस्तथैव च ।
सर्वभूतात्मयोनींश्च तान् नमस्याम्यहं सदा ॥ २०
नित्यमेतान् नमस्यामि कृष्ण लोककरानृषीन् ।
लोकज्येष्ठाञ् ज्ञाननिष्ठांस् तस्मात्ताँल्लोकभास्वरान् ॥ २१
तस्मात् त्वमपि वार्ष्णेय द्विजान् पूजय नित्यदा ।
पूजिताः पूजनार्हा हि सुखं दास्यन्ति तेऽनघ ॥ २२
अस्मिँल्लोके सदा ह्येते परत्र च सुखप्रदाः ।

---

1. क-घ—अर्धद्वयं नास्ति
2. ख—नारायण नमामि तान्

त एते वन्द्यमाना वै प्रदास्यन्ति सुखं तव ॥ २३

ये सर्वातिथयो नित्यं गोषु च ब्राह्मणेषु च ।
नित्यं जप्येषु निरता दुर्गाण्यतितरन्त्यपि ॥ २४

तथैव विप्रप्रवरान् नमस्कृत्य यतव्रतान् ।
भवन्ति ये दानपरा दुर्गाण्यतितरन्ति ते ॥ २५

प्राप्तास्सोमाहुतीश्चैव दुर्गाण्यतितरन्ति ते ।
मातापित्रोर्गुरुषु च सम्यग्वर्तन्ति ये सदा ॥ २६

यथा त्वं वृष्णिशार्दूलेत्युक्त्वैव विरराम ह ।
तस्मात् त्वमपि कौन्तेय पितृदेवद्विजातिथीन् ॥ २७

सम्यक् पूजय नित्यं हि गतिमिष्टामवाप्स्यसि ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

## ॥ चतुस्त्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणमहिमकथनम् ॥

युधिष्ठिरः—

किं राज्ञस्सर्वकृत्यानां गरीयस्स्यात् पितामह ।
किं कुर्वन् कर्म नृपतिर् उभौ लोकौ समश्नुते ॥ १

भीष्मः—

एतद्राज्ञः कृत्यतमम् अभिषिक्तस्य भारत ।
ब्राह्मणानां रक्षणं च पूजा च सुखमिच्छतः ॥ २

श्रोत्रियान् ब्राह्मणान् वृद्धान् नित्यमेवाभिपूजयेत् ।
पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान् ॥ ३

सान्त्वेन भोगदानेन नमस्कारैस्सदाऽर्चयेत् ॥ ३॥

एतत् कृत्यतमं राज्ञे नित्यमेवेति लक्षयेत् ।
यथाऽऽत्मानं यथा पुत्रांस् तथैतान् परिपालयेत् ॥ ४॥

ये चाप्येषां पूज्यतमास् तादृशान् प्रतिपूजयेत् ।
तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते ॥ ५॥

ते पूज्यास्ते नमस्कार्यास् सततं पितरो यथा ।
तेष्वेव यात्रा लोकस्य भूतानामिव वासवे ॥ ६॥

आभिचारैरुपायैश्च हरेयुर्बलतेजसी ।
निश्शेषं कुपिताः कुर्युर् उग्रास्सत्यपराक्रमाः ॥ ७॥

नान्तमेषां प्रपश्यामि न दिशश्चाप्यपावृताः ।
कुपितास्समुदीर्यन्ते दावेष्वग्निशिखा इव ॥ ८॥

विभ्यत्येषां साहसिका गुणास्तेषामतीव हि ।
कूपा इव तृणच्छन्ना [1]निगूढा द्यौरिवाम्बुदैः ॥ ९॥

प्रसह्यकारिणः केचित् कार्पण्यमृदवोऽपरे ।
[2]मान्यास्तेषां साधवो ये न निन्द्याश्चाप्यसाधवः ॥ १०॥

सन्ति चैषामति[3]शठास् तथा चान्ये तपस्विनः ॥ ११

कृषिगोरक्षमप्यन्ये भैक्षमन्ये प्रतिष्ठिताः ।
चोराश्चान्ये भृताश्चान्ये तथाऽन्ये नटनर्तकाः ॥ १२

सर्वकर्मसु दृश्यन्ते प्रशान्तेष्वितरेषु च ।
विविधाचारयुक्ताश्च ब्राह्मणा भरतर्षभ ॥ १३

नानाकर्मसु युक्तानां बहुकर्मोपजीविनाम् ।
सर्वज्ञानां सतां ह्येषां नित्यमेवानुवर्तयेत् ॥ १४

पितृणां देवतानां च मनुष्योरगरक्षसाम् ।

---

1. अ-क—विशुद्धा द्यौरिवापरे
2. क-ख—नास्तीदमर्धम्
3. क-ख—शमास्तथा

पुरोहिता महाभागा ब्राह्मणा वै नराधिप ॥ १५
नैते देवैर्न पितृभिर् न गन्धर्वैर्न राक्षसैः ।
नासुरैर्न पिशाचैश्च शक्या जेतुं द्विजातयः ॥ १६
अदैवं दैवतं कुर्युर् दैवतं चाप्यदैवतम् ।
यमिच्छेयुस्स राजा स्याद् यं द्विष्युस्स पराभवेत् ॥ १७
[1]अतिवादं च ये कुर्युर् ब्राह्मणानामचेतसः ।
निन्दाप्रशंसाकुशलाः कीर्त्यकीर्तिपरायणाः ॥ १८
परिकुप्यन्ति ते राजन् सततं द्विषतां द्विजाः ॥ १८॥
ब्राह्मणा यं [2]प्रशंसन्ति पुरुषस्स प्रवर्तते ।
ब्राह्मणैर्यः पराक्रुष्टः पराभूयात् क्षणाद्धि सः ॥ १९॥
शका यवनकाम्भोजास् तास्ताः क्षत्रियजातयः ।
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥ २०॥
द्रमिळाश्च कलिङ्गाश्च पुलिन्दाश्चाप्युशीनराः ।
कौलास्सर्वा माहिषिकास् तास्ताः क्षत्रियजातयः ॥ २१॥
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥ २२
श्रेयान् पराजयस्तेभ्यो न जयो जयतां वर ॥ २२॥
यत्तु सर्वमिदं हन्याद् ब्राह्मणांश्च न तत्समम् ।

---

1. क—अपोहितं घ—अनिपातम्
2. ख-घ—प्रपश्यन्ति

ब्रह्मवध्या महान दोष इत्याहुः परमर्षयः ॥ २३॥

परिवादो द्विजाग्र्याणां न श्रोतव्यः कथञ्चन ।
आसीताधोमुखस्तूष्णीं समुत्थाय व्रजेत वा ॥ २४॥

न स जातो जनिष्यो वा पृथिव्यामिह कश्चन ।
यो ब्राह्मणविरोधेन सुखं जीवितुमुत्सहेत् ॥ २५॥

दुर्ग्रहो मुष्टिना वायुर् अस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्जया ब्राह्मणा भुवि ॥ २६॥

ब्राह्मणानेव सुभृशं सततं परिपूजयेत् ।
एते हि सोमराजान ईश्वरास्सुखदुःखयोः ॥ २७॥

एते भोगैरलङ्कारैर् अन्यैश्चैव किमिच्छकैः ।
प्रतिपूज्या नमस्कार्या रक्ष्याश्च पितृवन्नृपैः ॥ २८॥

अतो राष्ट्रस्य शान्तिर्हि भूतानामिव वासवात् ॥ २९

ज्ञानवान् ब्रह्मवर्चस्वी राष्ट्रे यो ब्राह्मणश्शुचिः ।
महारथश्च राजन्य एष्टव्यश्शत्रुतापनः ॥ ३०

ब्राह्मणं जातिसम्पन्नं धर्मज्ञं संशितव्रतम् ।
भोजयीत गृहे राजन् न तस्मात् परमस्ति वै ॥ ३१

ब्राह्मणेभ्यो हविर्दत्तं प्रतिगृह्णन्ति देवताः ।
पितरस्सर्वभूतानां नैतेभ्यो विद्यते परम् ॥ ३२

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

आदित्यश्चन्द्रमा विष्णुश् शङ्करोऽग्निः प्रजापतिः ।
सर्वे ब्राह्मणमाविश्य सदाऽन्नमुपभुञ्जते ॥ ३३

[1]न तस्याश्नन्ति पितरो यस्य विप्रा न भुञ्जते ।
देवताश्चास्य नाश्नन्ति पापस्य ब्राह्मणद्विषः ॥ ३४

ब्राह्मणेषु सुतुष्टेषु प्रीयन्ते पितरस्सदा ।
तथैव देवता राजन् नात्र कार्या विचारणा ॥ ३५

तथैव तेऽपि प्रीयन्ते येषां भवति तद्धविः ।
न च प्रेत्य विनश्यन्ति गच्छन्ति परमां गतिम् ॥ ३६

येनैव हविषा राजन् ब्राह्मणांस्तर्पयेद्द्विजः ।
ते तेनैव तृप्यन्ते पितरो दैवतानि च ॥ ३७

ब्राह्मणो वेद तद्भूतं प्रभवन्ति यतः प्रजाः ।
यतश्चायं प्रभवति प्रेत्य यत्रापि गच्छति ॥ ३८

वेदैष मार्गं स्वर्गस्य नरकस्य तथैव च ।
आगतानागते चोभे ब्राह्मणो द्विपदां वरः ॥ ३९

ब्राह्मणो द्विपदां श्रेष्ठस् स्वधर्मं वेद मेधया ।
[2]ये नैनमनुवर्तन्ते ते न यान्ति परां गतिम् ॥ ४०

न ते प्रेत्य विनश्यन्ति गच्छन्ति परमां गतिम् ॥ ४०॥

---

1. अ-घ—इदमर्धं नास्ति
2. क-घ—ये चैन + पराभवम्

ये ब्राह्मणमुखात् प्राप्तं प्रतिगृह्णन्ति चैव हि ।
कृतात्मानो महात्मानस् ते यान्ति परमां गतिम् ॥ ४१॥

क्षत्रियाणां प्रतपतां तेजसा च बलेन च ।
ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च तपांसि च ॥ ४२॥

भृगवोऽजयंस्तालजङ्घान् नीपानाङ्गिरसोऽजयन् ।
भरद्वाजो वैतहव्यान् ऐलांश्च भरतर्षभ ॥ ४३॥

चित्रायुधांश्चाप्यजयन्नेते कृष्णाजिनध्वजाः ॥ ४४

प्रक्षिप्य यश्च कुम्भ्यां वै पुरगामिनमाहरेत् ॥ ४४॥

यत् किञ्चित् कथ्यते लोके श्रूयते दृश्यतेऽपि वा ।
सर्वं तद्ब्राह्मणेष्वेव गूढोऽग्निरिव दारुषु ॥ ४५॥

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
संवादं वासुदेवस्य पृथिव्या भरतर्षभ ॥ ४६॥

श्रीभगवान्—

मातरं सर्वभूतानां पृच्छे त्वां संशयं शुभे ।
केनस्वित् कर्मणा पापं व्यपोहति नरो गृही ॥ ४७॥

पृथिवी—

ब्राह्मणानेव सेवेत सततं ह्येतदुत्तमम् ।
ब्राह्मणान् सेवमानस्य पापं सर्वं प्रयास्यति ॥ ४८॥

अतो भूरितरा कीर्तिर् अतो बुद्धिः प्रजायते ।

परेषामपरेषां च परेभ्यश्चैव ये परे ॥ ४९॥

ब्राह्मणा यं प्रशंसन्ति पुरुषस्स प्रवर्धते ।
अथ यो ब्राह्मणान् क्रुष्टः पराभवति सोऽचिरात् ॥ ५०॥

यथा महार्णवे क्षिप्त आमलोष्टो विनश्यति ।
तथा दुश्चरितं विप्रे पराभावाय कल्पते ॥ ५१॥

पश्य चन्द्रे कृतं लक्ष्म समुद्रे लवणोदकम् ।
तथा भगसहस्रेण महेन्द्रः परिचिह्नितः ॥ ५२॥

तेषामेव प्रभावेन सहस्रनयनोऽभवत् ।
शतक्रतुस्समभवत् पश्य माधव यादृशम् ॥ ५३॥

इच्छन् भूतिं च कीर्तिं च [1]भोगांश्च मधुसूदन ।
ब्राह्मणानुमते तिष्ठेत् पुरुषश्शुचिरात्मवान् ॥ ५४॥

भीष्मः—

इत्येतद्वचनं श्रुत्वा मेदिन्या मधुसूदनः ।
साधु साध्विति तामुक्त्वा मेदिनीं पर्यपूजयत् ॥ ५५॥

एतां श्रुत्वोपमां पार्थ प्रयतो ब्राह्मणर्षभान् ।
सततं पूजयेथास्त्वं तत्र श्रेयोऽभिपत्स्यसे* ॥ ५६॥

जन्मनैव महाभागो ब्राह्मणो नाम जायते ।
नमस्यस्सर्वभूतानाम् अतिथिः प्रसृताग्रभुक् ॥ ५७॥

---

1. क-घ—लोकांश्च

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

सर्वेषां [1]सुखदास्तात ब्राह्मणास्सुमनोमुखाः ।
सर्वानेते हनिष्यन्ति ब्राह्मणा जातमन्यवः ॥ ५८॥

गीर्भिर्मङ्गलयुक्ताभिर् अनुध्येयुस्सुपूजिताः ॥ ५९

सर्वान् नो द्विषतस्तात ब्राह्मणा जातमन्यवः ।
गीर्भिर्दारुणयुक्ताभिर् हन्युश्चैते ह्यपूजिताः ॥ ६०

अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ।
सृष्ट्वा द्विजातीन् धाता हि यथापूर्वं समादधत् ॥ ६१

धाता—

न वोऽन्यदिह कर्तव्यं किञ्चिदूर्ध्वायनं [2]विधि ।
युक्ता गोपायत ब्रह्म श्रेयो वस्त्वस्तु शोभनम् ॥ ६२

स्वमेव कुर्वतां कर्म श्रीर्वो ब्राह्मी भविष्यति ।
ब्राह्मण्यं सर्वभूतानां प्रग्रहं च गमिष्यथ ॥ ६३

न शूद्रकर्म कर्तव्यं ब्राह्मणेन विपश्चिता ।
शौद्रं हि कुर्वतः कर्म ब्राह्मी श्रीरुपरुध्यते ॥ ६४

श्रीश्च बुद्धिश्च तेजश्च विभूतिश्च प्रतापिनी ।
[3]स्वाध्यायेनैव माहात्म्यं विमलं प्रतिपत्स्यथ ॥ ६५

हुत्वा चाहवनीयादि महाभाग्ये प्रतिष्ठिताः ।
अग्रभोज्याः प्रसूतीनां श्रिया ब्राह्म्याऽनुकल्पिताः ॥ ६६

---

1. क-घ—सुहृद 2. अ-क-ख—विधिः
3. क-घ—सुध्यानेन

श्रद्धया परया युक्ता ह्यनभिद्रोहलब्धया ।
दमस्वाध्यायनिरतास् सर्वान् कामानवाप्स्यथ ॥ ६७

यच्चैव मानुषे लोके यच्च देवेषु किञ्चन ।
सर्वं वस्तपसा साध्यं ज्ञानेन विनयेन च ॥ ६८

युष्मत्सम्माननात् प्रीतिं पावनैः क्षत्रियाश्श्रियम् ।
अमुत्रेह समायान्ति वैश्यशूद्रादिकास्तथा ॥ ६९

अरक्षिताश्च युष्माभिर् विरुद्धा यान्ति विप्लवम् ।
युष्मत्तेजोधृता लोकास् तद्रक्षथ जगत्त्रयम् ॥ ७०

भीष्मः—

इत्येता ब्रह्मगीतास्तास् समाख्याता मया तव ।
विप्रानुकम्पार्थमिदं तेन प्रोक्तं हि धीमता ॥ ७१

भूयस्तेषां फलं मन्ये यथा राज्ञस्समुत्थितम् ।
दुरासदाश्च चण्डाश्च तपसा क्षिप्रकारिणः ॥ ७२

सन्त्येषां सिंहसत्त्वाश्च व्याघ्रसत्त्वास्तथाऽपरे ।
वराहमृगसत्त्वाश्च गजसत्त्वास्तथैव च ॥ ७३

कार्पासमृदवः केचित् तथाऽन्ये मकरस्पृशः ।
विभाव्यभाविनः केचित् तथा चक्षुर्हणः परे ॥ ७४

[1]विविधानीह वृत्तानि ब्राह्मणानां युधिष्टिर ॥ ७४॥

1. क-घ—इदमर्धं नास्ति

मेखला[1]द्रमिलाः काचाः पुण्ड्राः कोकाङ्गिरास्तथा ।
शौण्डिका गरदा दर्पाश् चोलाश्च कृशतस्कराः ॥ ७५॥

किराता यवनाश्चैव तास्ताः क्षत्रियजातयः ।
वृषलत्वमनुप्राप्ता ब्राह्मणानामदर्शनात् ॥ ७६॥

ब्राह्मणानां परिभवाद् असुरास्सलिलेशयाः ।
ब्राह्मणानां प्रसादाच्च देवास्स्वर्गनिवासिनः ॥ ७७॥

अशक्यं स्प्रष्टुमाकाशम् अचाल्यो हिमवान् गिरिः ।
अवार्या सेतुना गङ्गा दुर्जया ब्राह्मणा भुवि ॥ ७८॥

न ब्राह्मणविरोधेन शक्यं शास्तुं वसुन्धराम् ।
ब्राह्मणा हि महात्मानो देवानामपि देवताः ॥ ७९॥

तान् पूजयस्व सततं दानेन परिचर्यया ।
यदीच्छसि महीं भोक्तुम् इमां सागरमेखलाम् ॥ ८०॥

प्रतिग्रहेण तेजो हि विप्राणां शाम्यतेऽनघ ।
प्रतिग्रहं ये नेच्छेयुस् तेऽपि रक्ष्यास्त्वयाऽनघ ॥ ८१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
[अस्मिन्नध्याये ८१॥ श्लोकाः]

---

1 क-घ—प्रमिलाः

## ॥ पञ्चत्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणमाहात्म्यप्रतिपादकशक्रशम्बरसंवादानुवादः ॥

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
शक्रशम्बरसंवादं तं निबोध युधिष्ठिर ॥ १

शक्रो ह्यज्ञातरूपेण जटी भूत्वा सुदारुणः ।
विप्ररूपं समास्थाय प्रश्नं पप्रच्छ शम्बरम् ॥ २

शक्रः—

केन शम्बर रूपेण स्वजात्यानधितिष्ठसि ।
श्रेष्ठं त्वां केऽनुमन्यन्ते तन्मे ब्रूहीह पृच्छते ॥ ३

शम्बरः—

नासूयामि सदा विप्रान् ब्राह्मणं च पितामहम् ।
शास्त्राणि वदतो विप्रान् मानयामि यथासुखम् ॥ ४

श्रुत्वा च नावजानामि नापविध्यामि कर्हिचित् ।
अभ्यर्चयामि पृच्छामि पादौ गृह्णामि धीमताम् ॥ ५

ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
प्रमत्तेष्वप्रमत्तोऽस्मि सदा सुप्तेषु जागृमि ॥ ६

ते मां शास्त्रपदे सक्तं ब्रह्मवर्त्मानमूयकम् ।
समाभिक्षन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः ॥ ७
यच्च भाषन्ति ते तुष्टास् तत्तद् [1]गृह्णामि मेधया ।
समाधिमात्मनो नित्यम् अतुलामनुचिन्तयन् ॥ ८
सोऽहं वागग्र्यमृष्टानां रसानामनुलेहिनाम् ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ९
एतत् पृथिव्याममृतम् एतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखाच्छास्त्रम् इह श्रुत्वा प्रवर्तते ॥ १०
एतत् कारणमाज्ञाय दृष्ट्वा देवासुरं पुरा ।
युद्धं पिता मे हृष्टात्मा विस्मितः प्रत्यपद्यत ॥ ११
दृष्ट्वा च ब्राह्मणानां तु महिमानं महात्मनाम् ।
पर्यपृच्छत् कथमिमे सिद्धा इति निशाकरम् ॥ १२

सोमः—

ब्राह्मणास्तपसा सिद्धा दृश्यन्ते वाग्बलास्सदा ।
भुजवीर्या हि राजानो वाग्बलाश्च द्विजातयः ॥ १३
प्रवसन् वाऽप्यधीयीत बह्वीर्दुर्वसतीर्वसन् ।
निर्मन्युरपि निर्मानो यदि स्यात् समदर्शनः ॥ १४
अपि चेज्ज्ञानसम्पन्नस् सर्वान् वेदान् पितृगृहे ।

1. क-घ—गृह्णाम्यमायया

श्लाघमान उपाधीयाद् ग्राम्य इत्येव तं विदुः ॥ १५
भूमिरेतौ निगिरति सर्पौ बिलशयाविव ।
राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ १६
अतिमानश्श्रियं हन्ति पुरुषस्याल्पमेधसः ।
गर्भेण दुष्यते कन्या गृहवासेन च द्विजः ॥ १७
विद्याविदो लोकविदस् तपोबलसमन्विताः ।
नित्यपूज्याश्च वन्द्याश्च द्विजा [1]लोकद्वयेच्छुभिः ॥ १८

शम्बरः—

इत्येतन्मे श्रावयित्वा सोमादद्भुतदर्शनान् ।
ब्राह्मणान् पूजयामास [2]तथैवाहं महाव्रतान् ॥ १९

भीष्मः—

श्रुत्वैतद्वचनं शक्रो दानवेन्द्रमुखाच्च्युतम् ।
द्विजान् सम्पूजायामास महेन्द्रत्वमवाप च ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
[ अस्मिन्नध्याये २० श्लोकाः ]

---

1. क-ध—लोके श्रिये
2. क-ध—इतश्चत्वारः पादा न सन्ति

## ॥ षट्त्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति दानपात्रलक्षणादिकथनम् ॥

युधिष्ठिरः—

अपूर्वं वा भवेत् पात्रम् अथ वाऽपि चिरोषितम् ।
दूरादभ्यागतं वाऽपि किं पात्रं स्यात् पितामह ॥ १

भीष्मः—

क्रिया भवति केषाञ्चिद् उपांशु व्रतमुत्तमम् ।
यो नो याचेत यत् किञ्चित् सर्वं दद्याम इत्युत ॥ २
अपीडयन् भृत्यवर्गम् इत्येवमनुशुश्रुम ॥ २॥
पीडयन् भृत्यवर्गं हि आत्मानमपकर्षति ॥ ३
अपूर्वं चापि यत् पात्रं यच्चापि स्याच्चिरोषितम् ।
दूरादभ्यागतं चापि न तत् पात्रं विदुर्बुधाः ॥ ४

युधिष्ठिरः—

अपीडया च भृत्यानां धर्मस्याहिंसया तथा ।
पात्रं विद्याम तत्त्वेन यस्मै दत्तं न सन्तपेत् ॥ ५

भीष्मः—

ऋत्विक्पुरोहिताचार्याश् शिष्यास्सम्बन्धिबान्धवाः ।
सर्वे पूज्याश्च मान्याश्च श्रुतवृत्तोपसंहिताः ॥ ६

अतोऽन्यथा वर्तमानास् सर्वे नार्हन्ति सत्क्रियाम् ।
तस्माद् गुणैः परीक्षेत पुरुषान् प्रणिधाय वै ॥ ७

अक्रोधस्सत्यवचनम् अहिंसा दम आर्जवम् ।
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा तपश्शमः ॥ ८

यस्मिन्नेतानि दृश्यन्ते न चाकार्याणि भारत ।
भावतो विनिविष्टानि तत् पात्रं मानमर्हति ॥ ९

तथा चिरोषितं चापि सम्प्रत्यागतमेव च ।
अपूर्वं चैव पूर्वं च तत् पात्रं मानमर्हति ॥ १०

अप्रामाण्यं च वेदानां शास्त्राणां चातिलङ्घनम् ।
सर्वत्र चानवस्थानम् एतन्नाशनमात्मनः ॥ ११

भवेत् पण्डितमानी यो ब्राह्मणो वेदनिन्दकः ।
आन्वीक्षिकीं तर्कविद्याम् अनुरक्तो निरर्थिकाम् ॥ १२

हेतुवादान् ब्रुवन् सत्सु विजेताऽहेतु[1]वादिनः ।
आक्रोष्टा चातिवक्ता च ब्राह्मणानां सदैव हि ॥ १३

सर्वानुशङ्की मूढश्च बालकः कटुवागपि ।
बोद्धव्यस्तादृशस्तात नरश्वानं हि तं विदुः ॥ १४

यथा श्वा भषितुं चैव हन्तुं चैवोपसृज्यते ।
एवं सम्भाषणार्थाय सर्वशास्त्रवधाय च ॥ १५

1. अ-ख—वादकः

अल्पश्रुताः कुतर्काश्च दृष्टास्पृष्टाः कुपण्डिताः ॥ १५॥

श्रुतिस्मृती चेतिहासपुराणारण्यवेदिनः ।
अनुरुन्ध्याद्बहुज्ञांश्च सारज्ञांश्चैव पण्डितः ॥ १६॥

लोकयात्रा च प्रष्टव्या धर्मश्चात्महिताय च ।
एवं नरो वर्तमानश् शाश्वतीरेधते समाः ॥ १७॥

ऋणमुद्यम्य देवानाम् ऋषीणां च महात्मनाम् ।
पितृणामथ भूतानाम् अतिथीनां च पञ्चमम् ॥ १८॥

पर्यायेण विमुक्तो यस् सुनिर्णिक्तेन कर्मणा ।
एवं गृहस्थः कर्माणि कुर्वन् धर्मान्न हीयते ॥ १९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
[ अस्मिन्नध्याये १९॥ श्लोकाः ]

---

## ॥ सप्तत्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति स्त्रीस्वभावप्रतिपादकनारदपञ्चचूडासंवादानुवादः ॥

युधिष्ठिरः—

स्त्रीणां स्वभावमिच्छामि श्रोतुं भरतसत्तम ।
स्त्रियो हि मूलं दोषाणां लघुचित्ताः पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
नारदस्य च संवादं पुंश्चल्या पञ्चचूडया ॥ २
लोकाननुचरन् धीमान् देवर्षिर्नारदः पुरा ।
ददर्शाप्सरसं ब्राह्मीं पञ्चचूडामनिन्दिताम् ॥ ३
तां दृष्ट्वा चारुसर्वाङ्गीं पप्रच्छाप्सरसं मुनिः ॥ ३॥

नारदः—

संशयो हृदये कश्चित् तन्मे ब्रूहि सुमध्यमे ॥ ४

भीष्मः—

एवमुक्ता तु सा विप्रं प्रत्युवाचाथ नारदम् ॥ ४॥

पञ्चचूडा—

विषये सति वक्ष्यामि समर्थां मन्यसे च माम् ॥ ५

नारदः—

न त्वामविषये भद्रे नियोक्ष्यामि कथञ्चन ।
स्त्रीणां स्वभावमिच्छामि त्वत्तश्श्रोतुं वरानने ॥ ६

भीष्मः—

एतच्छ्रुत्वा वचस्तस्य देवर्षेरप्सरोत्तमा ।
प्रत्युवाच न शक्ष्यामि स्त्री निन्दितुमहं स्त्रियः ॥ ७

विदितास्ते स्त्रियस्ताश्च यादृशाश्च स्वभावतः ।
न मामर्हसि देवर्षे नियोक्तुं प्रश्न ईदृशे ॥ ८

तामुवाच स देवर्षिस् सत्यं वद सुमध्यमे ।
मृषावादे भवेद्दोषस् सत्ये दोषो न विद्यते ॥ ९

इत्युक्ता सा कृतमतिर् अभवच्चारुहासिनी ।
स्त्रीदोषांश्च मतान् सत्यान् भाषितुं सा प्रचक्रमे ॥ १०

पञ्चचूडा—

कुलीना रूपवत्यश्च नाथवत्यश्च योषितः ।
मर्यादासु न तिष्ठन्ति स दोषस्स्त्रीषु नारद ॥ ११

न स्त्रीभ्यः किञ्चिदन्यद्वै पापीयस्तरमस्ति वै ।
स्त्रियो हि मूलं दोषाणां तथा त्वमपि वेत्थ हि ॥ १२

समाज्ञातानभिमतान् प्रतिरूपान् वशे स्थितान् ।
पतीनन्तरमासाद्य नालं नार्यः परीक्षितुम् ॥ १३

असद्धर्मस्त्वयं स्त्रीणाम् अस्माकं भविता प्रभो ।
पापीयसो नरान् यान् वै लज्जां त्यक्त्वा भजामहे ॥ १४

स्त्रियं हि यः प्रार्थयति सन्निकर्षं च गच्छति ।
इषद्वा कुरुते सेवां तं तमिच्छन्ति योषितः ॥ १५

[1]अनर्थित्वान्मनुष्याणां भयात् परिभवस्य च ।
मर्यादायाममर्यादास् स्त्रियस्तिष्ठन्ति भर्तृषु ॥ १६

[2]नासां कश्चिदगम्योऽस्ति नासां वयसि संस्थितिः ।
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥ १७

न भयान्नाप्यनुक्रोशान्नार्थहेतोः कथञ्चन ।
न ज्ञातिबन्धुसम्बन्धात् स्त्रियस्तिष्ठन्ति भर्तृषु ॥ १८

यौवने वर्तमानानां मृष्टाभरणवाससाम् ।
नराणां स्वैरवृत्तानां स्पृहयन्ति कुलस्त्रियः ॥ १९

या हि शश्वद्बहुमता रक्ष्यन्ते दयितास्स्त्रियः ।
अपि तास्सम्प्रसज्जन्ते कुब्जान्धजड[3]वामनैः ॥ २०

पङ्गुष्वपि च देवर्षे ये चान्ये कुत्सिता नराः ।
स्त्रीणामगम्यो लोकेऽस्मिन् नास्ति कश्चिन्महामुने ॥ २१

---

1. क-घ—अरस्यत्वा
2. क-घ—अर्धचतुष्टयं नास्ति
3. घ—पामरैः

इति स्त्रीणां गतिर्ब्रह्मन् कथञ्चिन्नोपलभ्यते ।
अप्यन्योन्यं प्रवर्तन्ते न हि तिष्ठन्ति भर्तृषु ॥ २२

दुष्टाचाराः पापरता [1]असत्यो मायया वृताः ।
अदृष्टबुद्धिबहुलाः प्रायेणेत्यवगम्यताम् ॥ २३

अलाभात् पुरुषाणां हि भयात् परिभवस्य च ।
वधबन्धभयाच्चापि स्वयं गुप्ता भवन्ति ताः ॥ २४

चलस्वभावा दुस्सेव्या दुर्ग्रहा भावतस्तथा ।
प्राज्ञस्य पुरुषस्येह यथा भावास्तथा स्त्रियः ॥ २५

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकस्सर्वभूतानां न पुंसां वामलोचनाः ॥ २६

इदमन्यच्च देवर्षे रहस्यं सर्वयोषिताम् ।
दृष्ट्वैव पुरुषं ह्यन्यं योनिः प्रक्लिद्यते स्त्रियाः ॥ २७

कामानामपि दातारं कर्तारं मानसान्त्वयोः ।
रक्षितारं न मृष्यन्ति भर्तारं स्वमसत्स्त्रियः ॥ २८

[2]न कामभोगान् बहुलान् नालङ्कारार्थसञ्चयान् ।
तथैव बहुमन्यन्ते यथा रत्यामनुग्रहम् ॥ २९

अन्तकश्शमनो मृत्युः पातालं बडबामुखम् ।

---

1. ख—असत्या घ—असत्या × स्मृताः
2. क-घ—अर्धचतुष्टयं नास्ति

क्षुरधारा विषं सर्पो वह्निरित्येकतस्स्त्रियः ॥ ३०

यतश्च भूतानि महान्ति पञ्च
यतश्च लोका विहिता विधात्रा ।
यतः पुमांसः प्रमदाश्च निर्मितास्
ततश्च दोषाः प्रमदासु नारद ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
[ अस्मिन्नध्याये ३१ श्लोकाः ]

---

## ॥ अष्टात्रिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति स्त्रीणां दुश्चरितकथनम् ॥

---

युधिष्ठिरः—

इमे वै मानवा लोके स्त्रीषु सज्जन्त्यभीक्ष्णशः ।
मोहेन परमाविष्टा दैवदृष्टेन कर्मणा ॥ १

स्त्रियश्च पुरुषेष्वेव प्रत्यक्षं लोकसाक्षिकम् ।
अत्र मे संशयस्तीव्रो हृदि सम्परिवर्तते ॥ २

कथं तासु नरास्सङ्गं कुर्वन्ति कुरुनन्दन ।

स्त्रियो वा तेषु रज्यन्ते विरज्यन्तेऽपि वा पुनः ॥ ३

इति ताः पुरुषव्याघ्र कथं शक्यास्तु रक्षितुम् ।
प्रमदाः पुरुषेणेह तन्मे व्याख्यातुमर्हसि ॥ ४

भीष्मः—

एता हि मयमायाभिर् वञ्चयन्तीह मानवान् ।
न चासां मुच्यते कश्चिन् पुरुषो हस्तमागतः ॥ ५

गावो नवतृणानीव गृह्णन्त्येव नवान् नवान् ॥ ५॥

शम्बरस्य च या माया या माया नमुचेरपि ।
[1]कुहकानीव वार्ष्णेय सर्वास्ता योषितो विदुः ॥ ६॥

हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्ति च ।
अप्रियं प्रियभावैश्च गृह्णते कालयोगतः ॥ ७॥

यदि जिह्वासहस्रं स्याज् जीवेच्च शरदां शतम् ।
अनन्यकर्मा स्त्रीदोषान् अनुक्त्वा निधनं व्रजेत् ॥ ८॥

उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः ।
स्त्रीबुद्ध्या न विशिष्येत तास्स्म रक्ष्याः कथं नरैः ॥ ९॥

अनृतं सत्यमित्याहुस् सत्यं चापि तथाऽनृतम् ।
इति यास्ताः कथं वीर संरक्ष्याः पुरुषैरिह ॥ १०॥

दोषास्पदेऽशुचौ देहे ह्यासां रक्तास्त्वहो नराः ॥ ११

1. क-ख—बलेः कुम्भेन वार्ष्णेश्च

स्त्रीणां बुद्ध्याऽपि निष्कर्षाद् अर्थशास्त्राणि शत्रुहन् ।
बृहस्पतिप्रभृतिभिर् मन्ये सन्ति कृतानि वै ॥ १२

सम्पूज्यमानाः पुरुषैर् विकुर्वन्ति मनो नृषु ॥ १२॥

अपास्ताश्च तथा राजन् विकुर्वन्ति मनस्त्रियः ॥ १३

युधिष्ठिरः—

कस्मास्त्रियश्शिक्षितुं स्याद् इति मे संशयो महान् ।
तन्मे ब्रूहि महाबाहो कुरूणां वंशवर्धन ॥ १४

यदि शक्या कुरुश्रेष्ठ रक्षा तासां कथञ्चन ।
कर्तुं वा कृतपूर्वा वा तन्मे व्याख्यातुमर्हसि ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
[ अस्मिन्नध्याये १५ श्लोकाः ]

---

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति स्त्रीणां पुरुषचित्तप्रमथनाय शक्तिविशेषदानपूर्वकं ब्रह्मणा सृष्टतया तद्रक्षणस्य दुष्करत्वकथनम् ॥ १ ॥ स्त्रीणां रक्षणस्य दुश्शकत्वे दृष्टान्ततया विपुलोपाख्यानकथनारम्भः ॥ २ ॥ गुरुणा स्वभार्यारक्षणं नियुक्तेन विपुलनाम्ना तदर्थं योगेन तच्छरीरप्रवेशः ॥ ३ ॥ इन्द्रेण देवशर्ममुन्यसन्निधाने तद्भार्याविलोभनाय तदाश्रमाभिगमनम् ॥ ४ ॥ तथा विपुलतपोऽभिभृतेन भयात्ततो निर्गमनम् ॥ ५ ॥ विपुलेन शक्रवृत्तान्तनिवेदनतुष्टाद्गुरोर्वरग्रहणपूर्वकं तपश्चरणम् ॥ ६ ॥ गुरुनियोगाद्दिव्यपुष्पानयनार्थं गतेन विपुलेन मध्येमार्गं नरवरमिथुनात् स्वगतिनिन्दाश्रवणम् ॥ ७ ॥ निन्दितगतिप्रापकस्वदुश्चरितं चिन्तयता तेन चिराय तदनुस्मरणम् ॥ ८ ॥ देवशर्मणा स्वशिष्यं विपुलं प्रति तद्दृष्टानां मिथुनानां षट्पुरुषाणां च क्रमेणाहोरात्रऋत्वभिमानिदेवतात्वकथनम्॥ ९ ॥ तथा स्वस्मिन् स्वदाररक्षणाय योगेन तच्छरीरप्रवेशानिवेदनस्य दुर्गतिहेतुत्वकथनम् ॥ १० ॥ तथा तत्कृतस्वदाररक्षणपरितोषेण तद्दुरितदूरीकरणपूर्वकं तेन स्वभार्यया च सह स्वर्गे सुखविहरणम् ॥ ११ ॥

---

भीष्मः—

एवमेतन्महाबाहो नास्ति मिथ्याऽत्र किञ्चन ।
यथा ब्रवीषि कौरव्य नारीं प्रति नराधिप ॥ १

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
यथा रक्षा कृता पूर्वं विपुलेन महात्मना ॥ २

स्त्रीणां बुद्ध्वाऽपि निष्कर्षाद् अर्थशास्त्राणि शत्रुहन् ।
बृहस्पतिप्रभृतिभिर् मन्ये सन्ति कृतानि वै ॥ १२
सम्पूज्यमानाः पुरुषैर् विकुर्वन्ति मनो नृषु ॥ १२॥
अपास्ताश्च तथा राजन् विकुर्वन्ति मनस्त्रियः ॥ १३

युधिष्ठिरः—

कस्तास्त्रियश्शिक्षितुं स्याद् इति मे संशयो महान् ।
तन्मे ब्रूहि महाबाहो कुरूणां वंशवर्धन ॥ १४
यदि शक्या कुरुश्रेष्ठ रक्षा तासां कथञ्चन ।
कर्तुं वा कृतपूर्वा वा तन्मे व्याख्यातुमर्हसि ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
[ अस्मिन्नध्याये १५ श्लोकाः ]

---

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति स्त्रीणां पुरुषचित्तप्रमथनाय शक्तिविशेषदानपूर्वकं ब्रह्मणा सृष्टतया तद्रक्षणस्य दुष्करत्वकथनम् ॥ १ ॥ स्त्रीणां रक्षणस्य दुश्शकत्वे दृष्टान्ततया विपुलोपाख्यानकथनारम्भः ॥ २ ॥ गुरुणा स्वभार्यारक्षणं नियुक्तेन विपुलनाम्ना तदर्थं योगेन तच्छरीरप्रवेशः ॥ ३ ॥ इन्द्रेण देवशर्ममुन्यसन्निधाने तद्भार्याविलोभनाय तदाश्रमाभिगमनम् ॥ ४ ॥ तथा विपुलतपोऽभिभूतेन भयात्ततो निर्गमनम् ॥ ५ ॥ विपुलेन शक्रवृत्तान्तनिवेदनतुष्टाद्गुरोर्वरग्रहणपूर्वकं तपश्चरणम् ॥ ६ ॥ गुरुनियोगाद्दिव्यपुष्पानयनार्थं गतेन विपुलेन मध्येमार्गं नरवरमिथुनात् स्वगतिनिन्दाश्रवणम् ॥ ७ ॥ निन्दितगतिप्रापकस्वदुश्चरितं चिन्तयता तेन चिराय तदनुस्मरणम् ॥ ८ ॥ देवशर्मणा स्वशिष्यं विपुलं प्रति तद्दृष्टानां मिथुनानां षट्पुरुषाणां च क्रमेणाहोरात्रऋत्वभिमानिदेवतात्वकथनम्॥ ९ ॥ तथा स्वस्मिन् स्वदाररक्षणाय योगेन तच्छरीरप्रवेशानिवेदनस्य दुर्गतिहेतुत्वकथनम् ॥ १० ॥ तथा तत्कृतस्वदाररक्षणपरितोषेण तद्दुरितदूरीकरणपूर्वकं तेन स्वभार्यया च सह स्वर्गे सुखविहरणम् ॥ ११ ॥

---

भीष्मः—

एवमेतन्महाबाहो नास्ति मिथ्याऽत्र किञ्चन ।
यथा ब्रवीषि कौरव्य नारीं प्रति नराधिप ॥ १

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
यथा रक्षा कृता पूर्वं विपुलेन महात्मना ॥ २

प्रमदाश्च यथा सृष्टा ब्रह्मणा भरतर्षभ ।
यदर्थं तच्च ते तात प्रवक्ष्ये [1]भरतर्षभ ॥ ३

न हि स्त्रीभ्यः परं पुत्र पापीयः किञ्चिदस्ति वै ।
अस्ति हि प्रमदा दीप्ता माया च मयजा विभो ॥ ४

क्षुरधारा विषं सर्पो मृत्युरित्येकतस्त्रियः ॥ ४॥

इमाः प्रजा महाबाहो धार्मिका इति नश्श्रुतम् ।
स्वयं गच्छन्ति देवत्वं ततो देवानियाद्भयम् ॥ ५॥

अथाभ्यगच्छन् देवास्ते पितामहमरिन्दम ।
निवेद्य मानसं चापि तूष्णीमासन्नवाङ्मुखाः ॥ ६॥

तेषामन्तर्गतं ज्ञात्वा देवानां प्रपितामहः ।
[2]मानवानां प्रमोहार्थं कृत्या नार्योऽसृजत् प्रभुः ॥ ७॥

पूर्वसर्गे हि कौन्तेय साध्व्यो नार्य इहाभवन् ।
असाध्व्यस्तु समुत्पन्नाः कृत्यासर्गात् प्रजापतेः ॥ ८॥

ताभ्यः कामान् यथाकामं प्रादाद्धि स पितामहः ।
ताः कामलुब्धाः प्रमदाः प्रमथ्नन्ति नरांस्तदा ॥ ९॥

क्रोधं कामस्य देवेशस् सहायं चासृजत् प्रभुः ।
असज्जन्त प्रजास्तस्मात् कामक्रोधवशङ्गताः ॥ १०॥

1. क-घ—वसुधाधिप
2. ख—अर्धचतुष्टयं नास्ति

[1]द्विजानां च गुरूणां च महागुरुनृपादिनाम् ।
क्षणात् स्त्रीसङ्गकामोत्था यातनाऽहो निरन्तरा ॥ ११॥
अरक्तमनसां नित्यं ब्रह्मचर्यामलात्मनाम् ।
तपोदमार्चनध्यानयुक्तानां शुद्धिरुत्तमा ॥ १२॥
न च स्त्रीणां क्रिया काचिद् इति धर्मो व्यवस्थितः ।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियो नित्यमिति श्रुतिः ॥ १३॥
शय्यासनमलङ्कारम् अन्नपानमनार्यताम् ।
दुर्वाग्भावं रतिञ्चैव ददौ स्त्रीभ्यः प्रजापतिः ॥ १४॥
न तासां रक्षणं कर्तुं पुंसां शक्यं कथञ्चन ।
अपि विश्वकृता तात कुतस्तु पुरुषैरिह ॥ १५॥
वाचा वाऽप्यथ वन्धैर्वा क्लेशैर्वा विविधैस्तथा ।
न शक्या रक्षितुं नार्यस् ता हि नित्यमसंयताः ॥ १६॥
इदं तु पुरुषव्याघ्र पुरस्ताच्छ्रुतवानहम् ।
यथा रक्षा कृता पूर्वं विपुलेन गुरुस्त्रियाः ॥ १७॥
ऋषिरासीन्महाबाहो देवशर्मेति विश्रुतः ।
तस्य भार्या रुचिर्नाम रूपेणासदृशी भुवि ॥ १८॥
तस्या रूपेण सम्मत्ता देवगन्धर्वदानवाः ।

---

1. क-घ—अर्धचतुष्टयं नास्ति

दैवं दैत्यमथो राज्ञां वपुर्धारयतेऽपि च ॥ ३६

सुकृशो वायुभक्षश्च शकुनिर्विकृतस्तथा ।
चतुष्पाद्ब्रह्मरूपश्च पुनर्भवति भार्गव ॥ ३७

ब्राह्मणः क्षत्रियश्चैव वैश्यश्शूद्रस्तथैव च ।
वायुभूतश्च स पुनर् देवराजो भवत्युत ॥ ३८

मक्षिकामशकादीनां वपुर्धारयते तथा ।
न शक्यमस्य ग्रहणं कर्तुं विपुल केनचित् ॥ ३९

अपि विश्वसृजा तात येन सृष्टमिदं जगत् ।
पुनरन्तर्हितश्शक्रो रंस्यते ज्ञानचक्षुषा ॥ ४०

एवंरूपाणि कुरुते सततं पाकशासनः ।
तस्माद्विपुल यत्नेन रक्षेमां तनुमध्यमाम् ॥ ४१

यथा रुचिं नावलिहेद् देवेन्द्रो मुनिसत्तम ।
क्रतावुपहितं न्यस्तं हविश्श्वेव दुरात्मवान् ॥ ४२

भीष्मः—

एवमाख्याय समुनिर् यज्ञकारोऽगमत्तदा ।
देवशर्मा महाभागस् ततो भरतसत्तम ॥ ४३

विपुलस्तु वचश्श्रुत्वा गुरोश्चिन्तापरोऽभवत् ।
रक्षां च परमां चक्रे देवराजान्महाबलात् ॥ ४४

किं नु शक्यं मया कर्तुं गुरुदाराभिरक्षणम् ।

मायावीह सुरेन्द्रोऽसौ दुर्धर्षश्चापि वीर्यवान् ॥ ४५
नापिधायाश्रमं शक्यो रक्षितुं पाकशासनात् ।
कूटजं वा तथा ह्यस्य नानाविधसरूपता ॥ ४६

वायुरूपेण वा शक्रो गुरुपत्नीं प्रधर्षयेत् ।
तस्मादिमां सम्प्रविश्य रुचिं स्थास्येऽहमद्य वै ॥ ४७

अथ वा पौरुषेणेयं न शक्या रक्षितुं मया ।
बहुरूपो हि भगवाञ्छ्रूयते हरिवाहनः ॥ ४८

सोऽहं योगबलादेनां रक्षिष्ये पाकशासनात् ।
गात्राणि गात्रैरस्याहं सम्प्रवेक्ष्येऽभिरक्षितुम् ॥ ४९

यदा श्लिष्टामिमां पत्नीं मया पश्येत वै गुरुः ।
शप्स्यत्यसंशयं कोपाद् दिव्यज्ञानो महाबलः ॥ ५०

न चेयं रक्षितुं शक्या यथाऽन्या प्रमदा तथा ।
मायावीह सुरेन्द्रोऽसाविह प्राप्नोत्यसंशयम् ॥ ५१

अवश्यं करणीयं हि गुरोरिह च शासनम् ।
यदि त्विष्टमहं कुर्याम् आश्चर्यं स्यात् कृतं मया ॥ ५२

योगेनाहं प्रविश्येह गुरुपत्न्याः कलेवरम् ।
असक्तः पद्मपर्णस्थो जलबिन्दुर्यथाऽचलः ॥ ५३
एवमेव शरीरेऽस्या निवत्स्यामि समाहितः ॥ ५३॥

भीष्मः—

इत्येवं धर्ममालोक्य [1]वेदार्थांश्चैव सर्वशः ।

तपश्च विपुलं दृष्ट्वा गुरोरात्मन एव च ॥ ५४॥

इति निश्चित्य मनसा रक्षां प्रति स भार्गवः ।

अतिष्ठत परं यत्नं यथावच्छृणु पार्थिव ॥ ५५॥

गुरुपत्नीमुपासीनो विपुलस्सुमहातपाः ।

उपासीनामनिन्द्याङ्गीं कथार्थैस्समलोभयत् ॥ ५६॥

नेत्राभ्यां नेत्रयोरस्या रश्मीन् संयोज्य रश्मिभिः ।

एवं स विपुलः कायं प्राविशत् पवनो यथा ॥ ५७॥

लक्षणं लक्षणेनैव वदनं वदनेन च ।

अविचेष्टन्नतिष्ठद्वै छायेवान्तर्गतो मुनिः ॥ ५८॥

ततो विष्टभ्य विपुलो गुरुपत्न्याः कलेवरम् ।

उवास रक्षणे युक्तो न च सा तमबुध्यत ॥ ५९॥

यं कालं नागतो राजन् गुरुस्तस्य महात्मनः ।

क्रतुं समाप्य स्वगृहं तं कालं सोऽभ्यरक्षत ॥ ६०॥

ततः कदाचिद्देवेन्द्रो दिव्यरूपवपुर्धरः ।

इदमन्तरमित्येव तदाऽभ्यागात् तदाश्रमम् ॥ ६१॥

रूपमप्रतिमं कृत्वा लोभनीयं जनाधिप ।

1. क-घ—वेदशास्त्रांश्च

* सर्वेषु कोशेषु असंवाध्यायसमाप्तिर्दृश्यते

दर्शनीयतमो भूत्वा प्रविवेश तदाश्रमम् ॥ ६२॥

स ददर्श तमासीनं विपुलस्य कलेवरम् ।
निश्चेष्टं स्तब्धनयनं यथाऽऽलेख्यगतं तथा ॥ ६३॥

रुचिं च रुचिराकारां पीनश्रोणिपयोधराम् ।
पद्मपत्रविशालाक्षीं सम्पूर्णेन्दुनिभाननाम ॥ ६४॥

सा तमालोक्य सहसा प्रत्युत्थातुमियेष ह ।
रूपेण विस्मिता कोऽसीत्यथ वक्तुमिहैच्छत ॥ ६५॥

उत्थातुकामा तु सती व्यतिष्ठद् विपुलेन सा ।
निगृहीता मनुष्येन्द्र न शशाक विचेष्टितुम ॥ ६६॥

तामाबभाषे देवेन्द्रस् साम्ना परमवल्गुना ॥ ६७

देवेन्द्रः—

त्वदर्थमागतं विद्धि देवेन्द्रं मां शुचिस्मिते ॥ ६७॥

क्लिश्यमानमनङ्गेन त्वत्सङ्कल्पोद्भवेन वै ।
तत् पर्याप्नुहि मां सुभ्रु पुरा कालोऽतिवर्तते ॥ ६८॥

भीष्मः—

तमेवंवादिनं शक्रं शुश्राव विपुलो मुनिः ।
गुरुपत्न्याश्शरीरस्थो ददर्श च सुराधिपम् ॥ ६९॥

न शशाक च सा राजन् प्रत्युत्थातुमनिन्दिता ।
वक्तुं च नाशकद्राजन् विष्टब्धा विपुलेन सा ॥ ७०॥

आकारं गुरुपत्न्यास्तु विज्ञाय स भृगूत्तमः ।
निजग्राह महातेजा योगेन बलवत् प्रभो ॥ ७१॥
बबन्ध योगबन्धैश्च तस्यास्सर्वेन्द्रियाणि सः ।
निर्विकारां स दृष्ट्वैव पुनरेव शचीपतिः ॥ ७२॥
उवाच व्रीडितो राजंस् तां योगबलमोहिताम् ॥ ७३
एह्येहीति ततस्सा तं प्रतिवक्तुमियेष ह ।
स तां वाचं गुरोः पत्न्या विपुलः पर्यवर्तयत् ॥ ७४
भोः किमागमने कृत्यम् इति तस्याश्च निस्सृता ।
वक्त्राच्छशाङ्कप्रतिमाद् वाणी संस्कारभूषिता ॥ ७५
व्रीडिता सा तु तद्वाक्यम् उक्त्वा परवशं गता ।
पुरन्दरस्तु सन्त्रस्तो बभूव विमनास्तदा ॥ ७६
एतद्वैकृतमालक्ष्य देवराजो विशां पते ।
अवैक्षत सहस्राक्षस् तदा दिव्येन चक्षुषा ॥ ७७
ददर्श च मुनिं तस्याश् शरीरान्तरगोचरम् ।
प्रतिबिम्बमिवादर्शे गुरुपत्न्याश्शरीरगम् ॥ ७८
स तं घोरेण तपसा युक्तं दृष्ट्वा पुरन्दरः ।
प्रावेपत सुसन्त्रस्तो व्रीडितश्च तथा विभो ॥ ७९
विमुच्य गुरुपत्नीं तां विपुलस्सुमहातपाः ।
स्वं कलेबरमाविश्य शक्रं भीतमथाब्रवीत् ॥ ८०

विपुलः—

अजितेन्द्रिय पापात्मन् कामात्मक पुरन्दर ।
न चिरं पूजयिष्यन्ति देवास्त्वां मानवास्तदा ॥ ८१

किञ्चैतद्विस्मृतं शक्र न तन्मनसि ते स्थितम् ।
गौतमेनासि तन्मुक्तो भगाङ्कपरिचिह्नितः ॥ ८२

जाने त्वां बालिशमतिम् अकृतात्मानमस्थिरम् ।
मयेयं रक्ष्यते मूढ गच्छ पाप यथागतम् ॥ ८३

नाहं त्वामद्य मूढात्मन् निर्दहेयं स्वतेजसा ।
कृपायमानस्तु न ते दग्धुमिच्छामि वासव ॥ ८४

स च घोरतपा धीमान् गुरुर्मे पापचेतसम् ।
दृष्ट्वा त्वां निर्दहेदद्य क्रोधदीप्तेन चक्षुषा ॥ ८५

नैवं तु शक्र कर्तव्यं ननु मान्याश्च ते द्विजाः ।
[1]मा गमस्सपुरामात्यो लयं ब्रह्मबलार्दितः ॥ ८६

अमरोऽस्मीति यद्बुद्धिं एतामास्थाय वर्धसे ।
नावमंस्था न तपसाम् असाध्यं नाम विद्यते ॥ ८७

भीष्मः—

तच्छ्रुत्वा वचनं शक्रो विपुलस्य महात्मनः ।
न किञ्चिदुक्त्वा त्वरितं तत्रैवान्तरधीयत ॥ ८८

---

1. क-ब—इदमर्धं नास्ति

याते मुहूर्ते शक्रे तु देवशर्मा महातपाः ।
कृत्वा यज्ञं यथाकामम् आजगाम स्वमाश्रमम् ॥ ८९

आगते तु गुरौ राजन् विपुलः प्रियकर्मकृत् ।
रक्षितां गुरवे भार्यां न्यवेदयदनिन्दिताम् ॥ ९०

अभिवाद्य च शान्तात्मा तं गुरुं गुरुवत्सलः ।
विपुलः पर्युपातिष्ठद् यथापूर्वमशङ्कितः ॥ ९१

विश्रान्ताय ततस्तस्मै सहासीनाय भार्यया ।
निवेदयामास तदा विपुलश्शक्रकर्म तत् ॥ ९२

तच्छ्रुत्वा स मुनिस्तुष्टो विपुलस्य प्रतापवान् ।
बभूव शीलवृत्ताभ्यां तपसा नियमेन च ॥ ९३

विपुलस्य तपोवृत्तिं भक्तिमात्मनि च प्रभुः ।
धर्मे च स्थिरतां दृष्ट्वा साधु साध्वित्युवाच ह ॥ ९४

प्रतिनन्द्य च धर्मात्मा नित्यं धर्मपरायणः ।
वरेण च्छन्दयामास स तस्माद्गुरुवत्सलः ॥ ९५

अनुज्ञातश्च गुरुणा चचारानुत्तमं तपः ॥ ९५॥

तथैव देवशर्माऽपि सभार्यस्स महातपाः ।
निर्भयो बलवृत्रघ्नाच् चचार विजने वने ॥ ९६॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

विपुलस्त्वकरोत्तीव्रं तपः कृत्वा गुरोर्वचः ।
तपोयुक्तमथात्मानम् अमन्यत च वीर्यवान् ॥ ९७॥

स तेन कर्मणा स्वर्गं पृथिवीं पृथिवीपते ।
चचार गतभीः प्रीतो लब्धकीर्तिवरो नृपु ॥ ९८॥

उभौ लोकौ जितौ राजन्नमन्यत महामुनिः ।
कर्मणा तेन कौरव्य तपसा विपुलेन च ॥ ९९॥

अथ काले व्यतिक्रान्ते कस्मिंश्चित् कुरुनन्दन ।
रुच्या भगिन्या स्थानं तु बभूव धनधान्यवत् ॥ १००॥

एतस्मिन्नेव काले तु दिव्या काचिद्वराङ्गना ।
बिभ्रती परमं रूपं जगामाथ विहायसा ॥ १०१॥

तस्याश्शरीरात् पुष्पाणि पतितानि महीतले ।
तस्याश्रमस्याविदूरे दिव्यगन्धानि भारत ॥ १०२॥

पुष्पाणि तान्यगृह्णात् सा रुचिर्नलिनलोचना ।
तथा चित्ररथस्तत्र ह्यङ्गेभ्यः क्षिप्रमागमत् ॥ १०३॥

तस्या हि भगिनी तात स्मृता नाम्ना प्रभावती ।
भार्या चित्ररथस्याथ बभूवाङ्गेश्वरस्य वै ॥ १०४॥

पिनह्य तानि पुष्पाणि केशेषु वरवर्णिनी ।
आमन्त्रिता ततोऽगच्छद् रुचिरङ्गपतेर्गृहान ॥ १०५॥

पुष्पाणि तानि दृष्ट्वाऽथ तदाऽङ्गेन्द्रवराङ्गना ।

भगिनीं चोदयामास पुष्पार्थे चारुलोचनाम् ॥ १०६॥
[1]सा भर्त्रे सर्वमाचष्ट रुचिस्सुरुचिराङ्गना ।
भगिन्या भाषितं सर्वम् ऋषिस्तत्राभ्यनन्दत ॥ १०७॥
ततो विपुलमानाय्य देवशर्मा महातपाः ।
पुष्पार्थे चोदयामास गच्छ गच्छेति भारत ॥ १०८॥
विपुलस्तु गुरोर्वाक्यम् अविचार्य महातपाः ।
स तथेत्यब्रवीद्राजंस् तं च देशं जगाम ह ॥ १०९॥
यस्मिन् देशे तु तान्यासन् पतितानि नभस्स्थलात् ।
अथाम्लानानि तत्रासन् कुसुमान्यपराण्यपि ॥ ११०॥
ततस्स तानि जग्राह दिव्यानि रुचिराण्यथ ।
प्राप्तानि स्वेन तपसा दिव्यगन्धानि भारत ॥ १११॥
सम्प्राप्य तानि प्रीतात्मा गुरोर्वचनकारकः ।
ततो जगाम नगरीं चम्पां चम्पकमालिनीम् ॥ ११२॥
स वने [2]निर्जने तात ददर्श मिथुनं नृणाम् ।
चक्रवत् परिवर्तन्तं गृहीत्वा पाणिना करम् ॥ ११३॥
तत्रैकं तूर्णमगमत् तत्पदे परिवर्तयन् ।
एकं तु न तथा राजंस् चक्रतुः कलहं ततः ॥ ११४॥
त्वं शीघ्रं गच्छसीत्येकोऽब्रवीन्नेति तथा परः ।

1. क-घ—इदमर्धं नास्ति 2. क-घ—नन्दने

पतितेति च तौ तात परस्परमथोचतुः ॥ ११५॥

तयोर्विस्पर्धतोरेवं शपथोऽयमभूत्तदा ।
मनसोद्दिश्य विपुलं ततो वाक्यमथोचतुः ॥ ११६॥

आवयोरनृतं प्राह यस्तस्याथ द्विजस्य वै ।
विपुलस्य परे लोके या गतिस्सा भवेदिति ॥ ११७॥

एतच्छ्रुत्वा तु विपुलो विषण्णवदनोऽवदत् ॥ ११८

विपुलः—

एतत्तीव्रतपाश्चायं कष्टश्चायं परिग्रहः ॥ ११८॥

मिथुनस्यास्य किं मे स्यात् कृतं पापं यतो गतिः ।
अनिष्टा सर्वभूतानां कीर्तिताऽनेन मेऽद्य वै ॥ ११९॥

भीष्मः—

एवं सञ्चिन्तयन्नेव विपुलो राजसत्तम ।
अवाङ्मुखो न्यस्तशिरा दध्यौ दुष्कृतमात्मनः ॥ १२०॥

ततष्षडन्यान् पुरुषान् अक्षैः काञ्चनराजतैः ।
अपश्यद्दीव्यमानांश्च लोभामर्षान्वितांस्तदा ॥ १२१॥

कुर्वतश्शपथं तं वै यः कृतो मिथुनेन वै ।
विपुलं वै समादिश्य तेऽपि वाक्यमथाब्रुवन् ॥ १२२॥

पुरुषाः—

यो लोभमास्थायास्माकं विषमं कर्तुमुत्सहेत् ।
विपुलस्य परे लोके या गतिस्तामवाप्नुयात् ॥ १२३॥

भीष्मः—

एतच्छ्रुत्वा तु विपुलो नापश्यद्धर्मसङ्करम् ॥ १२४

जन्मप्रभृति कौरव्य कृतपूर्वमथात्मनः ।
सम्प्रदध्यौ महाराजन्नभावग्निरिवाहितः ॥ १२५

दह्यमानेन मनसा वचश्श्रुत्वा तथाविधम् ॥ १२५॥

तत्र चिन्तयतस्तात वह्नीर्वाचो निशम्य तु ।
इदमासीन्मनसि च रुच्या रक्षणकारितम् ॥ १२६॥

लक्षणं लक्षणेनैव वदनं वदनेन च ।
विधाय च मया प्रोक्तं सत्यमेतद्गुरोस्तथा ॥ १२७॥

एतदात्मनि कौरव्य दुष्कृतं विपुलस्तदा ।
अमन्यत महाभाग तथा तच्च न संशयः ॥ १२८॥

स चम्पां नगरीमेत्य पुष्पाणि गुरवे ददौ ।
पूजयामास च गुरुं विधिवत् स गुरुप्रियः* ॥ १२९॥

तमागतमभिप्रेक्ष्य शिष्यं वाक्यमथाब्रवीत् ।
देवशर्मा महातेजा यत्तच्छृणु नराधिप ॥ १३०॥

देवशर्मा—

किं त्वया मिथुनं दृष्टं तस्मिन्नद्य महावने ।
ते त्वां जानन्ति निपुण आत्मा च रुचिरेव च ॥ १३१॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

विपुलः—

ब्रह्मर्षे मिथुनं किं तत् के च षट् पुरुषा विभो ।
ये मां जानन्ति तत्त्वेन तांश्च मे वक्तुमर्हसि ॥　१३२॥

देवशर्मा—

यद्वै तन्मिथुनं ब्रह्मन्नहोरात्रं च विद्धि तत् ।
चक्रवत् परिवर्तेत ते तज्जानाति दुष्कृतम् ॥　१३३॥
ये च ते पुरुषा विप्र अक्षैर्दीव्यन्ति हृष्टवत् ।
ऋतूंस्तानभिजानीहि ते ते जानन्ति दुष्कृतम् ॥　१३४॥
न मां कश्चिद्विजानाति इति कृत्वा न विश्वसेत् ।
नरो मुह्यति पापात्मा पापकर्मा क्वचिद् द्विज ॥　१३५॥
कुर्वाणं हि नरं क्षिप्रं पापं रहसि सर्वदा ।
पश्यन्ति ऋतवश्चापि तथा दिननिशेऽच्युत ॥　१३६॥
त्वां तु वर्त्मस्थितं दृष्ट्वा गुरोः कर्मानिवेदकम् ।
स्मारयन्तस्तथा प्राहुस् ते यथा श्रुतवान् भवान् ॥　१३७॥
अहोरात्रं विजानाति ऋतवश्चापि नित्यशः ।
पुरुषे पापकं कर्म शुभं वाऽशुभकर्म वा ॥　१३८॥
तत्त्वगा वै तथा कार्यं व्यभिचारभयात्मकम् ।
नाख्यातमिति जानन्तस् ते त्वामाहुस्तथा द्विज ॥　१३९॥
ते चैव हि भवेयुस्ते लोकाः पापकृतां यथा ।

कृत्वा नाचक्षतः कर्म मम यच्च त्वया कृतम् ॥ १४०॥

तथाऽशक्याश्च दुर्वृत्ता रक्षितुं प्रमदा द्विज ।
न च त्वं कृतवान् किञ्चिद् आगः प्रीतोऽस्मि तेन ते ॥ १४१॥

[1]मनोदोषविहीनानां न दोषस्स्यात्तथा तव ।
अन्यथाऽऽलिङ्ग्यते कान्ता स्नेहेन दुहिताऽन्यथा ॥ १४२॥

यतेश्च कामुकानां च योषिद्रूपेऽन्यथा मतिः ।
अशिक्षयैव मनसः प्रायो लोकस्तु वञ्च्यते ॥ १४३॥

लोलेन्युद्विजते लोको वक्रामिव इति स्पृहा ।
अवन्धायोग्यमनसां यदि मन्त्रात्मदैवकम् ॥ १४४॥

न रागस्नेहलोभान्धं कर्मिणां तन्महाफलम् ।
निष्कषायो विशुद्धस्त्वं रुच्यावेशान्न दूषितः ॥ १४५॥

यदि त्वहं त्वां दुर्वृत्तम् अद्राक्षं द्विजसत्तम ।
शपेयं त्वामहं क्रोधान्न मेऽत्रास्ति विचारणा ॥ १४६॥

सज्जन्ते पुरुषे नार्यस् सोऽर्थः पुंसश्च पुष्कलः ।
अन्यथा रक्षनाइशापो भविष्यति गतिश्च सा ॥ १४७॥

रक्षिता सा त्वया पुत्र मम चापि निवेदिता ।
अहं ते प्रीतिमांस्तात स्वस्ति स्वर्गं गमिष्यसि ॥ १४८॥

1. अ—अर्धाष्टकं नास्ति

भीष्मः—

इत्युक्त्वा विपुलं प्रीतो देवशर्मा महानृषिः ।
मुमोद स्वर्गमास्थाय सहभार्यस्सशिष्यकः ॥ १४९॥

इदमाख्यातवांश्चापि ममाख्यानं महाद्युतिः ।
मार्कण्डेयः पुरा राजन् गङ्गाकूले तथोत्तरे ॥ १५०॥

तथा ब्रवीमि पार्थ त्वां स्त्रियस्सन्त्वासदेव च ।
उभयं दृश्यते स्त्रीषु सततं साध्वसाधु च ॥ १५१॥

स्त्रियस्साध्व्यो महाभागास् सम्मता लोकमातरः ।
धारयन्ति महीं राजन्निमां सवनकाननाम् ॥ १५२॥

असद्वृत्ताश्च दुर्वृत्ताः कुलघ्नाः पापनिश्चयाः ।
विज्ञेया लक्षणैर्दुष्टैस् सगोत्रसहजैर्नृप ॥ १५३॥

एवमेतासु रक्षा वै शक्या कर्तुं महात्मभिः ।
अन्यथा राजशार्दूल न शक्या रक्षितुं स्त्रियः ॥ १५४॥

एता हि मनुजव्याघ्र तीक्ष्णास्तीक्ष्णपराक्रमाः ।
नासामस्ति प्रियो नाम मैथुने न समो नृभिः ॥ १५५॥

एताः कृत्याश्च कष्टाश्च कृतघ्ना भरतर्षभ ।
न चैकस्मिन् सुनियताः पुरुषे पाण्डुनन्दन ॥ १५६॥

नासु स्नेहो नृभिः कार्यस् तथैवेर्ष्या जनेश्वर ।
खेदमास्थाय भुञ्जीत धर्ममास्थाय चैव हि ॥ १५७॥

अनृताविह पर्वादिदोषवर्जं नराधिप ॥ १५८

विहन्येतान्यथा कुर्वन् नरः कौरवनन्दन ।
सर्वथा राजशार्दूल युक्तस्सर्वत्र युज्यते ॥ १५९

तेनैकेन तु रक्षा वै विपुलेन कृता स्त्रियाः ।
नान्यश्शक्तो नृलोकेऽस्मिन् रक्षितुं नृप योषितः ॥ १६०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
[ अस्मिन्नध्याये १६० श्लोकाः ]

---

## ॥ चत्वारिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति विवाहविभागकथनम् ॥ १ ॥ तथा कन्यानां भार्यात्वप्रापकविद्यादिनिरूपणम् ॥ २ ॥

---

युधिष्ठिरः—

यन्मूलं सर्वधर्माणां प्रजनस्य गृहस्य च ।
पितृदेवातिथीनां च तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अयं हि सर्वधर्माणां धर्मश्चिन्त्यतमो मतः ।
कीदृशाय प्रदेया स्यात् कन्येति वसुधाधिप ॥ २

शीलवृत्ते समाज्ञाय विद्यां योनिं च कर्म च ।

अद्भिरेव प्रदातव्या कन्या गुणवते भवेत् ॥ ३

ब्राह्मणानां सतामेष धर्मो नित्यं युधिष्ठिर ॥ ३॥

आर्षेण चावहेदेवं यो दद्यादनुकूलिने ।

शिष्टानां क्षत्रियाणां च धर्म एष सनातनः ॥ ४॥

[1]अप्यभिप्रेतमुत्सृज्य कन्याभिप्रेत एव सः ।

अभिप्रेता च या यस्य तस्मै देया युधिष्ठिर ॥ ५॥

गान्धर्वमिति तं धर्मं आहुर्धर्मविदो जनाः ॥ ६

धनेन बहुधा क्रीत्वा सम्प्रलोभ्य च बान्धवान् ।

असुराणां नृपाणां वै धर्ममाहुर्मनीषिणः ॥ ७

हत्वा छित्त्वा च शीर्षाणि रुदतीं रुदतीं गृहात् ।

प्रसह्याहरणं तात राक्षसं धर्मलक्षणम् ॥ ८

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ।

स पापिष्ठो विवाहानां पैशाचः कथितोऽधमः ॥ ९

पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ युधिष्ठिर ।

पैशाचश्चासुरश्चैव न कर्तव्यौ कथञ्चन ॥ १०

ब्राह्मः क्षात्रोऽथ गान्धर्व एते धर्म्या नरर्षभ ।

पृथग्वा यदि वा मिश्राः कर्तव्या नात्र संशयः ॥ ११

तिस्रो भार्या ब्राह्मणस्य द्वे भार्ये क्षत्रियस्य तु ।

1. क-ख—अनभिप्रेत

वैश्यस्स्वजातिं विन्देत तास्वपत्यं हितायति ॥ १२

द्विजस्य ब्राह्मणी श्रेष्ठा क्षत्रिया क्षत्रियस्य तु ।
रत्यर्थमपि शूद्रा स्यान्नेत्याहुरपरे जनाः ॥ १३

अपत्यजन्म शूद्रायां न प्रशंसन्ति साधवः ।
शूद्रायां जनयन् विप्रः प्रायश्चित्तमवाप्नुयात् ॥ १४

नातिबालां वहन्त्यन्ये अनित्यत्वात् प्रजार्थिनः ।
वहन्ति कर्मिणस्तस्याम् अन्तश्शुद्धिव्यपेक्षया ॥ १५

अपरान्वयसम्भूतां दुस्स्वप्नादिविवर्जिताम् ।
कामो यस्यां निषिद्धश्च केचिदिच्छन्ति चापदि ॥ १६

त्रिंशद्वर्षो दशवर्षां यो विन्देत न नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥ १७

[1]यस्यास्तु न भवेद्भ्राता पिता माता च भारत ।
नोपगच्छेत तां जातु पुत्रिकाधर्मिका हि सा ॥ १८

त्रीणि वर्षाण्युदीक्षेत कन्या ऋतुमती सती ।
चतुर्थेऽत्वथ सम्प्राप्ते स्वयं भर्तारमाव्रजेत् ॥ १९

प्रजनो हीयते तस्या रतिश्च भरतर्षभ ।
[2]अतोऽन्यथा वर्तमाना भवेद्वाच्या प्रजापतेः ॥ २०

---

1. अ-क-ख-घ—न स्त्रीं बालां वहन्त्यन्ये ह्यनित्यत्वात् प्रजार्थिनः ।
[ अधिकः पाठः ]

2. क-घ—अर्धचतुष्टयं नास्ति

असपिण्डा च या मातुर् असगोत्रा च या पितुः ।
इत्येतामुपयच्छेत तं धर्मं मनुरब्रवीत् ॥ २१

युधिष्ठिरः—

शुल्कमन्येन दत्तं स्याद् ददानीत्याह चापरः ।
बलादन्यः प्रभाषेत धनमन्यः प्रदर्शयेत् ॥ २२

पाणिं ग्रहीता त्वन्यस्स्यात् कस्य कन्या पितामह ।
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ॥ २३

भीष्मः—

यत् किञ्चित् कर्म मानुष्यं सन्तानाय प्रवर्तते ।
मन्त्रवन्मन्त्रतस्तस्या मृषावादस्त्वपातकः ॥ २४

भार्यापत्यृत्विगाचार्याश् शिष्योपाध्याय एव च ।
मृषोक्तौ दण्डमर्हन्ति नेत्याहुरपरे जनाः ॥ २५

न ह्यकामेन संवादं मनुरेवं प्रशंसति ।
अयशस्यमधर्म्यं च यन्मृषा धर्मगोपनम् ॥ २६

नैकान्तदोष एकस्मिन्नुद्यानेनोपलभ्यते ॥ २६॥

धर्मतो यां प्रयच्छन्ति यां वा क्रीणन्ति भारत ।
बन्धुभिस्समनुज्ञातो मन्त्रानेवं प्रयोजयेत् ॥ २७॥

तदा सिध्यन्ति ते मन्त्रा नादत्तायाः कथञ्चन ॥ २८

यस्त्वत्र मन्त्रस्समये भार्यापत्योर्मिथः कृतः ।

[1]तमेवाहुर्गरीयांसं यश्चासौ ज्ञातिभिः कृतः ॥ २९

देवदत्तां पतिर्भार्यां वेत्ति धर्मस्य शासनात् ।
सा दैवीं मानुषीं वाचम् अनृतां पर्युदस्यति ॥ ३०

युधिष्ठिरः—
कन्यायां प्राप्तशुल्कायां ज्यायांश्चेदाव्रजेद्वरः ।
धर्मकामार्थसम्पन्नो वाच्यमत्रानृतं न वा ॥ ३१

तस्मिन्नुभयतो दोषे कुर्वञ् श्रेयस्समाचरेत् ।
अयं तु सर्वधर्माणां धर्मश्चिन्त्यतमो मतः ॥ ३२

तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ।
तदेतत् सर्वमाचक्ष्व न हि तृप्यामि कथ्यताम् ॥ ३३

भीष्मः—
न वै निष्ठाकरं शुल्कं [2]जात्वासीत्तेन नानृतम् ।
न हि शुल्कपरास्सन्तः कन्यां ददति कर्हिचित् ॥ ३४

अन्यैर्गुणैरुपेतं तु शुल्कं [3]वाञ्छन्ति बान्धवाः ॥ ३४॥

अलङ्कृतां वहस्वेति यो दद्यादनुकूलतः ।
तच्च तावद्ददात्येव न शुल्कं विक्रयो हि सः ॥ ३५॥

प्रतिगृह्य भवेद्देयम् एष धर्मस्सनातनः ॥ ३६

दास्यामि भवते कन्याम् इति पूर्वं न भाषितम् ॥ ३६॥

---

1. क-घ—इदमर्धं नास्ति 2. ख-घ—ज्ञात्वाऽऽ
3. क-घ—याचन्ति

ये चैवाहुर्ये च नाहुर्ये ये चावश्यं ददत्युत ।
तस्मादाग्रहणात् पाणेर् ये वदन्ति परस्परम् ॥ ३७॥

कन्यावरः पुरा दत्तो मरुद्भिरिति नश्श्रुतम् ॥ ३८

नानिष्टाय प्रदातव्या कन्या इत्यृषिचोदना ।
तन्मूलं काममूलस्य प्रजनस्येति मे मतिः ॥ ३९

समीक्ष्य च बहून् दोषान् संवादे विद्धिपाणयोः ।
यथा निष्ठाकरं शुल्कं न जात्वासीन् तथा शृणु ॥ ४०

अहं विचित्रवीर्याय द्वे कन्ये समुदावहम् ।
जित्वाऽङ्गमगधान् सर्वान् काशीनपि च कोसलान् ॥ ४१

गृहीतपाणिरेकाऽऽसीन् प्राप्तशुल्काऽपराऽभवन् ।
पाणौ गृहीता तत्रैव विसर्ज्या इति मे पिता ॥ ४२

अब्रवीदितरां कन्यां आवहन् स तु कौरवः ॥ ४२॥

अप्यन्यामनुपप्रच्छ शङ्कमानः पितुर्वचः ।
अतीव ह्यस्य धर्मेप्सा भ्रातुर्मेऽभ्यधिकाऽभवत् ॥ ४३॥

ततोऽहमब्रवं राजन्नाचारेप्सुरिदं वचः ।
आचारं तत्त्वतो वेत्तुम् इच्छामीति पुनः पुनः ॥ ४४॥

ततो मयैवमुक्ते तु वाक्ये वाक्यविदां वरः ।
पिता मम महाराज बाह्लीको:वाक्यमब्रवीत् ॥ ४५॥

[1]यदि वा शुल्कतो निष्ठा न पाणिग्रहणं तथा ।
लाजोमारमुपासीत प्राप्तशुल्का पतिव्रता ॥ ४६॥

न हि धर्मविदः प्राहुः प्रमाणं वाक्यतस्स्मृतिः ।
येषां वै शुल्कतो निष्ठा न पाणिग्रहणं ततः ॥ ४७॥

प्रसिद्धं भाषितं दानं तेषां प्रत्ययसनं पुनः ।
ये मन्यन्ते क्रयं शुल्कं न ते धर्मविदो जनाः ॥ ४८॥

नैव तेभ्यः प्रदातव्या न विक्रेया कथञ्चन ॥ ४९

ये च क्रीणन्ति दार्मीवद् ये च विक्रीणते द्विजाः ।
भवेत्तेषां तथा निष्ठा लुब्धानां पापचेतसाम् ॥ ५०

अस्मिन् धर्मे सत्यवन्तं पर्यपृच्छन्त वै जनाः ॥ ५०॥

जनाः—

कन्यायां प्राप्तशुल्कायां शुल्कदः प्रवसेद्यदि ।
पाणिं ग्रहीता नान्यस्स्याद् अत्र नो धर्मसंशयः ॥ ५१॥

तन्नश्छिन्धि महाप्राज्ञ त्वं हि वै प्राज्ञसत्तमः ।
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान ॥ ५२॥

भीष्मः—

तानेवं ब्रुवतस्सर्वान् सत्यवान् वाक्यमब्रवीत् ॥ ५३

1. अ—नास्तीदमर्धम्

सत्यवान्—

यत्रेष्टं तत्र देया स्यान्नात्र कार्या विचारणा ।
कुर्वते जीवतोऽप्येवं मृते नैवास्ति संशयः ॥ ५४

देवरं प्रविशेत् कन्या [1]तप्येद्वाऽपि महत्तपः ।
तमेवानुव्रता भूत्वा पाणिग्राहस्य नाम सा ॥ ५५

लिखित्वैव तु केषाञ्चिद् अपरेषां शनैरपि ।
इति ये संवदन्त्यत्र त एतं निश्चयं विदुः ॥ ५६

तत्पाणिग्रहणात पूर्वम् उत्तरं यत्र वर्तते ।
सर्वमङ्गलमन्त्रं वै मृषावादस्तु पातकः ॥ ५७

पाणिग्रहणमन्त्राणां निष्ठा स्यात सप्तमे पदे ।
पाणिग्राहस्य भार्या या यस्य चाद्भिः प्रदीयते ॥ ५८

अनुकूलामनुवशां भ्रात्रा दत्तामपापिकाम् ।
परिक्रम्य यथान्यायं भार्यां विन्देद्द्विजोत्तमः ॥ ५९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
[ अस्मिन्नध्याये ५९ श्लोकाः ]

---

1. क-घ—जप्ये

## ॥ एकचत्वारिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति वैवाह्विकविध्यादेर्दायाद्दैतादेश्च कथनम् ॥ १ ॥
भीष्मेण युधिष्ठिरं प्रति स्त्रीणां प्रशंसनम् ॥ २ ॥

युधिष्ठिरः—

कन्यायां प्राप्तशुल्कायां पतिश्चेन्नास्ति कश्चन ।
तत्र का प्रतिपत्तिस्स्यात् तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

या पुत्रकस्य रिक्थस्य प्रतिपन्ना यदा भवेत् ।
अथवा सा हरेच्छुल्कं क्रीता शुल्कप्रदस्य सा ॥ २

तस्यार्थेऽपत्यमिच्छेत येन न्यायेन शक्नुयात् ।
न तस्या मन्त्रवत् कार्यं [1]कश्चित् कुर्वीत किञ्चन ॥ ३

स्वयंवृतेति सा हि स्त्री पित्रा वै प्रतिपद्यते ।
तत्तस्यान्ये प्रशंसन्ति धर्मज्ञा न परे जनाः ॥ ४

एतत्तु नापरे चक्रुर् न परे जातु साधवः ।
साधूनां पुनराचारो गरीयान् धर्मलक्षणः ॥ ५

तस्मिन्नेवम्प्रकारे तु सुक्रतुर्वाक्यमब्रवीत् ।
नप्ता विदेहराजस्य जनकस्य महात्मनः ॥ ६

1. क-ख—केचित्कुर्वन्ति

असदाचरिते मार्गे कथं स्यादनुकीर्तितम् ।
अनुप्रश्नस्संशयो वा सतामेतदुपालभेत् ॥ ७
असदेव हि धर्मस्य प्रमादो धर्म आसुरः ।
नानुशुश्रुम जात्वेव तदिदं पूर्वजन्मसु ॥ ८
भार्यापत्योर्हि सम्बन्धस् स्त्रीपुंसोस्तुल्य एव हि ।
रतिस्साधारणो धर्म इति चाह स पार्थिवः ॥ ९

युधिष्ठिरः—

अथ केन प्रमाणेन पुंसामादीयते धनम् ।
पुत्रवद्धि पितुस्तस्य कन्या भवितुमर्हति ॥ १०

भीष्मः—

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥ ११
मातुश्च यौतकं यत् स्यात् कुमारीभाग एव सः ।
दौहित्र एव वा रिक्थम् अपुत्रस्य पितुर्हरेत् ॥ १२
ददाति हि स पिण्डं वै पितुर्मातामहस्य च ।
पुत्रदौहित्रयोर्नेह विशेषो धर्मतस्स्मृतः ॥ १३
अन्यत्र जायते सोऽपि प्रजया पुत्र ईयते ।
दुहिताऽन्यत्र जायेत पुत्रेणापि विशिष्यते ॥ १४
दौहित्रकेण धर्मेण तत्र पश्यामि कारणम् ।

[1]विक्रीतासु च ये पुत्रा भवन्ति पितुरेव ते ॥ १५
असूयवस्त्वधर्मिष्ठाः परस्वादायिनश्शठाः ।
आसुरादथ सम्भूता धर्माद्विषमवृत्तयः ॥ १६
अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः ।
धर्मज्ञा धर्मशास्त्रेषु निबद्धा धर्मसेतुषु ॥ १७
यो मनुष्यस्स्वकं पुत्रं विक्रीय धनमिच्छति ।
कन्यां वा जीवनार्थाय यश्शुल्केन प्रयच्छति ॥ १८
सप्तवर्षशतं घोरे निरये सान्वयो वसेत् ।
स्वेदं मूत्रं पुरीषं च तत्र प्रेत उपाश्नुते ॥ १९
आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषेति तत् ।
अल्पं वा बहु वा शुल्कं विक्रयस्तावदेव सः ॥ २०
यद्यप्याचरितः कैश्चिन्नैष धर्मः कथञ्चन ।
अन्येषामपि दृश्यन्ते लोभतस्सम्प्रवृत्तयः ॥ २१
वंशाङ्कुरा च नारी सा ये च तामुपभुञ्जते ।
एतस्याः पापहर्तारस् तमस्यन्धेऽधिशेरते ॥ २२
अन्योऽप्यथ न विक्रेयो मनुष्यः किं पुनः प्रजाः ।
अधर्ममूलैर्नियतैर् न तैरर्थोऽस्ति कश्चन ॥* २३

---

1. क-ख—विदितासु
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

प्राचेतसस्य वचनं कीर्तयन्ति पुराविदः ।
यस्याः किञ्चिन्नाददते ज्ञातयो न स विक्रयः ॥ २४

अर्हणं तत् कुमारीणाम् आनृशंस्यं व्रतं च तत् ।
सर्वं च प्रतिदेयं स्यात् कन्यायै तदशेषतः ॥ २५

पितृभिर्भ्रातृभिश्चैव श्वशुरैरथ देवरैः ।
पूज्या लालयितव्याश्च बहुकल्याणमीप्सुभिः ॥ २६

यदि वै स्त्री न रोचेत पुमांसं न प्रमोदयेत् ।
अमोदनात् पुनः पुंसां प्रजनं न प्रवर्धते ॥ २७

पूज्या लालयितव्याश्च स्त्रियो नित्यं जनाधिप ।
अपूजिताश्च यस्यैतास् सर्वास्तस्याफलाः क्रियाः ॥ २८

तदैव तत् कुलं नास्ति यत्र शोचन्ति जामयः ॥ २८॥

कुलानि जामीशप्तानि निकृत्तानीव कृत्यया ॥ २९

नेह भान्ति न वर्धन्ते श्रिया हीनानि पार्थिव ॥ २९॥

स्त्रियः पुंसां परिददौ मनुर्जिगमिषुर्दिवम् ।
अबलास्स्वल्पकौपीनास् सुहृदस्सत्यजिष्णवः ॥ ३०॥

ईर्ष्यवो मानकामाश्च चण्डालसुहृदोऽबुधाः ।
स्त्रियो माननमर्हन्ति ता मानयत मानवाः ॥ ३१॥

स्त्रीप्रत्ययो हि वो धर्मो रतिभोगाश्च केवलः ।

परिचर्या नमस्कारास् तदायत्ता भवन्तु वः ॥ ३२॥

उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रीत्यर्थं लोकयात्रायां पश्यत स्त्रीनिबन्धनम् ॥ ३३॥

सम्मान्यमानाश्चैताभिस् सर्वकर्माण्यवाप्स्यथ ।
विदेहराजदुहिता चात्र श्लोकमगायत ॥ ३४॥

नास्ति यज्ञस्त्रियाः कश्चिन्न श्राद्धं नोपवासकम् ।
धर्मस्तु भर्तृशुश्रूषा तया स्वर्गं जयत्युत ॥ ३५॥

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ ३६॥

श्रिय एतास्त्रियो नाम सत्कार्या भूतिमिच्छता ।
लालिताऽनुगृहीता च श्रीस्त्री भवति भारत ॥ ३७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
[ अस्मिन्नध्याये ३७॥ श्लोकाः ]

---

## ॥ द्विचत्वारिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणादीनां दायविभजनविधिनिरूपणम् ॥

युधिष्ठिरः—

सर्वशास्त्रविधानज्ञ राजर्षे धर्मवित्तम ।
अतीव संशयच्छेत्ता भवान् वै प्रथितः क्षितौ ॥ १
कश्चित्तु संशयोऽस्माकं तन्मे छिन्धि पितामह ।
अस्यामापदि कष्टायाम् अन्यं पृच्छाम कं वयम् ॥ २
यथा च येन कर्तव्यं यश्च धर्मस्सनातनः ।
एतत् सर्वं महाबाहो भवान् व्याख्यातुमर्हति ॥ ३
चतस्रो विहिता भार्या ब्राह्मणस्य पितामह ।
[1]ब्राह्मणी क्षत्रिया वैश्या शूद्रा च रतिमिच्छतः ॥ ४
तत्र जातेषु पुत्रेषु सर्वासां कुरुसत्तम ।
आनुपूर्व्येण कस्तेषां पित्र्यं दायाद्यमर्हति ॥ ५
केन वा किं ततो ग्राह्यं पितृवित्तात् पितामह ।
एतदिच्छामि कथितुं विभागस्तेषु कस्स्मृतः ॥ ६

भीष्मः—

ब्राह्मणः क्षत्रियो वैश्यस् त्रयो वर्णा द्विजातयः ।

1. क—अर्धचतुष्टयं नास्ति

एतेषु विहितो धर्मो ब्राह्मणस्य युधिष्ठिर ॥ ७
वैषम्यादथ वा लोभात् कामाद्वाऽपि परन्तप ।
ब्राह्मणस्य भवेच्छूद्रा न तु दृष्टा न तु स्मृता ॥ ८
शूद्रां शयनमारोप्य ब्राह्मणः पतितो भवेत् ।
प्रायश्चित्तीयते चापि विधिदृष्टेन कर्मणा ॥ ९
तत्र जाते[1]षु पुत्रेषु विगुणस्य युधिष्ठिर ।
अतस्ते नियमं वित्ते सम्प्रवक्ष्यामि भारत ॥ १०
दशधा प्रविभक्तस्य स तस्यैव भवेत् क्रमः ।
सवर्णासु प्रजातानां समान् भागान् प्रकल्पयेत् ॥ ११
अब्राह्मणं तु मन्यन्ते शूद्रापुत्रं तु भारत ।
आनृशंस्यं परो धर्म इति तस्मै प्रदीयते ॥ १२
यदि वाप्येकपुत्रस्स्याद् अपुत्रो यदि वा भवेत् ।
नाधिकं दशमाद्द्याच् छूद्रापुत्राय भारत ॥ १३
[2]स्मृत एकश्चतुर्भागः कन्याभागस्तु धर्मतः ।
अभ्रातृका समग्रार्हा चार्धस्येत्यपरे विदुः ॥ १४
त्रैवार्षिकाद्यदा भक्ताद् अधिकं स्याद्विजस्य तु ।
यजेत तेन द्रव्येण न वृथा साधयेद्धनम् ॥ १५

1. अ—ष्वपत्येषु
2. क-घ—अर्धद्वयं नास्ति

त्रिसाहस्रावरो दायस् स्त्रिया देयो धनस्य वै ।
तच्चतुर्धा धनं दत्तं नादत्तं भोक्तुमर्हति ॥ १६

स्त्रीणां तु [1]पतिदायाद्यम् उपभोगफलं धनम् ।
नापहारं स्त्रियः कुर्युः पितृवित्तात् कथञ्चन ॥ १७

स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं युधिष्ठिर ।
ब्राह्मण्यास्तद्धरेत् कन्या यथा पुत्रस्तथाऽस्य सा ॥ १८

सा हि पुत्रसमा राजन् विहिता कुरुनन्दन ।
एवमेतत् समुद्दिष्टं धर्मेषु भरतर्षभ ॥ १९

एवं धर्ममनुस्मृत्य न वृथा साधयेद्धनम् ॥ १९॥

युधिष्ठिरः—

शूद्रायां ब्राह्मणाज्जातो यद्यदेयधनस्स्मृतः ।
केन प्रीतिविशेषेण दशमो ह्यस्य दीयते ॥ २०॥

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणस्स्यान्न संशयः ।
क्षत्रियायां तथैव स्याद् वैश्यायामपि चैव हि ॥ २१॥

कस्मात्ते विषमं भागं भजेरन् नृपसत्तम ।
यदा सर्वे त्रयो वर्णास् त्वयोक्ता ब्राह्मणा इति ॥ २२॥

भीष्मः—

दारा इत्युच्यते लोके नाम्नैकेन परन्तप ।

---

1. क-घ—पतितो यत्स्यादुप

प्रोक्तेन चैकनाम्नाऽयं विशेषस्सुमहान् भवेत् ॥ २३॥
तिस्रः कृत्वा पुरो भार्याः पश्चाद्विन्देत ब्राह्मणीम् ।
सा च ज्येष्ठा सा च पूज्या सा च ताभ्यो गरीयसी ॥ २४॥
स्नानं प्रसाधनं भर्तुर् दन्तधावनमञ्जनम् ।
हव्यं कव्यं च यच्चान्यद् धर्मयुक्तं गृहे भवेत् ॥ २५॥
न तस्यां जातु तिष्ठन्त्याम् अन्या तत् कर्तुमर्हति ।
ब्राह्मणी त्वेव तत् कुर्याद् ब्राह्मणस्य युधिष्ठिर ॥ २६॥
अन्नं पानं च माल्यं च वासांस्याभरणानि च ।
ब्राह्मण्यैतानि देयानि भर्त्रा सा हि गरीयसी ॥ २७॥
मनुना विहितं शास्त्रं यच्चापि कुरुनन्दन ।
धात्राऽप्येष महाराज दृष्टो धर्मस्सनातनः ॥ २८॥
अथ चेदन्यथा कुर्याद् यथाकामं युधिष्ठिर ।
[1]यथा ब्राह्मणचण्डालः पूर्वदृष्टस्तथैव सः ॥ २९॥
ब्राह्मण्यास्सदृशः पुत्रः क्षत्रियायाश्च यो भवेत् ।
राजन् विशेषो नास्त्यत्र वर्णयोरुभयोरपि ॥ ३०॥
न तु जात्या समा लोके ब्राह्मण्याः क्षत्रिया भवेत् ।
ब्राह्मण्याः प्रथमः पुत्रो भूयान् स्याद् राजसत्तम ॥ ३१॥
भूयोऽपि भूयसा भाव्यं पितृवित्ताद् युधिष्ठिर ।

1. अ—इदमर्धद्वयं नास्ति

यथा न सदृशी जात्या ब्राह्मण्याः क्षत्रिया भवेत् ॥　३२॥

[1]क्षत्रियायास्तथा वैश्या न जातु सदृशी भवेत् ।
श्रीश्च राज्यं च कोशश्च क्षत्रियाणां युधिष्ठिर ॥　३३॥

विहिता दृश्यते राजन् सागरान्ता च मेदिनी ।
क्षत्रियो हि स्वधर्मेण श्रियं प्राप्नोति भूयसीम् ॥　३४॥

राजा दण्डधरो राजन् रक्षा नान्यत्र क्षत्रियात् ॥　३५

ब्राह्मणा हि महाभागा देवानामपि देवताः ।
तेषु राजा प्रवर्तेत पूजया विधिपूर्वकम् ॥　३६

प्रणीतमृषिभिर्ज्ञात्वा धर्मं शाश्वतमव्ययम् ।
लुप्यमानास्स्वधर्मेण क्षत्रियो रक्षति प्रजाः ॥　३७

दस्युभिर्ह्रियमाणं च धनं दारांश्च सर्वशः ।
सर्वेषामेव वर्णानां त्राता भवति पार्थिवः ॥　३८

भूयान् स्यात् क्षत्रियापुत्रो वैश्यापुत्रान्न संशयः ।
भूयस्तेनापि हर्तव्यं पितृवित्ताद्युधिष्ठिर ॥　३९

युधिष्ठिरः—

उक्तो विभागो विधिवद् ब्राह्मणस्वे पितामह ।
इतरेषां तु वर्णानां कथं तु नियमो भवेत् ॥　४०

---

1. क-घ—इदमर्धं नास्ति

भीष्मः—

क्षत्रियस्यापि भार्ये द्वे विहिते कुरुनन्दन ।
तृतीया या भवेच्छूद्रा न तु दृष्टा न तु स्मृता ॥ ४१

एष एव क्रमो हि स्यात् क्षत्रियाणां युधिष्ठिर ।
अष्टधा तु भवेत् कार्यं क्षत्रियाणां युधिष्ठिर ॥ ४२

क्षत्रियाया हरेत् पुत्रश् चतुरोंशान् पितुर्धनात् ।
युक्तोपचारिकं यच्च पितुस्स्यान् स हरेच्च तत् ॥ ४३

वैश्यापुत्रस्तु भागांस्त्रीञ् शूद्रापुत्रस्तथाऽष्टमम् ।
सोऽपि वित्तं हरेत् पित्रा नादत्तं कर्तुमर्हति ॥ ४४

एकैव हि भवेद्भार्या वैश्यस्य कुरुनन्दन ।
द्वितीया या भवेच्छूद्रा न तु दृष्टा न तु स्मृता ॥ ४५

वैश्यस्य वर्तमानस्य वैश्यायां भरतर्षभ ।
शूद्रायाश्चैव कौन्तेय तयोर्विनिमयस्स्मृतः ॥ ४६

पञ्चधा तु भवेत् कार्यं वैश्यस्वं भरतर्षभ ।
तयोरपीह पश्यामि विभागं च जनाधिप ॥ ४७

वैश्यापुत्रेण हर्तव्याश् चत्वारोंशाः पितुर्धनात् ।
पञ्चमस्तु भवेद् भागश् शूद्रापुत्राय भारत ॥ ४८

सोऽपि दत्तं हरेत् पित्रा नादत्तं कर्तुमर्हति ।
त्रिभिर्वर्णैस्तथा जातश् शूद्रो देयधनो भवेत् ॥ ४९

शूद्रस्य स्यात् सवर्णैव भार्या नान्या कथञ्चन ।
शूद्रस्य समभागस्स्याद् यदि पुत्रशतं भवेत् ॥ ५०

जातानां समवर्णासु पुत्राणामविशेषतः ।
सर्वेषामेव वर्णानां समो भागोऽयमीप्सितः ॥ ५१

ज्येष्ठस्य भागो ज्येष्ठस्स्याद् एकांशो यः प्रधानतः ।
एष दायविधिः पार्थ पूर्वमुक्तस्स्वयम्भुवा ॥ ५२

[1]समवर्णासु जातानां विशेषोऽस्त्यपरो नृप ।
विवाहवैषम्यकृतः पूर्वपूर्वो विशिष्यते ॥ ५३

हरेज्ज्येष्ठः प्रधानांशम् एकभार्यासुतेष्वपि ।
मध्यमो मध्यमं चैव कनीयांस्तु कनीयसम् ॥ ५४

एवं जातिषु सर्वासु सवर्णज्येष्ठतां गतः ।
महर्षिरपि चैतद्वै मारीचः काश्यपोऽब्रवीत् ॥ ५५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
[ अस्मिन्नध्याये ५५ श्लोकाः ]

---

1. क-घ—सर्वैव

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति सङ्करजातीनां शीलविभागादिनिरूपणम् ॥

युधिष्ठिरः—

अथाश्रयाद्वा कामाद्वा वर्णानां वाऽप्यनिर्णयात् ।
अज्ञानाद्वाऽपि वर्णानां जायते वर्णसङ्करः ॥ १

तेषामेतेन विधिना जातानां वर्णसङ्करे ।
को धर्मः कानि कर्माणि तन्मे ब्रूहि पितामह ॥ २

भीष्मः—

चातुर्वर्ण्यस्य कर्माणि चातुर्वर्ण्यं च केवलम् ।
असृजत् सह यज्ञार्थैः पूर्वमेव प्रजापतिः ॥ ३

भार्याश्चतस्रो विप्रस्य द्वयोरात्माऽस्य जायते ।
आनुपूर्व्याच्च द्वौ हीनौ मातृजन्यौ प्रसूयतः ॥ ४

वरोंशभाग् ब्राह्मणस्यैव पुत्रश्
शूद्रापुत्रं पारशवं तमाहुः ।
शुश्रूषकस्स्वस्य कुलस्य स स्यात्
स्वं चारित्रं नित्यमथो न जह्यात् ॥ ५

सर्वानुपायानपि सम्प्रधार्य
समुद्धरेत् स्वस्य कुलस्य तन्तुम् ।

ज्येष्ठो यवीयानपि स द्विजस्य
शुश्रूषिता दानपरायणस्स्यात् ॥ ६

तिस्रः क्षत्रियसम्बन्धाद् द्वयोरात्माऽस्य जायते ।
[1]हीनवर्णस्तृतीयायां शूद्र उग्र इति स्मृतः ॥ ७

द्वे चापि भार्ये वैश्यस्य द्वयोरात्माऽस्य जायते ।
शूद्रा शूद्रस्य चाप्येका शूद्रमेव प्रजायते ॥ ८

ततोऽविशिष्टोऽप्यधमो गुरुदारप्रधर्षकः ।
बाह्यं वर्णं जनयति चातुर्वर्ण्याद् विगर्हितम् ॥ ९

अयाज्यं क्षत्रियो व्रात्यं सूतं स्तोत्रक्रियापरम् ।
वैश्यो वैदेहकं चापि मौद्गल्यमपवर्जितम् ॥ १०

शूद्रश्चण्डालमत्युग्रं वध्यघ्नं बाह्यवासिनम् ।
ब्राह्मण्यां सम्प्रजायन्त इत्येते कुलपांसनाः ॥ ११

एते मतिमतां श्रेष्ठ वर्णसङ्करजा विभो ॥ ११॥

वन्दी तु जायते वैश्यान्मागधो वाक्यजीवनः ।
[2]शूद्रान्निषादो मत्स्यघ्नः क्षत्रियाया व्यतिक्रमात् ॥ १२॥

शूद्रादायोगवश्चापि वैश्यायां ग्राम्यधर्मतः ।
ब्राह्मणैरप्रतिग्राह्यः क्षत्ता सवनजीवनः ॥ १३॥

---

1. अ—इदमर्धद्वयं नास्ति
2. क-घ—इदमर्धं नास्ति

एतेऽपि सदृशं वर्णं जनयन्ति स्वयोनिषु ।
[1]मातृजात्या प्रसूयन्ते प्रहीना हीनयोनिषु ॥ १४॥

यथा चतुर्षु वर्णेषु द्वयोरात्माऽस्य जायते ।
आनन्तर्यात् प्रजायन्ते यथा बाह्या प्रधानतः ॥ १५॥

ते चापि सदृशं वर्णं जनयन्ति स्वयोनिषु ।
परस्परस्य वर्तन्ते जनयन्ति विगर्हितान् ॥ १६॥

तथा च शूद्रो ब्राह्मण्यां बाह्यं जन्तुं प्रसूयते ।
एवं बाह्यतरं चापि चातुर्वर्ण्यात् प्रसूयते ॥ १७॥

प्रतिलोमं तु वर्तन्ते [2]बाह्यं बाह्यतरं पुनः ।
हीना हीनान् प्रसूयन्ते वर्णाः पञ्चदशैव ते ॥ १८॥

अगम्यागमनाच्चैव वर्धते वर्णसङ्करः ।
व्रात्यानामत्र जायन्ते सिलिन्ध्या मागधीषु च ॥ १९॥

प्रसाधनोपचारज्ञम अदासं दासजीवनम ।
क्षत्ता ह्यायोगवं सूते क्रूरं मायोपजीवनम् ॥ २०॥

मैत्रेयकं च वैदेहं सम्प्रसूतेऽथ माध्यकम् ॥ २१

निषादो मुद्गरं सूते दाशं नावोपजीविनम् ।
मृतपं चापि चण्डालश् श्वपाकमतिकुत्सिनम् ॥ २२

---

1. अ—इदमर्धचतुष्टयं नास्ति
2. क-ख—इतोऽर्धत्रयं नास्ति

चतुरो मागधी सूते क्रूरान मायोपजीविनः ।
मांसं स्वादुकरं सूदं सौगन्धमिति संज्ञितम् ॥ २३

वैदेहकाच्च पापिष्ठं क्रूरं भार्योपजीवनम् ।
निषादमुद्गरं चापि खरयानप्रयायिनम् ॥ २४

चण्डालात् पुल्कसं चापि खराश्वगजभोजनम् ।
मृतचेलपरिच्छन्नं भिन्नभाजनभोजिनम ॥ २५

आयोगवीषु जायन्ते हीनवर्णास्तु ते त्रयः ।
क्षुद्रो वैदेहकादन्ध्रो वहिर्ग्रामप्रतिश्रयः ॥ २६

कारावनो निषाद्यां तु चर्मकारात् प्रसूयते ।
चण्डालात् पाण्डुसौपाकस् त्वक्सारव्यवहारवान् ॥ २७

[1]आहिण्डको निषादेन वैदेह्यां वै प्रसूयते ।
चण्डालात् पाण्डुसौपाको मलव्यसनवृत्तिमान् ॥ २८

निषादी चापि चण्डालात् पुत्रमन्तावसायिनम् ।
श्मशानगोचरं सूते बाह्यैरपि बहिष्कृतम् ॥ २९

इत्येतास्सङ्करा जात्यः पितृमातृव्यतिक्रमात् ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्यास्स्वकर्मभिः ॥ ३०

चतुर्णामेव वर्णानां धर्मो नान्यत्र विद्यते ।
वर्णानामविरूद्धेषु संज्ञानार्हेषु कस्यचित् ॥ ३१

1. अ—इदमर्धद्वयं नास्ति

यदृच्छयोपसम्पन्नैर् यज्ञसाधुबहिष्कृतैः ।
बाह्या बाह्यैस्तु जायन्ते यथावृत्ति यथाश्रयम् ॥ ३२

चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च ।
कार्ष्णायसमलङ्कारं परिगृह्य च नित्यशः ॥ ३३
वसेयुरेतैर्विज्ञेया वर्तयन्तस्स्वकर्मभिः ॥ ३३॥

युञ्जते चाप्यलङ्कारांस् तथोपकरणानि च ।
गोब्राह्मणार्थे साहाय्यं कुर्वाणा वै न संशयः ॥ ३४॥

आनृशंस्यमनुक्रोशस् सत्यवाक्यमथ क्षमा ।
स्वशरीरैः परित्राणं बाह्यानां सिद्धिकारकम् ॥ ३५॥

भवति मनुजव्याघ्र सत्यं मे नास्ति संशयः ॥ ३६

यथोपदेशं परिकीर्तितासु
नरः प्रसूयेत विचार्य बुद्धिमान् ।
विहीनयोनिर्हि सुतोऽवसादयेत्
तितीर्षमाणं सलिले यथोपलः ॥ ३७

अविद्वांसं बलाल्लोके विद्वांसमपि वा पुनः ।
नयन्ते ह्युत्पथं नार्यः कामक्रोधवशानुगम् ॥ ३८

स्वभावश्चैष नारीणां नराणामिह दूषणम् ।
रत्यर्थं न प्रवर्तन्ते प्रमदासु विपश्चितः ॥ ३९

युधिष्ठिरः—

वर्णापेतमविज्ञातं नरं कल्मषयोनिजम् ।
आर्यरूपमिवानार्यं कथं विद्यामहे वयम् ॥ ४०

भीष्मः—

योनौ त्वकल्मषे जाता नानाचारसमाहिताः ।
कर्मभिस्सज्जनाकीर्णैर् विज्ञेयाश्शुद्धयोनिकाः ॥ ४१

अनार्यत्वमनाचारः क्रूरत्वं निर्दयात्मता ।
पुरुषं व्यञ्जयन्तीह लोके कल्मषयोनिजम् ॥ ४२

पित्र्यं वा [1]भजते शीलं मातृजं वाऽथ चोभयम् ।
कथञ्च स न सङ्कीर्णः प्रकृतिं स्वां नियच्छति ॥ ४३

[2]यथैव सदृशो रूपे मातापित्रोः प्रजायते ।
व्याघ्रबिन्दोस्तथा योनिं पुरुषस्स्वां नियच्छति ॥ ४४

कुलस्रोतसि विच्छिन्ने यस्य स्याद्योनिसङ्करः ।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥ ४५

आर्यरूपसमाचारं चरन्तं कृतके पथि ।
सद्वर्णमन्यवर्णं वा स्वशीलं शास्ति निश्चये ॥ ४६

नानावृत्तेषु भूतेषु नानाकर्मरतेषु च ।

---

1. क-घ-- लभते
2. अ—इदमर्धद्वयं नास्ति

[1]जन्मवृत्तसमं लोके सुश्लिष्टं न विरज्यते ॥ ४७

शरीरमिह [2]सत्त्वेन नरस्य परिकृष्यते ।
ज्येष्ठमध्यावरं सत्त्वं तुल्यसत्त्वं प्रमोदते ॥ ४८
ज्यायांसमपि शीलेन विहीनं नैव पूजयेत् ॥ ४८॥

आत्मानमाख्याति हि कर्मभिर्नरस्
स्वशीलचारित्रकृतैश्शुभाशुभैः ।
प्रनष्टमप्यात्मकुलं तथा नरः
पुनः प्रकाशीकुरुते स्वकर्मभिः ॥ ४९॥

योषित्स्वेतासु सर्वासु सङ्कीर्णास्वितरासु च ।
यत्रात्मानं न जनयेद् बुधस्ताः परिवर्जयेत् ॥ ५०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
[ अस्मिन्नध्याये ५०॥ श्लोकाः ]

---

1. क-घ—जन्मवृत्तिसमैर्लोके विशिष्टैर्न विरज्यते । [पाठान्तरम्]
2. क—सत्येन

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रत्यौरसादिपुत्रनिरूपणम् ॥

युधिष्ठिरः—

ब्रूहि पुत्रान् कुरुश्रेष्ठ वर्णानां त्वं पृथक् पृथक् ।
कीदृश्यां कीदृशाश्चापि पुत्राः कस्य च के च ते ॥ १

विप्रवादास्सुबहुशश् श्रूयन्ते पुत्रकारिणाम् ।
अत्र नो मुह्यतां राजन् संशयं छेत्तुमर्हसि ॥ २

भीष्मः—

आत्मा पुत्रस्तु विज्ञेयः प्रथमो बहुधा परे ॥ २॥

स्वे क्षेत्रे संस्कृते यस्तु पुत्रमुत्पादयेत् स्वयम् ।
तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम् ॥ ३॥

अग्निं प्रजापतिं चेष्ट्वा वराय प्रतिपादिता ।
पुत्रिका स्याद्दुहितरि सङ्कल्पेनापि वा सुतः ॥ ४॥

तल्पे जातः प्रमीतस्य क्लीबस्य पतितस्य वा ।
स्वधर्मेण नियुक्तो यस्स पुत्रः क्षेत्रजस्स्मृतः ॥ ५॥

माता पिता च दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तो विज्ञेयो [1]दत्रिमस्सुतः ॥ ६॥

---

1. अ-ख—दत्तक

सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं विज्ञेयस्तु स कृत्रिमः ॥ ७॥
उत्पद्यते यस्तु गूढं न च ज्ञायेत कस्यचित् ।
स भवेद्गूढजो नाम तस्य स्याद्यस्य तल्पजः ॥ ८॥
मातापितृभ्यामुत्सृष्टस् तयोरन्यतरेण वा ।
यं पुत्रं प्रतिगृह्णीयाद् अपविद्धस्स उच्यते ॥ ९॥
पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
कानीनं तं वदेन्नाम्ना वोढुः कन्यासमुद्भवः ॥ १०॥
या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती ।
वोढुस्स गर्भो भवति सहोढ इति चोच्यते ॥ ११॥
[1]या पत्या वा परित्यक्ता अथ वा स्वेच्छयाऽपि वा ।
उत्पादयेद्क्षतायां स पौनर्भव उच्यते ॥ १२॥
[2]मातापितृविहीनो वा त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्तु स्वयंदत्तस्स उच्यते ॥ १३॥
क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स सुतस्तस्य सदृशः क्रीतो नाम बुधैस्स्मृतः ॥ १४॥
द्वादशैते परे प्राहुर् एवं धर्मस्य पारगाः ।

1. क-घ—इदमर्धं नास्ति
2. क-घ—स्वपिता वा परित्यक्तस्त्यक्तो

आत्मा पुत्रस्तु विज्ञेयस् तस्यानन्तरजश्च यः ॥' १५॥

नियुक्तजश्च विज्ञेयस् सुतः [1]प्रसृतजस्तथा ॥ १६

पतितस्य च भार्यायां भर्त्रा सुसमचेतसा ।
तथा दत्तः कृतः पुत्रो वध्वोढश्च तथाऽपरः ॥ १७

षडपध्वंसजाश्चापि [2]कानीनापशदास्तथा ।
इत्येते ते समाख्यातास् तान् विजानीहि भारत ॥ १८

युधिष्ठिरः—

षडपध्वंसजाः के स्युः के वाऽप्यपशदास्तथा ।
एतत् सर्वं यथातत्त्वं व्याख्यातुं मे त्वमर्हसि ॥ १९

भीष्मः—

त्रिषु वर्णेषु ते पुत्रा ब्राह्मणस्य युधिष्ठिर ।
वर्णयोश्च द्वयोस्स्यातां यौ राजन्यस्य भारत ॥ २०

एको द्विवर्ण एवाथ तथाऽत्रैवोपलक्षितः ।
षडपध्वंसजास्ते तु तथैवापशदाञ् शृणु ॥ २१

चाण्डालौ व्रात्यवर्णौ तु ब्राह्मण्यां क्षत्रियासु च ।
वैश्यायां चैव शूद्रस्य लक्ष्यास्तेऽपशदास्त्रयः ॥ २२

मागधो नामकश्चैव द्वौ वैश्यस्योपलक्षितौ ।
ब्राह्मण्यां क्षत्रियायां च क्षत्रियस्यैक एव तु ॥ २३

---

1. क-घ—प्रथित	2. क-घ—षड्वापशदास्तथा

ब्राह्मण्यां लक्ष्यते सूत इत्येतेऽपशदास्स्मृताः ।
पुत्ररेतो न शक्यं हि मिथ्या कर्तुं नराधिप ॥ २४

युधिष्ठिरः—

क्षेत्रजं केचिदेवाहुस् सुतं केचित्तु शुक्लजम् ।
तुल्यावेतौ सुतौ कस्य तन्मे ब्रूहि पितामह ॥ २५

भीष्मः—

रेतोजो वा भवेत् पुत्रः पुत्रो वा क्षेत्रजो भवेत् ।
अध्यूढमेव समयं हित्वेत्येतन्निबोध मे ॥ २६

युधिष्ठिरः—

रेतोजं विद्म वै पुत्रं क्षेत्रजस्यागमः कथम् ।
अध्यूढं विद्म वै पुत्रं भित्त्वा तु समयं कथम् ॥ २७

भीष्मः—

आत्मजं पुत्रमुत्पाद्य यस्त्यजेत् कारणान्तरात् ।
न तत्र कारणं रेतस् स क्षेत्रस्वामिनो भवेत् ॥ २८

पुत्रकामो हि पुत्रार्थी यां वृणीते विशां पते ।
तत्र क्षेत्रं प्रमाणं स्यान्नैव तत्रात्मजस्सुतः ॥ २९

अन्यस्स क्षेत्रजः पुत्रो लक्ष्यते भरतर्षभ ।
न ह्यात्मा शक्यते हन्तुं दृष्टान्ताय गतो ह्यसौ ॥ ३०

1. अ—नास्तीदमर्धम्
क-घ—अध्यूढमपि पुत्रं च हित्वा च समयं गतम् । [ पाठान्तरम् ]

कच्चिच्च कृतकः पुत्रस् सङ्ग्रहादेव लक्ष्यते ।
न तत्र रेतः क्षेत्रं वा प्रमाणं स्याद्युधिष्ठिर ॥ ३१

युधिष्ठिरः—

[1]कीदृशः कृतकः पुत्रः सङ्ग्रहादेव लक्ष्यते ।
शुक्लं क्षेत्रं प्रमाणं वा यत्र लक्ष्येत भारत ॥ ३२

भीष्मः—

मातापितृभ्यां संन्यस्तं पथि जन्तुं प्रलक्षयेत् ।
न चास्य मातापितरौ ज्ञायेतां स हि कृत्रिमः ॥ ३३

अस्वामिकस्य स्वामित्वं यस्मिन् सम्प्रति लक्षयेत् ।
सवर्णस्तं च पोषेत सवर्णस्तस्य जायते ॥ ३४

युधिष्ठिरः—

कथमस्य प्रयोक्तव्यस् संस्कारः कस्य वा कथम् ।
देया कन्या कथं चेति तन्मे ब्रूहि पितामह ॥ ३५

भीष्मः—

आत्मवत्तस्य कुर्वीत संस्कारं स्वामिवत्तथा ।
त्यक्तो मातापितृभ्यां यस् सवर्णं प्रतिपद्यते ॥ ३६

ततोऽस्य वर्णतस्तस्य कुर्यात् संस्कारमच्युत ॥ ३६॥

अथ कन्या तु देया स्यात् तद्वर्णेन युधिष्ठिर ।
संस्कृत्य मातृगोत्रेण मातृवर्णविनिर्णये ॥ ३७॥

1. ख - अर्धषट्कं नास्ति

कानीनोऽध्यूढजो वाऽपि विज्ञेयौ पुत्रकिल्बिषौ ।
तावपि स्वाविव सुतौ संस्कार्याविति निश्चयः ॥ ३८॥

क्षेत्रजो वाऽप्यपशदो येऽध्यूढास्तेषु चाप्यथ ।
आत्मवद्वै प्रयुञ्जीरन् संस्कारं ब्राह्मणादयः ॥ ३९॥

[1]धर्मशास्त्रेषु वर्णानां निश्चयोऽयं प्रशस्यते ।
एतत्ते सर्वमाख्यातं किं भूयः कथ्यतामिति ॥ ४०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
[ अस्मिन्नध्याये ४०॥ श्लोकाः ]

---

1. ख—स्वजन्म मातृगोत्रेण संस्कारं ब्राह्मणादयः। [ अधिकः पाठः ]

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति महद्दर्शनसहवासयोर्गवां च प्रभावबोधनाय च्यवनोपाख्यानकथनारम्भः ॥ १ ॥ गङ्गायमुनासङ्गमेऽन्तर्जले निमज्य तपस्यतश्च्यवनस्य दाशैर्जालेन जलचरैस्सह कूलप्रापणम् ॥ २ ॥ दाशैः प्रार्थितेन तेन तान् प्रति मत्स्यैस्सह स्वस्य प्राणजालान्यतरस्मान्मोचनचोदना ॥ ३ ॥ दाशैश्च्यवनवृत्तान्तं निवेदितेन नहुषेण तं प्रति तदभीष्टकरणप्रतिज्ञानम् ॥ ४ ॥ च्यवनेन नहुषं प्रति दाशेभ्यस्स्वोचितमूल्यदानेनात्ममोचनचोदना ॥ ५ ॥ नहुषेण सम्पूर्णराज्यस्य मूल्यतापरिकल्पनेपि मुनिना तदनङ्गीकरणे गवि जातेन मुनिना गोः प्रतिनिधीकरणम् ॥ ६ ॥ च्यवनेन गोप्रतिग्रहणेन स्वसहवासिभिर्मत्स्यैस्सह दाशानां स्वर्गप्रापणम् ॥ ७ ॥

---

युधिष्ठिरः—

दर्शने कीदृशस्स्नेहस् संवासे च पितामह ।
[1]महाभाग्यं गवां चैव तन्मे ब्रूहि यथातथम् ॥ १

भीष्मः—

हन्त ते कथयिष्यामि पुरावृत्तं महाद्युते ।
नहुषस्य च संवादं महर्षेश्च्यवनस्य च ॥ २

पुरा महर्षिश्च्यवनो भार्गवो नाम भारत ।
उदवासकृतारम्भो बभूव स महाव्रतः ॥ ३

निहत्य मानं कामं च प्रहर्षं क्रोधमेव च ।

---

1. क-घ—माहात्म्यं वै गवां चैव तन्मे ब्रूहि पितामह । [ पाठान्तरम् ]

वर्षाणि द्वादश मुनिर् जलवासे धृतव्रतः ॥ ४
आदधत् सर्वभूतेषु विस्रम्भं परमं शुभम् ।
जलेचरेषु सत्त्वेषु शीत[1]हाऽग्निरिव प्रभुः ॥ ५
स्थाणुभूतश्शुचिर्भूत्वा दैवतेभ्यः प्रणम्य च ।
गङ्गायमुनयोर्मध्ये जलं सम्प्रविवेश ह ॥ ६
गङ्गायमुनयोर्वेगं सुभीमं सुमहास्वनम् ।
प्रतिजग्राह [2]सहसा वातवेगसमं जवे ॥ ७
गङ्गा च यमुना चैव सरितश्च तथाऽनुगाः ।
प्रदक्षिणमृषिं चक्रुर् न चैनं प्रत्यपीडयन् ॥ ८
अन्तर्जले स सुष्वाप काष्ठभूतो महामुनिः ।
पुनश्चोर्ध्वस्थितो धीमान् अभवद्भरतर्षभ ॥ ९
जलौकसां च सत्त्वानां [3]बभूव प्रियदर्शनः ।
उपाजिघ्रन्ति च तदा मत्स्यास्तं हृष्टमानसाः ॥ १०
तत्रापि वसतः कालस् समतीतोऽभवन्महान् ॥ १०॥
ततः कदाचित् समये कस्मिंश्चिन्मत्स्यजीविनः ।
तं देशं समुपाजग्मुर् जालहस्ता महाद्युते ॥ ११॥

1. क-घ—रश्मि
2. क-घ—शिरसा
3 ख—बभूवाद्भुतदर्शनः

निषादा [1]बह्वस्तत्र मत्स्योद्धरणनिश्चिताः ।
व्यायता बलिनश्शूरास् सलिलेष्वनिवर्तिनः ॥ १२॥

अभ्यमाययुश्च तं देशं निश्चिता जालकर्मणि ॥ १३

जालं च योजयामासुर् नवसूत्रकृतं दृढम् ।
मत्स्योद्धरणमाकार्षुस् तदा भरतसत्तम ॥ १४

ततस्ते बहुभिर्योगैः कैवर्ता मत्स्यकाङ्क्षिणः ।
गङ्गायमुनयोर्वारि जालेनावकिरन्ति ते ॥ १५

जालं तु विततं तेषां नवसूत्रकृतं तथा ।
विस्तारायामसम्पन्नं यत्तत्र सलिले क्षमम् ॥ १६

ततस्ते सुमहच्चैव बलवच्च सुवर्तितम् ।
प्रकीर्य सर्वतस्सर्वे जालं चकृषिरे तदा ॥ १७

अभीतरूपास्संहृष्टास् तेऽन्योन्यवशवर्तिनः ।
बबन्धुस्तत्र मत्स्यांश्च तथाऽन्याञ्जलचारिणः ॥ १८

ततो मत्स्यैः परिवृतं च्यवनं भृगुनन्दनम् ।
आकर्षन्त महाराज जालेनाथ यदृच्छया ॥ १९

नदीशैवलदिग्धाङ्गं हरिश्मश्रुजटाधरम् ।
लग्नं शङ्खगणैर्गात्रैः कोलैश्चित्रैरिवावृतम् ॥ २०

तं जालेनोद्धृतं दृष्ट्वा ते तदा वेदपारगम् ।

1. क-ख—श्चाभवंस्तत्र

सर्वे प्राञ्जलयो दाशाश् शिरोभिः प्रापतन् भुवि ॥ २१

बन्धखेदपरित्रासाज् जालस्याकर्षणेन च ।
स मुनिस्तत्तदा दृष्ट्वा मत्स्यानां कदनं कृतम् ॥ २२
बभूव कृपयाऽऽविष्टो निश्श्वसंश्च पुनः पुनः ॥ २२॥

दाशाः—

अज्ञानाद्यत् कृतं पापं प्रसादं तत्र नः कुरु ।
करवाम [1]वयं किं ते तन्नो ब्रूहि महामुने ॥ २३॥

भीष्मः—

इत्युक्तो मत्स्यमध्यस्थश् च्यवनो वाक्यमब्रवीत् ॥ २४

ऋषिः—

यो मेऽद्य परमः कामस् तं शृणुध्वं समाहिताः ॥ २४॥

प्राणोत्सर्गं विक्रयं वा मत्स्यैर्यास्याम्यहं सदा ।
संवासान्नोत्सहे त्यक्तुं सलिलाध्युषितानिमान् ॥ २५॥

भीष्मः—

इत्युक्तास्ते निषादास्तु सुभृशं भयकम्पिताः ।
सर्वे विषण्णवदना नहुषाय न्यवेदयन् ॥* २६॥

भीष्मः—

नहुषस्तु ततश्श्रुत्वा च्यवनं तं तथा गतम् ।

---

1. क-ख—क्रियां कां ते

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

त्वरितः प्रययौ तत्र सहामात्यपुरोहितः ॥ २७॥
सत्यव्रतं महाभागं देवकल्पं विशां पते ॥ २८

नहुषः—

करवाणि प्रियं किं ते तन्मे व्याख्यातुमर्हसि ।
सर्वं कर्तास्मि भगवन् यद्यपि स्यात् सुदुष्करम् ॥ २९

च्यवनः—

श्रमेण महता युक्ताः कैवर्ता मत्स्यजीविनः ।
मम मूल्यं प्रयच्छैभ्यो मत्स्यानां विक्रयैस्सह ॥ ३०

नहुषः—

सहस्रं दीयतां मूल्यं निषादेभ्यः पुरोहित ।
निष्क्रयार्थं भगवतो यथाऽऽह भृगुनन्दनः ॥ ३१

च्यवनः—

सहस्रं नाहमर्होमि किं वा त्वं मन्यसे नृप ।
सदृशं दीयतां मूल्यं स्वबुद्ध्या निश्चयं कुरु ॥ ३२

नहुषः—

सहस्राणां शतं क्षिप्रं निषादेभ्यः प्रदीयताम् ।
स्यादेतत् ते भवन्मूल्यं किं वाऽन्यन्मन्यसे द्विज ॥ ३३

च्यवनः—

नाहं शतसहस्रेण [1]निमेयः पार्थिवर्षभ ।

1. ख—निष्क्रेयः

दीयतां सदृशं मूल्यं सहामात्यैर्विचिन्तय ॥ ३४

नहुषः—

कोटिः परा हिता मूल्यं निषादेभ्यः प्रदीयताम् ।
एभिस्तदपि नौपम्यम् अतो भूयः प्रदीयताम् ॥ ३५

च्यवनः—

राजन्नार्हाम्यहं कोटिं भूयोऽपि च महाद्युते ।
सदृशं दीयतां मूल्यं ऋषिभिस्सह चिन्तय ॥ ३६

नहुषः—

[1]अर्धं राज्यं समग्रं वा निषादेभ्यः प्रदीयताम् ।
एतत्तुल्यमहं मन्ये किं वाऽन्यन्मन्यसे द्विज ॥ ३७

च्यवनः—

अर्धराज्यं समग्रं वा नाहमर्हामि पार्थिव ।
सदृशं दीयतां मूल्यम् ऋषिभिस्सह चिन्तय ॥ ३८

भीष्मः—

[2]महर्षेर्वचनं श्रुत्वा नहुषो दुःखकर्शितः ।
चिन्तयामास स तदा सहामात्यपुरोहितः ॥ ३९

तत्र त्वन्यो वनचरः कश्चिन्मूलफलाशनः ।
नहुषस्य समीपस्थो गविजातोऽभवन्मुनिः ॥ ४०

---

1. क-घ—अर्धचतुष्टयं नास्ति
2. क-घ—महर्षेश्च्यवनात्

स समाभाष्य राजानम् अब्रवीद् द्विजसत्तमः ॥ ४०॥

गविजातः—

तोषयिष्याम्यहं विप्रं यथा तुष्टो भविष्यति ॥ ४१

नाहं मिथ्यावचो ब्रूयां स्वैरेष्वपि कुतोऽन्यथा ।
भवतो यदहं ब्रूयां तत् कार्यमविशङ्कया ॥ ४२

नहुषः—

ब्रवीतु भगवान् मूल्यं महर्षेस्सदृशं प्रभो ।
परित्रायस्व मामस्माद्विषयं च कुलं च मे ॥ ४३

हन्याद्धि भगवान् क्रुद्धस् त्रैलोक्यमपि केवलम् ।
किं पुनर्मानवं हीनं बाहुवीर्यपरायणम् ॥ ४४

अगाधेऽम्भसि मग्नस्य सामात्यस्य सहर्त्विजः ॥
प्लवो भव महर्षे त्वं कुरु मूल्यस्य निश्चयम् । ४५

भीष्मः—

नहुषस्य वचश्श्रुत्वा गविजातः प्रतापवान् ।
उवाच हर्षयन् सर्वान् सामात्यान् पार्थिवं च तम् ॥ ४६

गविजातः—

ब्राह्मणानां गवां चैव कुलमेकं द्विधा कृतम् ।
एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति ॥ ४७

अनर्घार्हो महाराज द्विजा वर्णमहत्तमाः ।
गावश्च पृथिवीपाल गौर्मूल्यं तु प्रकल्प्यताम् ॥ ४८

भीष्मः—

नहुषस्तु ततश्श्रुत्वा महर्षेर्वचनं नृप ।
हर्षेण महता युक्तस् सहामात्यपुरोहितः ॥ ४९
अभिगम्य भृगोः पुत्रं च्यवनं संशितव्रतम् ।
इदं प्रोवाच नृपतिर् वाचा सन्तर्पयन्निव ॥ ५०

नहुषः—

उत्तिष्ठोत्तिष्ठ विप्रर्षे गवा क्रीतोऽसि भार्गव ।
एतन्मूल्यमहं मन्ये तव धर्मभृतां वर ॥ ५१

च्यवनः—

उत्तिष्ठाम्येष राजेन्द्र सम्यक् क्रीतोऽस्मि तेऽनघ ।
गोभिस्तुल्यं न पश्यामि धनं किञ्चिद् इहाच्युत ॥ ५२
कीर्तनं श्रवणं दानं दर्शनं चापि पार्थिव ।
गवां प्रशस्यते विप्रैस् सर्वपापहरं शिवम् ॥ ५३
गावो लक्ष्म्यास्सदा मूलं गोषु पाप्मा न विद्यते ।
अन्नमेव सदा गावो देवानां परमं हविः ॥ ५४
स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ।
गावो यज्ञप्रणेत्र्यो वै तथा यज्ञस्य वै मुखम् ॥ ५५
अमृतं ह्यक्षयं दिव्यं [1]क्षरन्ति च वहन्ति च ।
अमृतस्यायनं चैतास् स्वर्गलोकनमस्कृताः ॥ ५६

1. क-ख—रक्षन्ति

तेजसा वपुषा चैव गावो वह्निसमा भुवि ।
गावो हि सुमहत्तेजः प्राणिनां च सुखप्रदाः ॥ ५७

निविष्टं गोकुलं यत्र श्वासं मुञ्चति निर्भयम् ।
विराजयति तं देशं पाप्मानं चापकर्षति ॥ ५८

गावस्स्वर्गस्य सोपानं गावस्स्वर्गेऽपि पूजिताः ।
गावः कामदुघा दिव्या नान्यत् किञ्चित् पुरा स्मृतम् ॥ ५९

भीष्मः—

इत्येतद्गोषु मे प्रोक्तं माहात्म्यं पार्थिवर्षभ ।
[1]गुणैकदेशवचनं शक्यं पारायणं न तु ॥ ६०

[2]निषादाः—

दर्शनं कथनं चैव सहास्माभिः कृतं मुने ।
सतां साप्तपदं मैत्रं प्रसादं नः कुरु प्रभो ॥ ६१

हवींषि सर्वाणि यथा ह्युपभुङ्क्ते हुताशनः ।
एवं त्वमपि धर्मात्मन् पुरुषाग्निः प्रतापवान् ॥ ६२

प्रसादयामहे विप्र भवन्तं प्रणता वयम् ।
अनुग्रहार्थमस्माकम् इयं गौः प्रतिगृह्यताम् ॥ ६३

अत्यन्तापदि मग्नानां परित्राणं हि कुर्वताम् ।
या गतिर्विदिता त्वद्य नरके शरणं भवान् ॥ ६४

---

1. क-घ—इदमर्धं नास्ति
2. क-घ—नहुषः [पाठान्तरम्]

च्यवनः—

कृपणस्य च यच्चक्षुर् मुखमाशीविषस्य च ।
नरं समूलं दहति कक्षमग्निरिव ज्वलन् ॥ ६५

प्रतिगृह्णामि वो धेनुं कैवर्ता मुक्तकिल्बिषाः ।
दिवं गच्छत वै क्षिप्रं मत्स्यैर्जालोद्धृतैस्सह ॥ ६६

भीष्मः—

ततस्तस्य प्रसादात्ते महर्षेर्भावितात्मनः ।
निषादास्तेन वाक्येन सह मत्स्यैर्दिवं ययुः ॥ ६७

ततस्स राजा नहुषो विस्मितः प्रेक्ष्य धीवरान् ।
[1]आरोहणं निषादानां मत्स्यानां चैव भारत ॥ ६८

ततस्तौ गविजश्चैव च्यवनश्च भृगूद्वहः ।
वराभ्यामभिरूपाभ्यां छन्दयामासतुर्नृपम् ॥ ६९

ततो राजा महावीर्यो नहुषः पृथिवीपतिः ।
वरमित्यब्रवीन् प्रीतस् तदा भरतसत्तम ॥ ७०

ततो जग्राह धर्मेषु स्थितिमिन्द्रसमो नृपः ।
नहुषोऽपि वरं लब्ध्वा प्रविवेश पुरं स्वकम् ॥ ७१

एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ।
दर्शने यादृशस्स्नेहस् संवासे च युधिष्ठिर ॥ ७२

1. क-ख—आरोहणं त्रिदिवस्य मत्स्यानां भरतर्षभ । [पाठान्तरम्]

महाभाग्यं गवां चैव तथा धर्मविनिश्चयम् ।
किं भूयः कथ्यतां तात किं ते हृदि विवक्षितम् ॥ ७३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
[ अस्मिन्नध्याये ७३ श्लोकाः ]

---

## ॥ षट्चत्वारिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति रामविश्वामित्रयोरुत्पत्तिप्रकारकथनारम्भः ॥ १ ॥ च्यवनेन कुशिकराजमेत्य सभार्यं तं प्रति स्वशुश्रूषाविधानम् ॥ २ ॥ सभार्येण कुशिकेन एकविंशतिदिवसानानवरतमेकपार्श्वेन प्रसुप्तस्य च्यवनस्य पादसंवाहनेन पर्युपासनम् ॥ ३ ॥ ततश्शयनादुत्थितेन मुनिना किञ्चिद्दूरं गत्वा पुनरन्तर्धानम् ॥ ४ ॥

---

युधिष्ठिरः—

संशयो मे महाप्राज्ञ सुमहान् सागरोपमः ।
तं मे शृणु महाबाहो श्रुत्वा व्याख्यातुमर्हसि ॥ १

कौतूहलं मे सुमहज् जामदग्न्यं प्रति प्रभो ।
रामं धर्मभृतां श्रेष्ठं तन्मे व्याख्यातुमर्हसि ॥ २

ब्राह्मे बले सुपूर्णानाम् एतेषां च्यवनादिनाम् ।

कथमेष समुत्पन्नो रामस्सत्यपराक्रमः ॥ ३

कथं ब्रह्मर्षिवंशे स क्षत्रधर्मा व्यजायत ।
तदस्य सम्भवं राजन् निखिलेनानुकीर्तय ॥ ४

कौशिकश्च कथं वंशात् क्षत्राद्वै ब्राह्मणोऽभवत् ॥ ४॥

अहो प्रभावस्सुमहान् आसीद्वै सुमहात्मनोः ।
रामस्य च नरव्याघ्र विश्वामित्रस्य चैव हि ॥ ५॥

कथं पुत्रानतिक्रम्य तथा नप्तृष्वथाभवत् ।
एष दोषो महाप्राज्ञ तन्मे व्याख्यातुमर्हसि ॥ ६॥

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
च्यवनस्य च संवादं कुशिकस्य च भारत ॥ ७॥

एतं दोषं तथा दृष्ट्वा भार्गवश्च्यवनस्तदा ।
आगामिनं महाबुद्धिस् स्ववंशे मुनिपुङ्गवः ॥ ८॥

सञ्चिन्त्य मनसा सर्वं गुणदोषबलाबलम् ।
दग्धुकामः कुलं सर्वं कुशिकानां तपोधनः ॥ ९॥

च्यवनस्तमनुप्राप्य कुशिकं वाक्यमब्रवीत् ॥ १०

च्यवनः—

वस्तुमिच्छा समुत्पन्ना त्वया सह ममानघ ॥ १०॥

कुशिकः—

भगवन् सहधर्मोऽयं पण्डितैरिह चर्यते ।

प्रदानकाले कन्याया मुच्यते सर्वदा बुधैः ॥ ११॥

यत्तु तावदतिक्रान्तं धर्मद्वारं तपोधन ।
तत् कार्यं प्रकरिष्यामि तदनुज्ञातुमर्हसि ॥ १२॥

भीष्मः—

अथासनमुपादाय च्यवनस्य महामुनेः ।
कुशिको भार्यया सार्धम् आजगाम महामुनिम् ॥ १३॥

प्रगृह्य राजा भृङ्गारं पाद्यमस्मै न्यवेदयत् ।
कारयामास सर्वाश्च क्रियास्तस्य महात्मनः ॥ १४॥

ततस्स राजा च्यवनं मधुपर्कं यथाविधि ।
प्रत्यग्राहयदव्यग्रो महात्मा नियतव्रतः ॥ १५॥

सत्कृत्य स तथा विप्रम् इदं वचनमब्रवीत् ॥ १६

कुशिकः—

भगवन् परवन्तस्मो ब्रूहि किं करवामहे ॥ १६॥

यदि राज्यं यदि धनं यदि गास्संशितव्रत ।
यज्ञदानानि च तथा ब्रूहि मे किं ददामि ते ॥ १७॥

इदं गृहमिदं राज्यम् इदं धर्मासनं च ते ।
राजा त्वमसि शाध्युर्वीं भृत्योऽहं परवांस्त्वया ॥ १८॥

भीष्मः—

एवमुक्ते तदा वाक्ये च्यवनो भार्गवस्तदा ।

कुशिकं प्रत्युवाचेदं मुदा परमया युतः ॥ १९॥

च्यवनः—

न राज्यं कामये राजन् न च धर्मं न योषितः ।
न च गा न च ते देशान् न यज्ञान् ज्ञायतामिदम् ॥ २०॥
नियमं कञ्चिदारप्स्ये युवयोर्यदि रोचते ।
परिचर्योपपन्नाभ्यां युवाभ्यामविशङ्कया ॥ २१॥

भीष्मः—

एवमुक्ते तदा तेन दम्पती तौ जहर्षतुः ।
प्रत्यब्रूतां च तमृषिम् एवमस्त्विति भारत ॥ २२॥
अथ तं कुशिको हृष्टः प्रावेशयदनुत्तमम् ।
गृहोद्देशं ततस्तत्र दर्शनीयमदर्शनम् ॥ २३॥

कुशिकः—

इयं शय्या भगवतो यथाकाममिहोष्यताम् ।
प्रयतिष्यावहे प्रीतिम् आहर्तुं ते तपोधन ॥ २४॥

भीष्मः—

अथ सूर्योऽतिचक्राम तेषां संवदतां तदा ।
अथर्षिश्चोदयामास पानमन्नं तथैव च ॥ २५॥
तमपृच्छत् ततो राजा कुशिकः प्रणतस्तदा ॥ २६

कुशिकः—

किमन्नजातमिष्टं ते किमुपस्थापयाम्यहम् ॥ २६॥

भीष्मः—

ततस्स परया प्रीत्या प्रत्युवाच जनाधिपम् ।
औपपत्तिकमाहारं प्रयच्छस्वेति भारत ॥ २७॥

तद्वचः पूजयन्नार्यस् तथेत्याह स पार्थिवः ।
यथोपपन्नञ्चाहारं तस्मै प्रादाज्जनाधिपः ॥ २८॥

ततस्स भगवान् भुक्त्वा दम्पती प्राह धर्मवित् ।
स्वप्तुमिच्छाम्यहं निद्रा बाधते मामिह प्रभो ॥ २९॥

ततश्शय्यागृहं प्राप्य भगवान् ऋषिसत्तमः ।
संविवेश नरेन्द्रस्तु सपत्नीकस्स्थितोऽभवत् ॥ ३०॥

न प्रबोध्योऽस्मि संसुप्त इत्युवाचाथ भार्गवः ।
संवाहितव्यौ पादौ मे जागर्तव्यं च वां निशि ॥ ३१॥

अविशङ्कश्च कुशिकस् तथेत्याह स धर्मवित् ।
न प्राबोधयतां तं च तौ तदा रजनीक्षये ॥ ३२॥

यथोद्देशं महर्षेस्तु शुश्रूषापरमौ तदा ।
बभूवतुर्महाराज प्रयतौ चाथ दम्पती ॥ ३३॥

ततस्स भगवान् विप्रस् समादिश्य नराधिपम् ।
सुष्वापैकेन पार्श्वेन दिवसानेकविंशतिम् ॥ ३४॥

स तु राजा निराहारस् सभार्यः कुरुनन्दन ।
पर्युपास्त सुसंहृष्टश् च्यवनाराधने रतः ॥ ३५॥

भार्गवस्तत उत्तस्थौ स्वयमेव तपोधनः ।
न किञ्चिदुक्त्वा च गृहान्निश्चक्राम महामुनिः ॥ ३६॥
तमन्वगच्छतां तौ तु क्षुधितौ श्रमपीडितौ ।
भार्यापती मुनिश्रेष्ठो न च तावभ्यवारयत् ॥ ३७॥
तयोस्तु प्रेक्षतोरेवं भार्गवाणां कुलोद्वहः ।
अन्तर्हितोऽभूद्राजेन्द्र ततो राजाऽपतत् क्षितौ ॥ ३८॥
ततो मुहूर्तादाश्वस्य सह देव्या महामुनेः ।
पुनरन्वेषणे यत्नम् अकरोत् स महीपतिः ॥ ३९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
[ अस्मिन्नध्याये ३९॥ श्लोकाः ]

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

पूर्वमन्तर्हितेन च्यवनेन कुशिकं प्रति पुनश्शयने प्रस्वपत आत्मनः प्रदर्शनम् ॥ १ ॥ पुनरुत्थितेन मुनिना राजानं प्रति आत्मनस्तैलाभ्यञ्जन-नियोजनेन स्नानशालायां पुनरन्तर्धानम् ॥ २ ॥ पुनराविष्कृतात्मना तेन सभार्यस्य राज्ञो रथधुरि संयोजनपूर्वकं याचकेभ्यस्तदीयवित्तादिवितरणेन वीथ्यां रथेन निर्गमनम् ॥ ३ ॥ स्वीयप्रतोदताडनेऽप्यविकृतमानसे सभार्ये कुशिके प्रसीदता मुनिना वरदानेन तस्य स्वगृहप्रेषणम् ॥ ४ ॥ परेद्युः प्रभाते सभार्येण कुशिकेन च्यवनावलोकनाय वनप्रवेशः ॥ ५ ॥ च्यवनेन कुशिकं प्रति स्वयोगप्रभावसृष्टस्वर्गप्रदर्शनपूर्वकमभिमतवरवरणप्रेरणा ॥६॥

---

युधिष्ठिरः—

तस्मिन्नन्तर्हिते विप्रे राजा किमकरोत्तदा ।
भार्या च सुमहाभागा तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अदृष्ट्वा स महीपालस् तमृषिं सह भार्यया ।
परिश्रान्तो निववृते व्रीडितो नष्टचेतनः ॥ २

स प्रविश्य पुरीं दीनो नाभ्यभाषत कञ्चन ।
तदेव चिन्तयामास च्यवनस्य विचेष्टितम् ॥ ३

अथ शून्येन मनसा प्रविवेश गृहं नृपः ।
ददर्श शयने तस्मिन् शयानं भृगुनन्दनम् ॥ ४

विस्मितोऽभूत्तु तं दृष्ट्वा तदाश्चर्यं प्रचिन्तयन् ।
सन्दर्शनात्तस्य मुनेर् विश्रान्तौ सम्बभूवतुः ॥ ५
यथास्थानं ततो गत्वा तत् पादौ संववाहतुः ।
अथापरेण पार्श्वेन सुष्वाप मुनिसत्तमः ॥ ६
तेनैव च स कालेन सम्प्राबुद्ध्यत वीर्यवान् ।
न च तौ चक्रतुः किञ्चिद् विवरं भयशङ्कितौ ॥ ७
[1]अथाह भगवांस्तौ तु प्रतिबुद्धो विशां पते ।
तैलाभ्यङ्गं प्रयच्छेतां स्नातुमिच्छामि पार्थिव ॥ ८
तथेति तौ प्रतिश्रुत्य क्षुधितौ श्रमकर्शितौ ।
शतपाकेन तैलेन महार्हेणोपतस्थतुः ॥ ९
ततस्सुखासीनमृषिं वाग्यतौ सम्बभूवतुः ।
न च पर्याप्तमित्याह भार्गवस्सुमहातपाः ॥ १०
यदा तौ निर्विकारौ तु लक्षमायास भार्गवः ।
तत उत्थाय सहसा स्नानशालामुपागमत् ॥ ११
क्लृप्तमेव तु तत्रासीत् स्नानीयं पार्थिवोचितम् ॥ ११॥
असत्कृत्य च तत् सर्वं तत्रैवान्तरधीयत ।
स मुनिः पुनरेवाथ नृपतेः पश्यतस्तदा ॥ १२॥
नासूयां चक्रतुस्तौ तु दम्पती भरतर्षभ ॥ १३

---

1. क-घ—यथा हि भगवान् स्तोतुं

अथ स्नातस्स भगवान् सिंहासनगतः प्रभुः ।
दर्शयामास कुशिकं सभार्यं भृगुनन्दनः ॥ १४

संहृष्टवदनो राजा सभार्यः कुशिको मुनिम् ।
सिद्धमन्नमिति प्रह्वो निर्विकारो न्यवेदयत् ॥ १५

आनीयतामिति मुनिस् तं चोवाच जनाधिपम् ।
राजा च समुपाजह्रे तदन्नं भार्यया सह ॥ १६

मांसप्रकारान् विविधाञ् शाकानि विविधानि च ।
लेह्यपिष्टविकारांश्च पानान्यतिलघूनि च ॥ १७

[1]रसालापूपकांश्चित्रान् मोदकानथ षड्रसान् ।
[2]रसान् नानाप्रकारांश्च वन्यं च मुनिभोजनम् ॥ १८

फलानि च विचित्राणि तदा भोज्यानि भूरिशः ।
बदरेङ्गुदकाश्मर्यभल्लातक[3]फलानि च ॥ १९

गृहस्थानां च सम्भोज्यं यच्चापि वनवासिनाम् ।
सर्वमाहारयामास राजा शापभयान्मुनेः ॥ २०

अथ सर्वमुपन्यस्तम् अग्रतश्च्यवनस्य तत् ।
ततस्सर्वं समानीय तच्च शय्यासनं मुनिः ॥ २१

---

1. अ—अर्धचतुष्टयं नास्ति

2. ध—आनीयतां मुनिवचस् तच्चोवाच जनाधिपम् ।
राजा च समुपाजह्रे वन्यश्च मुनिभोजनः ॥ [अधिकः पाठः]

3 ख—वटानि च

वस्त्रैश्शुद्धैरवच्छाद्य भोजनोपस्करैस्सह ।
सर्वमादीपयामास च्यवनो भृगुनन्दनः ॥ २२

न च तौ चक्रतुः कोपं दम्पती सुमहाव्रतौ ।
तयोस्सम्प्रेक्षतोरेव पुनरन्तर्हितोऽभवत् ॥ २३

तत्रैव च स राजर्षिस् तस्थौ तां रजनीं तदा ।
सभार्यो वाग्यतश्श्रीमान् न चैनं कोप आविशत् ॥ २४

नित्यं संस्कृतमन्नं तु विविधं राजवेश्मनि ।
शयनानि च मुख्यानि परि[1]वेपाश्च पुष्कलाः ॥ २५

वस्त्रं च विविधाकारम् अभवत् समुपार्जितम् ।
न शशाक ततो द्रष्टुम् अन्तरं च्यवनस्तदा ॥ २६

पुनरेव च विप्रर्षिर् अवोचत् कुशिकं नृपम् ॥ २६॥

च्यवनः—

सभार्यो मां रथेनाशु वह यत्र ब्रवीम्यहम् ॥ २७

भीष्मः—

तथेति च प्राह नृपो निर्विशङ्कस्तपोधनम् ॥ २७॥

कुशिकः—

क्रीडारथोऽस्तु भगवन्नुत साङ्ग्रामिको रथः ॥ २८

भीष्मः—

इत्युक्तस्तु मुनिस्तेन राज्ञा हृष्टेन तद्वचः ।
च्यवनः प्रत्युवाचेदं हृष्टः परपुरञ्जयम् ॥ २९

---

1. ख-ध—षेका

च्यवनः—

सज्जीकुरु रथं क्षिप्रं यस्ते साङ्ग्रामिको रथः ।
सायुधस्सपताकश्च सशक्तिः कृतयष्टिकः ॥ ३०

किङ्किणीकृतनिर्घोषो युक्तस्तोमरकर्पणैः ।
गदाखड्गनिबद्धश्च परमेषुशतान्वितः ॥ ३१

भीष्मः—

ततस्स तं तथेत्युक्त्वा कल्पयित्वा महारथम् ।
भार्यां वामे धुरि तदा चात्मानं दक्षिणे तथा ॥ ३२

त्रिदंष्ट्रं वज्रसूच्यग्रं प्रतोदं तत्र चादधत् ॥ ३२॥

सर्वमेतत्ततो दत्त्वा नृपो वाक्यमथाब्रवीत् ॥ ३३

कुशिकः—

भगवन् क्व रथो यातु ब्रवीतु भृगुनन्दन ।
यत्र वक्ष्यसि विप्रर्षे तत्र यास्यति ते रथः ॥ ३४

भीष्मः—

एवमुक्तस्स भगवान् प्रत्युवाचाथ तं नृपम् ॥ ३४॥

च्यवनः—

इतः प्रभृति यातव्यं पदकं पदकं शनैः ॥ ३५

श्रमो मम यथा न स्यात् तथा स्वच्छन्दचारिणः ।
सुखं चैवास्मि वोढव्यो जनस्सर्वश्च पश्यतु ॥ ३६

नोत्सार्यः पथि कश्चिच्च वसु दास्यामि तेष्वहम् ।

ब्राह्मणेभ्यश्च ये कामान् अर्थयिष्यन्ति मां पथि ॥ ३७

सर्वान् दास्याम्यशेषेण धनरत्नानि चैव हि ।
क्रियतां निखिलेनैतन्मा विचारय पार्थिव ॥ ३८

भीष्मः—

तस्य तद्वचनं श्रुत्वा राजाऽमात्यांस्तथाऽब्रवीत् ॥ ३८॥

कुशिकः—

यद्यद्ब्रूयान्मुनिस्तत्तत् सर्वं देयमशङ्कितैः ॥ ३९

भीष्मः—

ततो रत्नान्यनेकानि स्त्रियो युग्यमजाविकम् ।
कृताकृतं च कनकं गजेन्द्राश्चाचलोपमाः ॥ ४०

अन्वगच्छन्त तमृषिं राजामात्याश्च सर्वशः ।
हाहाभूतं च तत् सर्वम् आसीन्नगरमार्तिमत् ॥ ४१

तौ तीक्ष्णाग्रेण सहसा प्रतोदेन प्रचोदितौ ।
पृष्ठे विद्धौ कटौ चैव निर्विकारौ तमूहतुः ॥ ४२

वेपमानौ निराहारौ पञ्चाशद्रात्रकर्शितौ ।
कथञ्चिदूहतुर्धैर्याद् दम्पती तं रथोत्तमम् ॥ ४३

बहुशो भृशविद्धौ तौ क्षरमाणौ क्षतोद्भवम् ।
ददृशाते महाराज पुष्पिताविव किंशुकौ ॥ ४४

तौ दृष्ट्वा पौरवर्गस्तु भृशं कोपपरायणः ।
अभिशापभयत्रस्तो न तं किञ्चिदुवाच ह ॥ ४५

द्वन्द्वशश्चाब्रुवन् सर्वे पश्यध्वं तपसो बलम् ।
क्रुद्धा अपि मुनिश्रेष्ठं वीक्षितुं नैव शक्नुमः ॥ ४६

अहो भगवतो वीर्यं महर्षेर्भावितात्मनः ।
राज्ञश्चास्य सभार्यस्य धैर्यं पश्यत यादृशम् ॥ ४७

श्रान्तावपि तु कृच्छ्रेण [1]रथमेकं समूहतुः ।
न चैतयोर्विकारं वै ददर्श भृगुनन्दनः ॥ ४८

ततस्तु निर्विकारौ तौ मुनिर्दृष्ट्वा भृगूद्वहः ।
वसु विश्राणयामास यथा वैश्रवणस्तथा ॥ ४९

तत्रापि राजा प्रीतात्मा यथाज्ञप्तमथाकरोत् ।
ततोऽस्य भगवान् प्रीतो ह्यभवन्मुनिसत्तमः ॥ ५०

अवतीर्य रथश्रेष्ठाद् दम्पती तौ मुमोच ह ।
विमोच्य चैतौ विधिवत् ततो वाक्यमुवाच ह ॥ ५१

स्निग्धगम्भीरया वाचा भार्गवस्सुप्रसन्नया ।
ददामि वां वरं श्रेष्ठं तं ब्रूतामिति भारत ॥ ५२

सुकुमारौ च तौ विद्वान् कराभ्यां स मुनिस्तदा ।
पस्पर्शामृतकल्पाभ्यां स स्नेहाद्भरतर्षभ ॥ ५३

अथाब्रवीन्नृपो वाक्यं श्रमो नास्त्यावयोरिह ।
विश्रान्तौ स्वप्रभावात्ते ध्यानेनैवेह भार्गव ॥ ५४

---

1. क-ख—नरमेनं

अथ तौ भगवान् प्राह प्रहृष्टश्च्यवनस्तदा ॥ ५४॥

च्यवनः—

न वृथा व्याहृतं पूर्वं यन्मया तद्भविष्यति ॥ ५५

रमणीयोऽयमुद्देशो गङ्गातीरमिदं शुभम् ।
किञ्चित्कालं व्रतपरो निवत्स्यामीह पार्थिव ॥ ५६

गम्यतां स्वपुरं तत्र विश्रान्तः पुनरेष्यसि ।
इहस्थं मां सभार्यस्त्वं द्रष्टासि श्वो नराधिप ॥ ५७

न च मन्युस्त्वया कार्यश् श्रेयस्त्वां समुपस्थितम् ।
यत् काङ्क्षितं हृदिस्थं ते तत् सर्वं हि भविष्यति ॥ ५८

भीष्मः—

इत्येवमुक्तः कुशिकः प्रहृष्टेनान्तरात्मना ।
प्रोवाच मुनिशार्दूलम् इदं वचनमर्थवत् ॥ ५९

कुशिकः—

न मे मन्युर्महाभाग पूतोऽस्मि भगवंस्त्वया ।
संवृत्तौ यौवनस्थौ स्वो वपुष्मन्तौ बलान्वितौ ॥ ६०

प्रतोदेन व्रणा ये मे सभार्यस्य कृतास्त्वया ।
तान् न पश्यामि गात्रेषु स्वस्थोऽस्मि सह भार्यया ॥ ६१

इमां च देवीं पश्यामि मुने दिव्याप्सरोपमाम् ।
श्रिया परमया युक्तां यथा दृष्टा महत्तपः ॥ ६२

तव प्रसादात् संवृत्तम् इदं सर्वं महामुने ।

नैतच्चित्रं तु भगवंस् त्वयि सत्यपराक्रमे ॥ ६३

भीष्मः—

इत्युक्तः प्रत्युवाचेदं कुशिकं च्यवनस्तदा ।
आगच्छेथास्सभार्यश्च त्वमिहेति नराधिप ॥ ६४

इत्युक्तस्समनुज्ञातो राजा तमभिवाद्य च ।
प्रययौ वपुषा युक्तो नगरं देवराजवत् ॥ ६५

तत एनमुपाजग्मुर् अमात्यास्सपुरोहिताः ।
बलस्थाः क्षत्रिया युक्तास् सर्वाः प्रकृतयस्तथा ॥ ६६

तैर्वृतः कुशिको राजा श्रिया परमया ज्वलन् ।
प्रविवेश पुरं हृष्टः [1]पूज्यमानोऽथ बन्दिभिः ॥ ६७

ततः प्रविश्य नगरं कृत्वा सर्वाह्निकीः क्रियाः ।
[2]भुक्त्वा सभार्यो रजनीम् उवास स महीपतिः ॥ ६८

ततस्तु तौ नवमभिवीक्ष्य यौवनं
परस्परं विगतजराविवामरौ ।
ननन्दतु[3]स्सदनगतौ वपुर्धरौ
श्रिया युतौ द्विजवरदत्तया तया ॥ ६९

स चाप्यृषिर्भृगुकुलकीर्तिवर्धनस्
तपोधनो वनमभिराममृद्धिमत् ।

1. क-घ—स्तूयमा 2. क-घ—हत्वा
. घ—श्शयन

मनीषया बहुविधरत्नभूषितं
ससर्ज यन्नास्ति शतक्रतोरपि* ॥ ७०

ततो राजा रजन्यन्ते प्रतिबुद्धो महामनाः ।
कृतसर्वाह्निकः प्रायात् सभार्यस्तद्वनं प्रति ॥ ७१

ततो ददर्श नृपतिः प्रासादं सर्वकाञ्चनम् ।
मणिस्तम्भसहस्राढ्यं गन्धर्वनगरोपमम् ॥ ७२

तत्र दिव्यानभिप्रायान् ददर्श कुशिकस्तदा ॥ ७२॥

पर्वतान् रम्यसानूंश्च नलिनीश्च सपङ्कजाः ।
चित्रशालाश्च विविधाश् [1]शरणानि च भारत ॥ ७३॥

शाड्वलोपहितां भूमिं तथा काञ्चनकुट्टिमाम् ।
सहकारान् प्रफुल्लांश्च केतकोद्दालकान् धवान् ॥ ७४॥

अशोकान् मुचुकुन्दांश्च फुल्लांश्चैवातिमुक्तकान् ।
चम्पकांस्तिलकान् सर्जान् [2]असनानर्जुनानपि ॥ ७५॥

पुष्पितान् कर्णिकारांश्च तत्रतत्र ददर्श ह ॥ ७६

श्यामं वारणपुष्पं च तथाऽष्टापदिकां लताम् ।
तत्र तत्र परिक्षिप्तां ददर्श स महीपतिः ॥ ७७

वृक्षान् पद्मोत्पलधरान् सर्वर्तुकुसुमांस्तथा ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. ख-घ—स्तोर 2. घ—पनसानर्जुनानपि

विमानच्छन्दकांश्चापि प्रासादान् पद्मसन्निभान् ॥ ७८
शीतलानि च तोयानि क्वचिदुष्णानि भारत ।
आसनानि विचित्राणि शयनप्रस्तराणि च ॥ ७९
पर्यङ्कान् सर्वसौवर्णान् पराध्यास्तरणास्तृतान् ।
भक्ष्यं भोज्य[1]मनेकं च तत्र तत्रोपकल्पितम् ॥ ८०
[2]वाणीवाहाञ् शुकांश्चापि शारिका [3]भृङ्गराजकान् ।
कोकिलाञ्छतपत्रांश्च कोयष्टि[4]मणिकुक्कुटान् ॥ ८१
मयूरान् कुररांश्चापि पुत्रकाञ्जीवजीवकान् ।
चकोरान् वानरान् हंसांश् चक्रवाकसमाह्वयान् ॥ ८२
समन्ततः प्रणदतो ददर्श सुमनोहरान् ॥ ८२॥
क्वचिदप्सरसां सङ्घान् गन्धर्वाणां च पार्थिव ।
कान्ताभिरपरांस्तत्र परिष्वक्तान् ददर्श ह ॥ ८३॥
न ददर्श तदा भूयो ददर्श च [5]पुरं नृपः ॥ ८४
गीतध्वनिं सुमधुरं तथैवाध्ययनध्वनिम् ।
हंसान् सुमधुरांश्चापि तत्र शुश्राव पार्थिवः ॥ ८५
तद् दृष्ट्वाऽत्यद्भुतं राजा मनसाऽचिन्तयत्तदा ॥ ८५॥

---

1. क-घ—मनन्तं च
2. ख-घ—पाणिवाहाञ् शुकांश्चापि
3. क-घ—न् गृहकाजकान्
4. ख—बलि
5. क-घ—पुनर्नृपः

कुशिकः—

स्वप्नोऽयं चित्तविभ्रंश उताहो सत्यमेव तु ।
अहो सह शरीरेण प्राप्तोऽस्मि परमां गतिम् ॥ ८६॥
उत्तरान् वा कुरून् पुण्यान् अथवाऽप्यमरावतीम् ।
किंन्विदं महदाश्चर्यं सत्यं पश्यामि चिन्तयन् ॥ ८७॥

भीष्मः—

एवं सञ्चिन्तयन्नेव ददर्श मुनिपुङ्गवम् ॥ ८८
तस्मिन् विमाने सौवर्णे मणिस्तम्भसमाकुले ।
महार्हशयने दिव्ये शयानं भृगुनन्दनम् ॥ ८९
तमभ्ययात् प्रहर्षेण नरेन्द्रस्सह भार्यया ।
अन्तर्हितस्ततो भूयो मुनिश्च शयनं च तत् ॥ ९०
ततोऽन्यस्मिन् वनोद्देशे पुनरेव ददर्श तम् ।
कौश्यां बृस्यां समासीनं जपमानं महाव्रतम् ॥ ९१
एवं योगबलाद्विप्रो मोहयामास पार्थिवम् ॥ ९१॥
क्षणेन तद्वनं चैव ते चैवाप्सरसां गणाः ।
गन्धर्वाः पादपाश्चैव सर्वमन्तरधीयत ॥ ९२॥
निश्शब्दमभवच्चापि गङ्गाकूलं पुनर्नृप ।
कुशवल्मीकभूयिष्ठं बभूव च यथापुरम् ॥ ९३॥
ततस्स राजा कुशिकस् सभार्यस्तेन कर्मणा ।

विस्मयं परमं प्राप्तस् तद्दृष्ट्वा महदद्भुतम् ॥ ९४॥

ततः प्रोवाच कुशिको भार्यां हाससमन्वितः ॥ ९५

कुशिकः—

पश्य भद्रे यथा भावा दृष्टाश्चित्रास्सुदुर्लभाः ।

प्रसादाद्भृगुमुख्यस्य किमन्यत्र तपोबलात् ॥ ९६

तपसा तदवाप्यं हि यन्न शक्यं मनोरथैः ।

त्रैलोक्यराज्यादपि हि तप एव विशिष्यते ॥ ९७

तपसा हि सुतप्तेन क्रीडत्येष तपोधनः ।

अहो प्रभावो ब्रह्मर्षेश् च्यवनस्य महात्मनः ॥ ९८

इच्छन्नेष तपोवीर्याद् अन्याँल्लोकान् सृजेदपि ।

ब्राह्मणा एव जायेरन् पुण्यवाग्बुद्धिकर्मिणः ॥ ९९

उत्सहेदिह कृत्वेदं कोऽन्यो वै च्यवनादृते ।

ब्राह्मण्यं दुर्लभं लोके तल्लब्ध्वा दुर्लभं तपः ॥ १००

सिद्धिस्तत्रापि दुष्प्रापा सिद्धेरपि परा गतिः ।

ब्राह्मण्यं दुर्लभं लोके राज्यं हि सुलभं नरैः ॥ १०१

ब्राह्मण्यस्य प्रभावाद्धि रथे युक्तौ स्वधुर्यवत् ॥ १०१॥

भीष्मः—

इत्येवं चिन्तयानस्सन् विदितश्च्यवनस्य वै ।

[1]सम्प्रेक्ष्योवाच नृपतिं क्षिप्रमागम्यतामिति ॥ १०२॥

---

1. अ—इमानि नवार्धानि न सन्ति

इत्युक्तस्सहभार्यस्तम् अभ्यगच्छन्महामुनिम् ।
शिरसा वन्दनीयं तम् अवन्दत च पार्थिवः ॥ १०३॥
तस्याशिषः प्रयुज्याथ स मुनिस्तं नराधिपम् ।
निषीदेत्यब्रवीद्धीमान् सान्त्वयन् पुरुषर्षभम् ॥ १०४॥
ततः प्रीतिसमापन्नो भार्गवो नृपते नृपम् ।
उवाच श्लक्ष्णया वाचा तर्पयन्निव भारत ॥ १०५॥

च्यवनः—

[1]राजन् सम्यङ् निर्जितानि पञ्च पञ्चसु यत् त्वया ।
मनष्षष्ठानीन्द्रियाणि कृच्छ्रान्मुक्तोऽसि तेन वै ॥ १०६॥
सम्यगाराधितः पुत्र त्वयाऽहं वदतां वर ।
न हि ते वृजिनं किञ्चित् सुसूक्ष्ममपि दृश्यते ॥ १०७॥
अनुजानीहि मां राजन् गमिष्यामि यथागतम् ।
प्रीतोऽस्मि तव राजेन्द्र वरश्च प्रतिगृह्यताम् ॥ १०८॥

कुशिकः—

अग्निमध्ये गतेनेदं भगवन् सन्निधौ मया ।
वर्तितं भृगुशार्दूल यन्न दग्धोऽस्मि तद्बहु ॥ १०९॥
एष एव वरो मुख्यः प्राप्तो मे भृगुनन्दन ।
यत् प्रीतोऽसि ममाचारैः कुलं पूतं ममानघ ॥ ११०॥
एष मेऽनुग्रहो विप्र जीवितेऽपि प्रयोजनम् ।

1. घ—अर्धद्वयं नास्ति

एतद्राज्यफलं चैव तपश्चैतत् परं मम ॥ ११११॥

यदि तु प्रीतिमान् विप्र मयि त्वं भृगुनन्दन ।
अस्ति मे संशयः कश्चित् तन्मे व्याख्यातुमर्हसि ॥* ११२॥

च्यवनः—

वरश्च गृह्यतां मत्तो यश्च ते संशयो हृदि ।
तं च ब्रूहि नरश्रेष्ठ सर्वं सम्पादयामि ते ॥ ११३॥

कुशिकः—

यदि प्रीतोऽसि भगवंस् ततो मे वद भार्गव ।
कारणं श्रोतुमिच्छामि मद्गृहे वासकारितम् ॥ ११४॥

शयनं चैकपार्श्वेन दिवसानेकविंशतिम् ।
[1]न किञ्चिदुक्त्वा गमनं [2]बहिश्च मुनिपुङ्गव ॥ ११५॥

अन्तर्धानमकस्माच्च पुनरेव च दर्शनम् ।
पुनश्च शयनं विप्र दिवसानेकविंशतिम् ॥ ११६॥

तैलाभ्यक्तस्य गमनं भोजनं च गृहे मम ।
समुपानीय विविधं यद्दग्धं जातवेदसा ॥ ११७॥

निर्याणं च रथेनाशु सहसा यत्कृतं त्वया ।
धनानां च विसर्गश्च [3]जलस्यापि च दर्शनम् ॥ ११८॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. क—अर्धद्वयं नास्ति　　2. ब—इतः षट् पादा न सन्ति

3. क-घ—दर्शनस्याप्य

प्रासादानां बहूनां च काञ्चनानां महामुने ।
मणिविद्रुमपादानां पर्यङ्काणां च दर्शनम् ॥ ११९॥

पुनश्चादर्शनं तस्य श्रोतुमिच्छामि कारणम् ।
अतीव ह्यत्र मुह्यामि चिन्तयानो द्विजर्षभ ॥ १२०॥

न चैवात्राधिगच्छामि सर्वस्यास्य विनिश्चयम् ।
एतदिच्छामि कात्स्न्येन सत्यं श्रोतुं तपोधन ॥ १२१॥

च्यवनः—

शृणु सर्वमशेषेण यदिदं येन हेतुना ।
न हि शक्यमनाख्यातुम् एवं पृष्टेन पार्थिव ॥ १२२॥

पितामहस्य वदतः पुरा देवसमागमे ।
श्रुतवानस्मि यद्राजंस् तन्मे निगदतश्शृणु ॥ १२३॥

ब्रह्मक्षत्रविरोधेन भविता कुलसङ्करः ।
पौत्रस्ते भविता राजंस् तेजोवीर्यतपोन्वितः ॥ १२४॥

ततस्स्वकुलरक्षार्थम् अहं त्वां समुपागतः ।
चिकीर्षन् कुशिकोच्छेदं सन्दिधक्षुः कुलं तव ॥ १२५॥

ततोऽहमागम्य पुरा त्वामवोचं महीपते ।
नियमं कश्चिदारिप्सुश् शुश्रूषा क्रियतामिति ॥ १२६॥

न च ते दुष्कृतं किञ्चिद् अहमासादयं गृहे ।

तेन जीवसि राजर्षे न भवेथास्ततोऽन्यथा ॥ १२७॥

एतां बुद्धिं समास्थाय दिवसानेकविंशतिम् ।
सुप्तोऽस्मि यदि मां कश्चिद् बोधयेदिति पार्थिव ॥ १२८॥

यदा त्वया सभार्येण संसुप्तो न प्रबोधितः ।
अहं तदैव प्रीतोऽस्मि मनसा राजसत्तम ॥ १२९॥

उत्थाय चापि निष्क्रान्तो यदि मां त्वं महीपते ।
पृच्छेः क्व यास्यसीत्येवं शपेयं त्वामिति प्रभो ॥ १३०॥

अन्तर्हितश्चास्मि विभो पुनरेव च ते गृहे ।
योगमास्थाय संसुप्तो दिवसानेकविंशतिम् ॥ १३१॥

क्षुधितो नाभ्यसूयेथा श्रमाद्वाऽपि नराधिप ।
एतां बुद्धिं समास्थाय कर्शितो वा मया क्षुधा ॥ १३२॥

न च ते वाक् सुसूक्ष्माऽपि मन्युर्मनसि पार्थिव ।
सभार्यस्य नरश्रेष्ठ तेन ते प्रीतिमानहम् ॥ १३३॥

भोजनं च समानाय्य यत् तदा दीपितं मया ।
क्रुध्येथा यदि मात्सर्याद् इति तन्मर्षितं च ते ॥ १३४॥

रथेन वाहितश्चापि श्रमात् क्रोधोद्भवाय ते ।
ततोऽहं रथमारुह्य त्वामवोचं नराधिप ॥ १३५॥

सभार्यो मां वहस्वेति तच्च त्वं कृतवांस्तथा ॥ १३६

अथाविशं नरपते प्रीतोऽहं चापि तेन ते ।

धनोत्सर्गेऽपि च कृते न त्वां क्रोधोऽप्यधर्षयत् ॥ १३७

ततः प्रीतेन ते राजन् [1]पुनरेवं कृतं ततः ।
सभार्यस्य तदा भूयस् तद्विद्धि मनुजाधिप ॥ १३८

प्रीत्यर्थं तव चैतन्मे स्वर्गसन्दर्शनं कृतम् ।
यत्ते वनेऽस्मिन् नृपते दृष्टवांस्त्वं निदर्शनम् ॥ १३९

स्वर्गोद्देशस्त्वया राजन् सशरीरेण पार्थिव ।
मुहूर्तमनुभूतोऽयं सभार्येण नृपोत्तम ॥ १४०

निदर्शनार्थं तपसो धर्मस्य च परन्तप ।
तत्र नासीत् स्पृहा राजंस् तच्चापि विदितं मम ॥ १४१

ब्राह्मण्यं काङ्क्षसे हि त्वं तपश्च पृथिवीपते ।
अवमत्य नरेन्द्रत्वं देवत्वं चापि पार्थिव ॥ १४२

एवमेतद्यथातत्त्वं ब्राह्मण्यं तात दुर्लभम् ।
ब्राह्मण्ये सति चर्षित्वम् ऋषित्वे च तपस्विता ॥ १४३
भविष्यत्येव ते कामः कुशिकात् कौशिको द्विजः ॥ १४३॥

तृतीयं पुरुषं प्राप्य ब्राह्मणत्वं गमिष्यति ।
वंशस्ते पार्थिवश्रेष्ठ भृगूणामेव तेजसा ॥ १४४॥

पौत्रस्ते भविता विप्रस् तपस्वी पावकद्युतिः ।
यस्स देवमनुष्याणां भयमुत्पादयिष्यति ॥ १४५॥

---

1. क-ख—इतः अष्टौ पादा न सन्ति

जमदग्नौ महाभाग तपसा भावितात्मनि ।
स चापि भृगुशार्दूलस् तवेदं धारयिष्यति ॥ १४६॥
[1]त्रयाणां चैव लोकानां सत्यमेतद् भविष्यति ॥ १४७
वरं गृहाण राजर्षे यस्ते मनसि वर्तते ।
तीर्थयात्रां गमिष्यामि पुरा कालोऽतिवर्तते ॥ १४८

कुशिकः—

एष एव वरो मेऽद्य यत्त्वं प्रीतो महामुने ।
भवत्वेतद्यथाऽऽत्थ त्वं तथा पौत्रो ममानघ ॥ १४९
ब्राह्मण्यं मे कुलस्यास्तु भगवन्नेष मे वरः ।
पुनश्चाख्यातुमिच्छामि भगवन् विस्तरेण वै ॥ १५०
कथमेष्यति विप्रत्वं कुलं मे भृगुनन्दन ।
कश्चास्य भविता बन्धुर् मम कश्च पितामहः ॥* १५१

च्यवनः—

अवश्यं कथनीयं मे तवैतन्नरपुङ्गव ।
यदर्थं चाहमुच्छेत्तुं सम्प्राप्तो मनुजाधिप ॥ १५२
[2]भृगूणां क्षत्रिया याज्या नित्यमेव नराधिप ।
ते च भेदं गमिष्यन्ति दैवयुक्तेन हेतुना ॥ १५३

---

1. अ-क—क्षत्रियाणां च

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

2. अ—अर्धमिदं नास्ति

क्षत्रियाश्च भृगून् सर्वान् वधिष्यन्ति नराधिप ।
आगर्भादनुकृन्तन्तो दैवदण्डनिपीडिताः ॥ १५४

तत उत्पस्यतेऽस्माकं कुलगोत्रविवर्धनः ।
और्वो नाम महातेजा ज्वलितार्कसमद्युतिः ॥ १५५

स त्रैलोक्यविनाशाय [1]कोपाग्निं जनयिष्यति ।
महीं सपर्वतवनां यः करिष्यति भस्मसात् ॥ १५६

कञ्चित् कालं तु तं वह्निं स एव शमयिष्यति ।
समुद्रे वडवावक्त्रे प्रक्षिप्य मुनिसत्तमः ॥ १५७

पुत्रं तस्य महाभागम् ऋचीकं भृगुनन्दनम् ।
साक्षात् स्नेहाद् धनुर्वेदस् समुपस्थास्यतेऽनघ ॥ १५८

क्षत्रियाणामभावाय दैवयुक्तेन हेतुना ।
स तु तं प्रतिगृह्यैव पुत्रे सङ्क्रमयिष्यति ॥ १५९

जमदग्नौ महाभागे तपसा भावितात्मनि ।
स चापि भृगुशार्दूलस् तं वेदं धारयिष्यति ॥ १६०

कुलात्तु तव धर्मात्मन् कन्यां सोऽधिगमिष्यति ।
क्षत्र[2]हन्ता भवेद्विप्र इति देवं सनातनम् ॥ १६१

नारायणमुपास्यास्य वरात्तं पुत्रमृच्छति ॥ १६१॥

---

1. क-घ—पावकं
2. क—बुध्या ख—भर्ता घ—भक्त्या

[1]उत्थापनार्थं भवतो वंशस्य नृपसत्तम ।
गाधेर्दुहितरं प्राप्य पौत्रीं तव महातपाः ॥ १६२॥
ब्राह्मणं क्षत्रधर्माणं पुत्रमुत्पादयिष्यति ॥ १६३
क्षत्रियं विप्रधर्माणं बृहस्पतिमिवौजसा ।
विश्वामित्रं तव कुले गाधेः पुत्रं सुधार्मिकम् ॥ १६४
तपसा महता युक्तं प्रदास्यति महातपाः ॥ १६५
स्त्रियौ तु कारणं तत्र परिवृत्तौ भविष्यतः ।
पितामहनियोगाद्वै नान्यथैतद्भविष्यति ॥ १॥
तृतीये पुरुषे तुभ्यं ब्राह्मणत्वमुपैष्यति ।
भविता त्वं च सम्बन्धी भृगूणां भावितात्मनाम् ॥ १६६॥

भीष्मः—

कुशिकस्तु मुनेर्वाक्यं च्यवनस्य महात्मनः ।
श्रुत्वा हृष्टोऽभवद्राजा वाक्यं चेदमुवाच ह ॥ १६७॥
एवमस्त्विति धर्मात्मा तदा भरतसत्तम ॥ १६८
च्यवनस्तु महातेजाः पुनरेव नराधिपम् ।
वरार्थं चोदयामास तमुवाच स पार्थिवः ॥ १६९

कुशिकः—

बाढमेव ग्रहीष्यामि कामांस्त्वत्तो महामुने ।

---

1. क-ब—इत्थं वरार्थं

ब्रह्मभूयं कुलं मेऽस्तु धर्मे चास्य मनो भवेत् ॥ १७०

भीष्मः—

तथेऽत्युक्तस्तथेत्येव प्रत्युक्त्वा च्यवनो मुनिः ।
अभ्यनुज्ञाय नृपतिं तीर्थयात्रां ययौ तदा ॥ १७१

एतत्ते कथितं सर्वम् अशेषेण मया नृप ।
भृगूणां कुशिकानां च प्रीतिसम्बन्धकारणम् ॥ १७२

यथोक्तं मुनिना चापि तथा तदभवन्नृप ।
जन्म रामस्य च मुनेर् विश्वामित्रस्य चैव ह ॥ १७३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
[ अस्मिन्नध्याये १७३ श्लोकाः ]

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति तत्तद्दानानां विशिष्य फलकथनम् ॥

युधिष्ठिरः—

मुह्यामीति निशम्याद्य चिन्तयानः पुनः पुनः ।
हीनां पार्थिवसिंहैस्तैश् श्रीमद्भिः पृथिवीमिमाम् ॥ १

प्राप्य राज्यानि शतशो महीं जित्वाऽपि भारत ।
कोटिशस्तु नरान् हत्वा परितप्ये पितामह ॥ २

का नु तासां वरस्त्रीणाम् अवस्थाऽद्य भविष्यति ।
या हीनाः पतिभिः पुत्रैर् मातुलैर्बन्धुभिस्तथा ॥ ३

वयं हि तान् गुरून् हत्वा ज्ञातींश्च सुहृदोऽपि च ।
अवाक्शीर्षाः पतिष्यामो नरके नात्र संशयः ॥ ४

शरीरं योक्तुमिच्छामि तपसोग्रेण भारत ।
उपदिष्टमिहेच्छामि तत्त्वतोऽहं विशां पते ॥ ५

वैशम्पायनः—

युधिष्ठिरस्य तद्वाक्यं श्रुत्वा भीष्मो महीपतेः ।
परीक्ष्य निपुणं बुद्ध्या युधिष्ठिरमभाषत ॥ ६

भीष्मः—

[1]रहस्यमद्भुतं चैव शृणु वक्ष्यामि भारत ।
या गतिः प्राप्यते येन प्रेत्यभावेषु भारत ॥ ७

तपसा प्राप्यते स्वर्गस् तपसा प्राप्यते यशः ।
[2]आयुःप्रकर्षो भोगाश्च लभ्यन्ते तपसा विभो ॥ ८

ज्ञानं विज्ञानमारोग्यं रूपसम्पत् तथैव च ।
सौभाग्यं चैव तपसा प्राप्यते भरतर्षभ ॥ ९

धनं प्राप्नोति तपसा मौनं ज्ञानं प्रयच्छति ।
उपभोगांस्तु दानेन ब्रह्मचर्येण जीवितम् ॥ १०

अहिंसायाः फलं रूपं दीक्षया जन्म वै कुले ।

1. अ—इदमर्धं नास्ति  2. ख—आयुः कललभोगा

फलमूलाशनाद्राज्यं स्वर्गः पर्णाशनाद्भवेत् ॥ ११
पयोभक्षो दिवं याति दानेन द्रविणाधिकः ।
गुरुशुश्रूषया विद्या नित्यश्राद्धेन सन्ततिः ॥ १२
गवाढ्यश्शाकदीक्षाभिस् स्वर्गमाहुस्तृणाशनात् ।
स्त्रियस्त्रिषवणस्नानाद् वायुं पीत्वा [1]क्रतुं लभेत् ॥ १३
नित्यस्नायी दीर्घजीवी सन्ध्ये तु द्वे जपन् नृप ।
[2]मन्त्रं साधयतो राज्यं नाकपृष्ठमनाशके ॥ १४
स्थण्डिलेषु शयानानां गृहाणि शयनानि च ।
चीरवल्कलवासोभिर् वासांस्याभरणानि च ॥ १५
शय्यासनानि यानानि योगयुक्ते तपोधने ।
अग्निप्रवेशे नियतं ब्रह्मलोको विधीयते ॥ १६
रसानां प्रतिसंहारात् सौभाग्यमिह विन्दति ।
आमिषप्रतिसंहारात् प्रजा ह्यायुष्मती भवेत् ॥ १७
उदवासं वसेद्यस्तु स नराधिपतिर्भवेत् ।
सत्यवादी नरश्रेष्ठ दैवतैस्सह मोदते ॥ १८
कीर्तिर्भवति दानेन तथाऽऽरोग्यमहिंसया ।
द्विजशुश्रूषया राज्यं द्विजत्वं वाऽपि पुष्कलम् ॥ १९
पानीयस्य प्रदानेन कीर्तिर्भवति शाश्वती ।

---

1. क-ख—ऽमृतं लभेत् 2. ख—मौनं

अन्नपानप्रदानेन तृप्यते कामभोगतः ॥ २०

सान्त्वतस्सर्वभूतानां सर्वशोकैर्विमुच्यते ।
देवशुश्रूषया राज्यं दिव्यं रूपं निगच्छति ॥ २१

दीपालोकप्रदानेन चक्षुष्मान् बुद्धिमान् भवेत् ।
प्रेक्षणीयप्रदानेन स्मृतिं मेधां च विन्दति ॥ २२

गन्धमाल्यप्रदानेन कीर्तिर्भवति पुष्कला ।
केशश्मश्रू धारयताम् अग्र्या भवति सन्ततिः ॥ २३

उपवासं च दीक्षां चाप्यभिषेकं च पार्थिव ।
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते ॥ २४

दासीदासमलङ्कारान् क्षेत्राणि च धनानि च ।
ब्रह्मदेयां सुतां दत्त्वा प्राप्नोति मनुजर्षभ ॥ २५
ऋतुभिश्चोपवासैश्च त्रिदिवं याति भारत ।
लभते तु परं स्थानं बलिपुष्पप्रदो नरः ॥ २६

सुवर्णशृङ्गैस्तु विभूषितानां
गवां सहस्रस्य नरः प्रदाता ।
प्राप्नोति पुण्यं दिवि देवलोकम्
इत्येवमाहुर्मुनिदेवसङ्घाः ॥ २७

प्रयच्छते यः कपिलां सचेलां
कांस्योपदोहां कनकाग्रशृङ्गीम् ।

तैस्तैर्गुणैः कामदुघा तु भूत्वा
नरं प्रदातारमुपैति सा गौः ॥ २८

यावन्ति रोमाणि भवन्ति धेन्वास्
तावत् फलं प्राप्स्यति गोप्रदाता ।
पुत्रांश्च पौत्रांश्च कुलं च सर्वम्
आसप्तमं तारयते परत्र ॥ २९

सदक्षिणां काञ्चनचारुशृङ्गीं
कांस्योपदोहां वसनोत्तरीयाम् ।
धेनुं [1]तिलानां ददतो द्विजाय
लोका वसूनां सुलभा भवन्ति ॥ ३०

स्वकर्मभिर्मानवं सन्निबद्धं
तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वायुयुक्ता
दानं गवां तारयते परत्र ॥ ३१

यो ब्रह्मदेयां तु ददाति कन्यां
भूमिप्रदानं च करोति विप्रे ।
ददाति वित्तं विधिवच्च यश्च
स लोकमाप्नोति पुरन्दरस्य ॥ ३२

1. घ—कुलानां

नैवेशिकं सर्वगुणोपपन्नं
ददाति वै यस्तु नरो द्विजाय ।
स्वाध्यायचारित्रगुणान्विताय
तस्यापि लोकाः कुरुपूत्तरेषु ॥ ३३

धुर्यप्रदानेन गवां तथा वै
लोकानवाप्नोति नरो वसूनाम् ।
स्वर्गाय चाहुर्हि हिरण्यदानं
ततो विशिष्टं कनकप्रदानम् ॥ ३४

[1]छत्रप्रदानेन गृहं वरिष्ठं
यानं तथोपानहसम्प्रदाने ।
वस्त्रप्रदानेन फलं सुरूपं
गन्धप्रदाने सुरभिर्नरस्स्यात् ॥ ३५

पुष्पोपगं वाऽथ फलोपगं वा
यः पादपं स्पर्शयते द्विजाय ।
स स्त्रीसमृद्धं बहुरत्नपूर्णं
लभत्ययत्नोपगतं गृहं वै ॥ ३६

भक्ष्यान्नपानीयरसप्रदाता
सर्वानवाप्नोति रसान् प्रकामम् ।

1. क-घ—क्षेत्रप्रदानेन

प्रतिश्रयाच्छादनसम्प्रदाता
प्राप्नोति तान्येव न संशयोऽत्र ॥ ३७

सधूपगन्धान्यनुलेपनानि
स्नानानि माल्यानि च मानवो यः ।
दद्याद्द्विजेभ्यस्स भवेदरोगस्
तथा सुरूपश्च नरेन्द्र लोके ॥ ३८

बीजैरशून्यं शयनैरुपेतं
दद्याद्गृहं यः पुरुषो द्विजाय ।
[1]पुण्याभिरामं बहुरत्नपूर्णं
लभत्यधिष्ठानवरं स राजन् ॥ ३९

सुगन्धचित्रास्तरणोपपन्नं
दद्यान्नरो यस्सदनं द्विजाय ।
रूपान्वितां पक्षवतीं मनोज्ञां
भार्यामयत्नोपगतां लभेत ॥ ४०

पितामहस्यानुचरो वीरशायी भवेन्नरः ।
नाधिकं विद्यते यस्माद् इत्याहुः परमर्षयः ॥ ४१

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा प्रीतात्मा कुरुनन्दनः ।

---

1. क-घ—अर्धद्वयं नास्ति

नाश्रमेऽरोचयद्वासं वीरमार्गाभिकाङ्क्षया ॥ ४२

ततो युधिष्ठिरः प्राह पाण्डवान् भरतर्षभ ॥ ४२॥

युधिष्ठिरः—

पितामहस्य यद्वाक्यं तद्वो रोचयतु प्रभोः ॥ ४३

वैशम्पायनः—

ततस्तु पाण्डवास्सर्वे द्रौपदी च यशस्विनी ।
युधिष्ठिरस्य तद्वाक्यं बाढमित्यभ्यपूजयन् ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
[ अस्मिन्नध्याये ४४ श्लोकाः ]

---

## ॥ एकोनपञ्चाशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणप्रशंसनपूर्वकं तदाराधनविधानम् ॥

युधिष्ठिरः—

यानीमानि बहिर्वेद्यां दानानि परिचक्षते ।
तेभ्यो विशिष्टं किं दानं मन्यसे कुरुपुङ्गव ॥ १

भीष्मः—

कौतूहलं हि परमं अत्र मे वर्तते विभो ।
दातारं दत्तमन्वेति तद्दानं भरतर्षभ ॥ २
[1]अभयं सर्वभूतेभ्यो व्यसने वाऽप्यनुग्रहः ।
यच्चाभिलषितं दद्यात् तृषितायाभियाचते ॥ ३
भरणे पुत्रदाराणां तद्दानं श्रेष्ठमुच्यते ॥ ३॥
हिरण्यदानं गोदानं पृथिवीदानमेव च ।
एतानि वै पवित्राणि तारयन्त्यपि दुष्कृतान् ॥ ४॥
एतानि पुरुषव्याघ्र साधुभ्यो देहि नित्यदा ।
एतानि हि नरं पापान्मोक्षयन्ति न संशयः ॥ ५॥
यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ ६॥

1. ख—अर्धद्वयं नास्ति

प्रियाणि लभते लोके प्रियदः प्रियकृत्तथा ।
प्रियो भवति भूतानाम् इह चैव परत्र च ॥ ७॥
याचमानावमानाच्च आशावन्तमकिञ्चनम् ।
यो नार्चति यथाशक्ति स नृशंसो युधिष्ठिर ॥ ८॥
अमित्रमपि चेद्दीनं शरणैषिणमागतम् ।
व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः ॥ ९॥
कृशाय ह्रीमते तात वृत्तिक्षीणाय सीदते ।
अपहन्यात् क्षुधं यस्तु न तेन पुरुषस्समः ॥ १०॥
ह्रिया तु नियतान् साधून् पुत्रदारैश्च कर्शितान् ।
अयाचमानान् कौन्तेय सर्वोपायैर्निमन्त्रयेत् ॥ ११॥
आशिषो ये न देवेषु न मर्त्येषु च कुर्वते ।
अर्हन्तो नित्यसत्त्वस्था यथा सर्वोपजीविनः ॥ १२॥
आशीविषसमेभ्यश्च तेभ्यो रक्षस्व भारत ॥ १३
तान् युक्तैरुपविज्ञाप्य भोगैर्निर्वप रक्ष च ॥ १३॥
कृतैरावसथैर्नित्यं सप्रेष्यैस्सपरिच्छदैः ।
निमन्त्रयेथाः कौरव्य सर्वभूतसुखावहैः ॥ १४॥
यदि ते प्रतिगृह्णीयुश् श्रद्धापूतं युधिष्ठिर ।
कार्यमित्येव मन्वाना धार्मिकाः पुण्यकर्मिणः ॥ १५॥
विद्यास्नाता व्रतस्नाता धर्ममाश्रित्य जीविनः ।

गूढस्वाध्यायतपसो ब्राह्मणास्संशितव्रताः ॥ १६॥

तेषु शुद्धेषु दान्तेषु स्वदारनिरतेषु च ।
यत् करिष्यति कल्याणं तत् तल्लोकेषु यास्यति ॥ १७॥

यथाऽग्निहोत्रं सुहुतं सायं प्रातर्विजानता ।
तथा भवति दत्तं वै विद्वद्भ्योऽथ कृतात्मना ॥ १८॥

एष [1]भो विततो यज्ञश् श्रद्धापूतस्सदक्षिणः ।
विशिष्टस्सर्वयज्ञेभ्यो ददतस्तात वर्धताम् ॥ १९॥

निवापा दानसदृशास् सदृशेषु युधिष्ठिर ।
निवपन् पूजयंश्चैनं तेष्वानृण्यं निगच्छति ॥ २०॥

[2]य एवं नैव कुप्यन्ति न लुम्पन्ति तृणेष्वपि ।
[3]त एव नः पूज्यतमा ये चान्ये प्रियवादिनः ॥ २१॥

ये नो नु बहुमन्यन्ते न प्रवर्तन्ति याचने ।
पुत्रवत् परिपाल्यास्ते नमस्तेभ्यस्तथाऽभयम् ॥ २२॥

ऋत्विक्पुरोहिताचार्या मृदुधर्मपरा हि ये ।
क्षात्रेणापि हि संसृष्टं तेजश्शाम्यति तेष्वपि ॥ २३॥

ईश्वरो बलवानस्मि राजाऽस्मीति युधिष्ठिर ।
ब्राह्मणान् मा स्म पर्यासीर् वासोभिरशनेन वा ॥ २४॥

---

1. अ-ख—नो 2. क-घ—य एव नोपलिप्यन्ति
3. क-घ—अर्धपञ्चकं नास्ति

यच्छोभार्थं बलार्थं वा वित्तमस्ति तवानघ ।
तेन ते ब्राह्मणाः पूज्यास् स्वधर्ममनुतिष्ठता ॥ २५॥

नमस्कार्यास्त्वया विप्रा वर्तमाना यथातथम् ।
यथासुखं यथोत्साहं लभन्तु त्वयि पुत्रवत् ॥ २६॥

को ह्यन्य[1]स्सुप्रसादानां सुहृदामल्पतोषिणाम् ।
वृत्तिमर्हत्युपक्षेप्तुं त्वदन्यः कुरुसत्तम ॥ २७॥

यथा पत्याश्रयो धर्मस् स्त्रीणां लोके सनातनः ।
[2]तदेव सुगतिर्नान्या तथाऽस्माकं द्विजातयः ॥ २८॥

यदि नो ब्राह्मणास्तात सन्त्यजेयुरपूजिताः ।
पश्यन्तो दारुणं कर्म सततं क्षत्रिये स्थितम् ॥ २९॥

अवेदानामकीर्तीनाम् अलोकानामयज्विनाम् ।
को नु स्याज्जीवितेनार्थस् तद्धि नो ब्राह्मणाश्रयम् ॥ ३०॥

अत्र ते वर्तयिष्यामि यथा धर्मः पुरातनः ।
राजन्यो ब्राह्मणान् राजन् पुरा परिचचार ह ॥ ३१॥

वैश्यो राजन्यमित्येव शूद्रो वैश्यमिति स्थितिः ॥ ३२

दूराच्छूद्रेणोपचर्यो ब्राह्मणोऽग्निरिव ज्वलन् ।
संस्पृश्य परिचर्यस्तु वैश्येन क्षत्रियेण च ॥ ३३

मृदुभावान् सत्यशीलान् क्षमाशीलानुपासकान् ।

---

1. घ—स्सुप्रदानानाम्    2. क-ब—यथैव स्वागतं मान्यस्तथा

आशीविषानिव क्रुद्धांस् तानुपाचर वै द्विजान् ॥ ३४

अपरेषां परेषां च परेभ्यश्चैव ये परे ।
क्षत्रियाणां [1]प्रभावं च तेजांसि च तपांसि च ॥ ३५

ब्राह्मणेष्वेव मन्यन्ते श्रीरायुर्बलमेव च ॥ ३५॥

न मे पिता प्रियतरो न त्वं तात तथा प्रियः ।
न मे पितुः पिता राजन् न चात्मा न च जीवितम् ॥ ३६॥

त्वत्तश्च मे प्रियतरः पृथिव्यां नास्ति कश्चन ।
त्वत्तोऽपि मे प्रियतरा ब्राह्मणा भरतर्षभ ॥ ३७॥

ब्रवीमि सत्यमेतच्च यथाऽहं पाण्डुनन्दन ।
तेन सत्येन गच्छेयं लोकान् यत्र स शन्तनुः ॥ ३८॥

पश्येयं च सतां लोकाञ् शुचीन् ब्रह्मपुरस्कृतान् ।
तत्र मे तात गन्तव्यम् अह्नाय च चिराय च ॥ ३९॥

सोऽहमेतादृशाँल्लोकान् दृष्ट्वा भरतसत्तम ।
यन्मे कृतं ब्राह्मणेषु न कुप्ये तेन पार्थिव ॥ ४०॥

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां**
**अनुशासनपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥**
**॥ ८९ ॥ आनुशासनिकपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥**
**[ अस्मिन्नध्याये ४०॥ श्लोकाः ]**

---

1. क-ख—प्रतापं च

## ॥ पञ्चाशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणमहिमानुवर्णनम् ॥

युधिष्ठिरः—

यौ तु स्यातां चरणेनोपपन्नौ
यौ विद्यया सदृशौ जन्मना च ।
ताभ्यां दानं कतरस्मै विशिष्टम्
अयाचमानाय च याचते च ॥ १

भीष्मः—

श्रेयो वै याचतः पार्थ दत्तमाहुरयाचते ।
अर्हन्नरो वै धृतिमान् कृपणादकृतात्मनः ॥ २
क्षत्रिये रक्षणधृतिर् ब्राह्मणेऽनर्थिताधृतिः ।
ब्राह्मणो धृतिमान् विद्वान् देवान् प्रीणाति तुष्टिमान् ॥ ३
याच्यमाहुरनीशस्य मतिभारं च भारत ।
उद्वेजयति याचन् हि सदा भूतानि दस्युवत् ॥ ४
म्रियते याचमानो वै तमनुम्रियतेऽददत् ।
ददत् सञ्जीवयत्येनम् आत्मानं च युधिष्ठिर ॥ ५
आनृशंस्यं परो धर्मो याचते यत् प्रदीयते ।
अयाचतस्सीदमानान् सर्वोपायैर्निमन्त्रय ॥ ६

यदि ते तादृशा राष्ट्रे वसेयुस्ते द्विजोत्तमाः ।
भस्मच्छन्नानिवाग्नींस्तान बुध्येथास्त्वं प्रयत्नतः ॥ ७

तपसा दीप्यमानास्ते दहेयुः पृथिवीमपि ।
पूज्या हि ज्ञानविज्ञानतपोयोगसमन्विताः ॥ ८

तेभ्यः पूजां प्रयुञ्जीथा ब्राह्मणेभ्यः परन्तप ॥ ८॥

ददद्बहुविधान् देयान् उपच्छन्दयते च तान् ॥ ९

यदग्निहोत्रे सुहुते सायम्प्रातर्भवेत् फलम् ।
विद्यावेदव्रतवति तद्दानफलमुच्यते ॥ १०

विद्यावेदव्रतस्नातास् तव्यपाश्रयजीविनः ।
गूढस्वाध्यायतपसो ब्राह्मणान् संशितव्रतान् ॥ ११

कृतैरावसथैर्हृद्यैस् सप्रेष्यैस्सपरिच्छदैः ।
निमन्त्रयेथाः कौरव्य कामैश्चान्यैर्द्विजोत्तमान् ॥ १२

अपि ते प्रतिगृह्णीयुश् श्रद्धापूतं युधिष्ठिर ।
कार्यमित्येव मन्वाना धर्मज्ञास्सूक्ष्मदर्शिनः ॥ १३

अपि ते ब्राह्मणा भुक्त्वा गतास्सोद्धरणान् गृहान् ।
येषां दाराः प्रतीक्षन्ते पर्जन्यमिव कर्षकाः ॥ १४

अन्नानि प्रातस्सवने नियता ब्रह्मचारिणः ।
ब्राह्मणास्तात भुञ्जानास् त्रेताग्नीन् प्रीणयन्ति ते ॥ १५

माध्यन्दिनं च सवनं ददतस्ते विवर्ततामू ।
गौर्हिरण्यानि वासांसि तेनेन्द्रः प्रीयतां तव ॥ १६
तृतीयसवनं तत्ते वैश्वदेवं युधिष्ठिर ।
यद्देवेभ्यः पितृभ्यश्च [1]विप्रेभ्यश्च प्रयच्छसि ॥ १७
अहिंसा सर्वभूतेभ्यस् संविभागश्च सर्वशः ।
दमस्त्यागो धृतिस्सत्यं भवन्तु ददतश्च ते ॥ १८
एष ते विततो यज्ञश् श्रद्धापूतस्सदक्षिणः ।
विशिष्टस्सर्वयज्ञेभ्यो नित्यं तात प्रवर्तताम् ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
[ अस्मिन्नध्याये १९ श्लोकाः ]

---

1. क—मनुष्येभ्यः

## ॥ एकपञ्चाशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणप्रशंसनपूर्वकं ब्राह्मणानां प्रजानां च रक्षणस्यावश्यकर्तव्यत्वकथनम् ॥

युधिष्ठिरः—

दानं यज्ञक्रिया चेह किंस्वित् प्रेत्य [1]महाफलम् ।
[2]कस्य ज्यायः फलं किं स्यात् कीदृशेभ्यः कथं कदा ॥ १

भीष्मः—

रौद्रधर्मे क्षत्रियश्च सततं तात वर्तते ।
नास्य वैतानिकफलं विना दानं सुपावनम् ॥ २

न तु पापकृतां राज्ञां याजका द्विजसत्तमाः ।
[3]धने सत्यप्रदातॄणां प्रतिगृह्णन्ति साधवः ॥ ३

प्रतिगृह्णन्ति न तु चेद् यद्दोषादाप्तदक्षिणैः ॥ ३॥

अथ चेत् प्रतिगृह्णीयुर् दद्यादहरहर्नृप ।
श्रद्धामास्थाय परमां पावनं ह्येतदुत्तमम् ॥ ४॥

ब्राह्मणांस्तर्पयेद् द्रव्यैस् स वै यज्ञोऽनुपद्रवः ।
मैत्रान् साधून् वेदविदश् शीलवृत्ततपोन्वितान् ॥ ५॥

1. क-ब—पदं नृणाम्
2. क-ब—अर्धचतुष्टयं नास्ति
3. क-ब—नित्यानुष्ठानयुक्ताश्चेत् प्रति

यज्ञान् सन्धाय साधुभ्यस् सिद्धान्नान् दक्षिणावतः ॥ ६
इष्टवन्तं च मन्येथा आत्मानं दानकर्मणा ।
यज्ञान् साधय साधुभ्यस् स्वयं च यज पार्थिव ॥ ७
यत्ते तेन करिष्यन्ति कृतं तत्ते भविष्यति ।
पूजयेथाश्च यज्ञीयांस् तवाप्यंशो भवेत्तथा ॥ ८
विद्वद्भ्यस्सम्प्रदानेन तत्राप्यंशोऽस्य पूजया ।
यज्वभ्यश्चाथ विद्वद्भ्यो दत्त्वा लोकं प्रदापयेत् ॥ ९
प्रदद्याज्ज्ञानदातॄणां ज्ञानदानांशभाग्भवेत् ॥ ९॥
प्रजावतो भरेथाश्च ब्राह्मणान् बहुभाषिणः ।
प्रजावांस्तेन भवसि यथा जनयिता तथा ॥ १०॥
यावतो वै साधुधर्मान् सन्तस्संवर्धयन्त्युत ।
सर्वे ते चापि भर्तव्या नरा ये बहुभाषिणः ॥ ११॥
समृद्धस्सम्प्रयच्छस्व ब्राह्मणेभ्यो युधिष्ठिर ।
धेनूरनडुहोऽन्नानि च्छत्रं वासांस्युपानहौ ॥ १२॥
आज्यानि यजमानेभ्यस् तथाऽन्नाद्यानि भारत ।
अश्ववन्ति च यानानि वेश्मानि शयनानि च ॥ १३॥
एते देयाः पुष्टिमद्भ्यो लघूपायाश्च भारत ।
अजुगुप्सन् द्विजान् नित्यं ब्राह्मणान् वृत्तिकर्शितान् ॥ १४॥
उपच्छन्नं प्रकाशं वा वृत्त्या तान् प्रतिपादय ।

राजसूयाश्वमेधाभ्यां श्रेयस्तत् क्षत्रियान् प्रति ॥ १५॥
एवं पापैर्विमुक्तस्त्वं पूतस्स्वर्गमवाप्स्यसि ।
स्रंसयित्वा पुनः कोशं यद्राष्ट्रं पालयिष्यसि ॥ १६॥
ततश्च ब्रह्मभूयस्त्वम् अवाप्स्यसि धनानि च ।
आत्मनश्च परेषां च वृत्तिं रक्षस्व भारत ॥ १७॥
पुत्रवच्चापि भृत्यान् स्वान् प्रजाश्च परिपालय ।
योगः क्षेमश्च ते नित्यं ब्राह्मणेष्वस्तु भारत ॥ १८॥
अरक्षितारं हर्तारं विलोप्तारमदायकम् ।
तं स्म राजन् कलिं हन्युः प्रजास्सम्भूय निर्घृणम् ॥ १९॥
अहं वै रक्षितेत्युक्त्वा यो न रक्षति भूमिपः ।
स संहत्यापि हन्तव्यश्श्वेव सोन्माद आतुरः ॥ २०॥
पापं कुर्वन्ति यत् किञ्चित् प्रजा राज्ञा अरक्षिताः ।
चतुर्थं तस्य पापस्य राजा पापं च विन्दति ॥ २१॥
अप्याहुस्सर्वमेवेति भूयोऽर्धमिति निश्चयः ।
चतुर्थं मतमस्माकं मनोश्श्रुत्वाऽनुशासनम् ॥ २२॥
शुभं वा यत् प्रकुर्वन्ति प्रजा राजा सुरक्षिताः ।
चतुर्थं तस्य पुण्यस्य राजा चाप्नोति भारत ॥ २३॥
जीवन्तं चानुजीवन्तु प्रजास्सर्वा युधिष्ठिर ।
पर्जन्यमिव भूतानि महाह्रदमिव द्विपाः ॥ २४॥

कुबेरमिव रक्षांसि शतक्रतुमिवामराः ।
ज्ञातयश्चानुजीवन्तु सुहृदश्च परन्तप ॥ २५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
[ अस्मिन्नध्याये २५॥ श्लोकाः ]

---

## ॥ द्विपञ्चाशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति भूमिगीतगाथाकथन पुरस्सरं सेन्द्रबृहस्पति-संवादानुवादं च भूमिदानप्रशंसनम् ॥

---

युधिष्ठिरः—

इदं देयमिदं देयम् इतीयं श्रुतिचोदना ।
बहुदेयाश्च राजानः किंस्विद्देयमनुत्तमम् ॥ १

भीष्मः—

अति दानानि सर्वाणि पृथिवीदानमुच्यते ।
अचला ह्यक्षया भूमिर् दोग्ध्री कामाननुत्तमान् ॥ २

दोग्ध्री वासांसि रत्नानि पशून् व्रीहियवांस्तथा ।
भूमिदस्सर्वदेयेषु शाश्वतीरेधते समाः ॥ ३

[1]यावद्भूमेरायुरिह तावद्भूमिद एधते ।
न भूमिदानादिह तु परं किञ्चिद्युधिष्ठिर ॥ ४
अप्यल्पं प्रददुस्सर्वं पृथिव्या इति नश्श्रुतम् ।
भूमिमेव ददुस्सर्वे ये भूमिं भुञ्जते जनाः ॥ ५
स्वकर्म चोपजीवन्ति नरा इह परत्र च ।
भूमिः पतिं महादेवी दातारं कुरुते प्रियम् ॥ ६
य एतां दक्षिणां दद्याद् अक्षयां पृथिवीपते ।
पुना राजाऽवनिं प्राप्य भवेत् स पृथिवीपतिः ॥ ७
यथा दत्तं तथा भोग इति धर्मेषु निश्चयः ।
सङ्ग्रामे वा तनुं जह्याद् दद्याद्वा पृथिवीमिमाम् ॥ ८
इत्येताः क्षत्रबन्धूनां वदन्ति परमाशिषः ।
पुनाति दत्ता पृथिवी दातारमिति शुश्रुम ॥ ९
अपि पापसमाचारं ब्रह्मघ्नमपि चानृतम् ।
सैव पापं पावयति सैव पापात् प्रमोचयेत् ॥ १०
अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनं जग[2]तीं यतः ॥ ११
नामास्याः प्रियदत्तेति गुह्यं देव्यास्सनातनम् ।
दानं वाऽप्यथवा ज्ञानं नाम्नोऽस्याः परमं प्रियम् ॥ १२

---

1. क-घ—अर्धत्रयं नास्ति 2. क-घ—तीतले

तस्मात् प्राप्यैव पृथिवीं दद्याद्विप्राय पार्थिवः ॥ १२॥

न भूमिपतिना भूमिर् अधिष्ठेया कथञ्चन ।
न च वस्त्रेण वा गूहेन्नान्तर्धानेन वा चरेत् ॥ १३॥

ये चान्ये भूमिमिच्छेयुः कुर्युरेव न संशयः ।
यस्साधोर्भूमिमादत्ते न भूमिं विन्दते नृप ॥ १४॥

भूमिं तु दत्त्वा साधुभ्यो विन्दते भूमिमेव च ।
प्रेत्येह च स धर्मात्मा सम्प्राप्नोति महद्यशः ॥ १५॥

एकागारकरीं दत्त्वा षष्टिसाहस्रमूर्ध्वगः ।
तावत्या हरणे पृथ्व्या नरकं द्विगुणोत्तरम् ॥ १६॥

यस्य विप्रानुशासन्ति साधोर्भूमिं सदैव हि ।
न तस्य शत्रवो राजन् प्रशासन्ति वसुन्धराम् ॥ १७॥

यत् किञ्चित् पुरुषः पापं कुरुते वृत्तिकर्शितः ।
अपि गोचर्ममात्रेण भूमिदानेन पूयते ॥ १८॥

येऽपि सङ्कीर्णकर्माणो राजानो रौद्रकर्मिणः ।
तेभ्यः पवित्रमाख्येयं भूमिदानमनुत्तमम् ॥ १९॥

अल्पान्तरमिदं शश्वत् पुराणा मेनिरे जनाः ।
यो यजेदश्वमेधेन दद्याद्वा साधवे महीम् ॥ २०॥

अथ चेत् सुकृतं कृत्वा शङ्केरन्नपि पण्डिताः ।
अशक्यमेकमेवैतद् भूमिदानमनुत्तमम् ॥ २१॥

सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च ।
सर्वमेतन्महाप्राज्ञ ददाति वसुधां ददत् ॥ २२॥

तपो यज्ञाश्श्रुतं शीलम् अद्रोहस्सत्यसन्धता ।
गुरुदैवतपूजा च नातिक्रामन्ति भूमिदम् ॥ २३॥

भर्तुर्निश्श्रेयसे युक्तास् त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकगतास्सिद्धा नातिक्रामन्ति भूमिदम् ॥ २४॥

यथा जनित्री क्षीरेण स्वपुत्रं भरते सदा ।
अनुगृह्णाति दातारं तथा सर्वरसैर्मही ॥ २५॥

मृत्योर्वै किङ्करा दण्डास् तापो वह्नेस्सुदारुणः ।
घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदम् ॥ २६॥

हलकृष्टां महीं दत्त्वा सबीजां सफलामपि ।
सोदकं वाऽपि शरणं तथा भवति कामदः ॥ २७॥

ब्राह्मणं वृत्तसम्पन्नम् आहिताग्निं शुचिव्रतम् ।
नरः प्रतिग्राह्य महीं न याति यमसादनम् ॥ २८॥

यथा चन्द्रमसो वृद्धिर् अहन्यहनि जायते ।
तथा भूमिकृतं दानं सस्ये सस्ये विवर्धते ॥ २९॥

अत्र गाथा भूमिगीताः कीर्तयन्ति पुराविदः ।
याश्श्रुत्वा जामदग्न्येन दत्ता भूः काश्यपाय वै ॥ ३०॥

[1]मामेवादत्त मां दत्त मां दत्त्वा मामवाप्स्यथ ।
अस्मिँल्लोके परे चैव ततश्च जनने पुनः ॥ ३१॥

य इमां व्याहृतिं वेद ब्राह्मणो ब्रह्मसंश्रितः ।
श्राद्धस्य हूयमानस्य ब्रह्मभूयं स गच्छति ॥ ३२॥

कृत्यानामभिशप्तानाम् अरिष्टशमनं महत् ।
प्रायश्चित्तं महद्दत्त्वा पुनात्युभयतो दश ॥ ३३॥

पुनाति य इदं वेद वेद्मि चाहं तथैव तम् ।
प्रकृतिस्सर्वभूतानां भूमिर्वै शाश्वती मता ॥ ३४॥

अभिषिच्यैव नृपतिं श्रावयेदिममागमम् ।
यथा श्रुत्वा महीं दद्यान्नादद्यात् साधुतश्च ताम् ॥ ३५॥

साऽहं कृत्स्ना ब्राह्मणार्था राजानश्चाप्यसंशयः ।
राजा हि धर्मकुशलः प्रथमं भूमिलक्षणम् ॥ ३६॥

अथ येषामधर्मज्ञो राजा भवति नास्तिकः ।
न ते सुखं प्रबुध्यन्ते न सुखं प्रस्वपन्ति च ॥ ३७॥

तस्य राज्ञश्शुभैः कार्यैः कर्मभिर्निर्वृताः प्रजाः ।
योगक्षेमेण वृष्ट्या च विवर्धन्ते स्वकर्मभिः ॥ ३८॥

स कुलीनस्स पुरुषस् स बन्धुस्स च पुण्यकृत् ।
स राजा स च विक्रान्तो यो ददाति वसुन्धराम् ॥ ३९॥

---

1. क-घ—मामेव दत्तामादाय मां दत्त्वा

आदित्य इव [1]दीप्येत तेजसा त्विह मानवः ।
ददाति वसुधां स्फीतां यो वेदविदुषि द्विजे ॥ ४०॥

यथा बीजानि रोहन्ति प्रकीर्णानि महीतले ।
तथा कामाः प्ररोहन्ति भूमिदानसमार्जिताः ॥ ४१॥

आदित्यो वरुणो विष्णुर् ब्रह्मा सोमो हुताशनः ।
शूलपाणिश्च भगवान् प्रतिनन्दन्ति भूमिदम् ॥ ४२॥

भूमौ जायन्ति पुरुषा भूमौ निष्ठां व्रजन्त्यपि ।
चतुर्विधो हि लोकोऽयं सोऽयं भूमिगुणात्मकः ॥ ४३॥

[2]एषा माता पिता चैव जगतः पृथिवीपते ।
नानया सदृशं भूतं किञ्चिदस्ति नराधिप ॥ ४४॥

सौवर्णयन्त्रप्रासादा वसोर्धाराश्च कामदाः ।
गन्धर्वाप्सरसो यत्र तत्र गच्छन्ति भूमिदाः ॥ ४५॥

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
बृहस्पतेश्च संवादम् इन्द्रस्य च युधिष्ठिर ॥ ४६॥

इष्ट्वा क्रतुशतेनाथ महता दक्षिणावता ।
मघवा वाग्विदां श्रेष्ठं पप्रच्छेदं बृहस्पतिम् ॥ ४७॥

इन्द्रः—

भगवन् येन दानेन स्वर्गे वै सुखमेधते ।

---

1. क-घ—दीप्तेन तेजसा सतु मानवः 2. क-घ—अर्धसप्तकं नास्ति

यदक्षरमहार्यं च तद्ब्रूहि वदतां वर ॥ ४८॥

भीष्मः—

इत्युक्तस्स सुरेन्द्रेण ततो देवपुरोहितः ।
बृहस्पतिर्महातेजाः प्रत्युवाच शतक्रतुम् ॥ ४९॥

बृहस्पतिः—

सुवर्णदानं गोदानं भूमिदानं च वृत्रहन् ।
विद्यादानं च कन्यानां दानं पापहरं परम् ॥ ५०॥

ददद्देतान् महाप्राज्ञस् सर्वपापैः प्रमुच्यते ॥ ५१

न भूमिदानाद्देवेन्द्र परं किञ्चिदिति प्रभो ।
विशिष्टमिति मन्येऽहं तथा प्राहुर्मनीषिणः ॥ ५२

ब्राह्मणार्थे गवार्थे वा राष्ट्रघातेऽथ स्वामिनः ।
कुलस्त्रीणां परिभवे मृतास्ते भूमिदैस्समाः ॥ ५३

ये शूराश्शयिता युद्धे स्वर्याता दानगृद्धिनः ।
सर्वे ते विबुधश्रेष्ठ नातिक्रामन्ति भूमिदम् ॥ ५४

भर्तुर्निश्श्रेयसे युक्तास् त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकं गताश्शूरा नातिक्रामन्ति भूमिदम् ॥ ५५

पञ्च पूर्वा हि पुरुषाः षट् च ये च स्वधां गताः ।
एकादश ददद्भूमिं परित्रातीह मानवः ॥ ५६

रत्नोपकीर्णां वसुधां यो ददाति पुरन्दर ।

स मुक्तस्सर्वकलुषैस् स्वर्गलोके महीयते ॥ ५७

महीं स्फीतां ददद्राजा सर्वकामगुणान्विताम् ।
राजाधिराजो भवति तद्धि दानमनुत्तमम् ॥ ५८

सर्वकामसमायुक्तां काश्यपीं यः प्रयच्छति ।
सर्वभूतानि मन्यन्ते मां ददातीति वासव ॥ ५९

सर्वकामदुघां धेनुं सर्वकामपुरोगमाम् ।
ददाति यस्सहस्राक्ष स स्वर्गं याति मानवः ॥ ६०

मधुसर्पिःप्रवाहिण्यः पयोदधिवहास्तथा ।
सरितस्तर्पयन्तीह सुरेन्द्र वसुधाप्रदम् ॥ ६१

भूमिप्रदानान्नृपतिर् मुच्यते राज्यकिल्बिषात् ।
न हि भूमिप्रदानेन दानमन्यद्विशिष्यते ॥ ६२

ददाति यस्समुद्रान्तां पृथिवीं शस्त्रनिर्जिताम् ।
तं जनाः कथयन्तीह यावद्धरति गौरियम् ॥ ६३

पुण्यां रसभृतां भूमिं यो ददाति पुरन्दर ॥ ६३॥

अपि कृत्वा नरः पापं भूमिं दत्त्वा द्विजातये ।
समुत्सृजति तत् पापं जीर्णां त्वचमिवोरगः ॥ ६४॥

सागरान् सरितश्शैलान् काननानि च सर्वशः ।
सर्वमेतन्नरश्शक्र ददाति वसुधां ददत् ॥ ६५॥

[1]तटाकान्युदपानानि स्रोतांसि च सरांसि च ।
स्नेहान् सर्वरसांश्चैव ददाति वसुधां ददत् ॥ ६६॥

ओषधीर्वीर्यसम्पन्ना नगान् पुष्पफलान्वितान् ।
काननोपलशैलांश्च ददाति वसुधां ददन् ॥ ६७॥

अग्निष्टोमप्रभृतिभिर् इष्ट्वा च स्वाप्तदक्षिणैः ।
न तत् फलमुपाश्नाति भूमिदानाद्यदश्नुते ॥ ६८॥

दाता दशानुगृह्णाति दश हन्ति तथाऽऽक्षिपन् ।
पूर्वदत्तां हरन् भूमिं नरकायोपगच्छति ॥ ६९॥

न ददाति प्रतिश्रुत्य दत्त्वा वा हरते तु यः ।
स बद्धो वारुणैः पाशैस् तप्यते मृत्युशासनात् ॥ ७०॥

आहिताग्निं सदायज्ञं कृशभृत्यं प्रियातिथिम् ।
ये भरन्ति द्विजश्रेष्ठं नोपसर्पन्ति ते यमम् ॥ ७१॥

ब्राह्मणेष्वृणभूतं स्यात् पार्थिवस्य पुरन्दर ।
इतरेषां तु वर्णानां तारयेद् भृशदुर्बलान् ॥ ७२॥

नाच्छिन्द्यात् स्पर्शितां भूमिं परेण त्रिदशाधिप ।
ब्राह्मणाय सुरश्रेष्ठ कृशभृत्याय कश्चन ॥ ७३॥

अथाश्रु पतितं तेषां दीनानामवसीदताम् ।
ब्राह्मणानां हृते क्षेत्रे हन्यात् त्रिपुरुषं कुलम् ॥ ७४॥

---

1. अ-ख—अर्धचतुष्टयं नास्ति

भूमिपालं च्युतं राष्ट्राद् यस्तु संस्थापयेत् पुनः ।
तस्य वासस्सहस्राक्ष नाकपृष्ठे महीयते ॥ ७५॥

[1]इक्षुभिस्सन्ततां भूमिं यवगोधूमशाद्वलाम् ।
गोश्ववाहनसम्पूर्णां यो ददाति वसुन्धराम् ॥ ७६॥

विमुक्तस्सर्वपापेभ्यस् स्वर्गलोके महीयते ॥ ७७

निधिगर्भां ददद्भूमिं सर्वरत्नपरिच्छदाम् ।
अक्षयाँल्लभते लोकान् भूमिसत्रं हि तस्य तत् ॥ ७८

विधूय कलुषं सर्वं विरजास्सम्मतस्सताम् ।
लोके महीयते सद्भिर् यो ददाति वसुन्धराम् ॥ ७९

यथाऽप्सु पतितश्शक्र तैलबिन्दुर्विसर्पति ।
तथा भूमिकृतं दानं सस्ये सस्ये विसर्पति ॥ ८०

ये रणाग्रे महीपालाश् शूरास्समितिशोभनाः ।
वध्यन्तेऽभिमुखाश्शक्र ब्रह्मलोकं व्रजन्ति ते ॥ ८१

नृत्तगीतपरा नार्यो दिव्यमाल्यविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र [2]सदा भूमिप्रदं दिवि ॥ ८२

[3]मोदते च सुखं स्वर्गे देवगन्धर्वपूजितः ।
यो ददाति महीं सम्यग् विधिनेह द्विजातये ॥ ८३

---

1. अ—अर्धत्रयं नास्ति 2. क-घ—ब्रह्मलोके धराप्रदम्
3. अ-ख—अर्धचतुष्टयं नास्ति

शतमप्सरसश्चैव दिव्यमाल्यविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र ब्रह्मलोके धराप्रदम् ॥ ८४

उपतिष्ठन्ति पुण्यानि सदा भूमिप्रदं नरम् ।
शङ्खं भद्रासनं छत्रं वराश्वा वरवारणाः ॥ ८५

भूमिप्रदानपुष्पाणि हिरण्यनिचयास्तथा ।
आज्ञा सदाऽप्रतिहता जयशब्दो भवत्यथ ॥ ८६

भूमिदानस्य पुष्पाणि फलं स्वर्गः पुरन्दर ।
हिरण्यपुष्पाण्योषध्यः बृहत्काञ्चनशाद्वलाः ॥ ८७

अमृतप्रभवां भूमिं प्राप्नोति पुरुषो ददत् ॥ ८७॥

नास्ति भूमिसमं दानं नास्ति [1]भूमिसमो गुरुः ।
नास्ति सत्यसमो धर्मो नास्ति दानसमो निधिः ॥ ८८॥

भीष्मः—

एतदाङ्गिरसाच्छ्रुत्वा वासवो वसुधामिमाम् ।
वसुरत्नसमाकीर्णां ददावाङ्गिरसे तदा ॥ ८९॥

य इमं श्रावयेच्छ्राद्धे भूमिदानस्य संस्तवम् ।
न तस्य रक्षसां भागो नासुराणां भवत्युत ॥ ९०॥

अक्षयं च भवेद्दत्तं पितृभ्यस्तन्न संशयः ।
तस्माच्छ्राद्धेष्विदं विप्रो भुञ्जतश्श्रावयेद्द्विजान् ॥ ९१॥

1. क—मन्त्र ख—मातृ

इत्येतत् सर्वदानानां श्रेष्ठमुक्तं तवानघ ।
मया भरतशार्दूल किं भूयश्श्रोतुमिच्छसि ॥ ९२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
[ अस्मिन्नध्याये ९२॥ श्लोकाः ]

---

## ॥ त्रिपञ्चाशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रत्यन्नदानप्रशंसनपूर्वकं तत्फलकथनम् ॥

---

युधिष्ठिरः—

कानि दानानि लोकेऽस्मिन् दातुकामो महीपतिः ।
गुणाधिकेभ्यो विप्रेभ्यो दद्याद्भरतसत्तम ॥ १

केन तुष्यन्ति ते सद्यस् तुष्टाः किं प्रदिशन्त्युत ।
सर्वमेतन्महाराज फलं पुण्यकृतं महत् ॥ २

दत्तं किं फलवद्राजन्निह लोके परत्र च ।
भगवञ् श्रोतुमिच्छामि तन्मे विस्तरतो वद ॥ ३

भीष्मः—

इममर्थं पुरा पृष्टो नारदो देवदर्शनः ।
यदुक्तवानसौ तन्मे गदतश्शृणु भारत ॥ ४

नारदः—

अन्नमेव प्रशंसन्ति देवास्सर्षिगणाः पुरा ।
लोकतन्त्रं हि यज्ञाश्च सर्वमन्ने प्रतिष्ठितम् ॥ ५

अन्नेन सदृशं दानं न भूतं न भविष्यति ।
तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः ॥ ६

अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः ।
अन्नेन साध्यते सर्वं विश्वं जगदिदं प्रभो ॥ ७

अन्नाद्गृहस्थो लोकेऽस्मिन् भिक्षवस्तत एव च ।
अन्नात् प्रभवति प्राणः प्रत्यक्षं नात्र संशयः ॥ ८

कुटुम्बं पीडयित्वाऽपि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे चान्नम् आत्मनो भूतिमिच्छता ॥ ९

ब्राह्मणायाभिरूपाय यो ददात्यन्नमर्थिने ।
निदधाति निधिश्रेष्ठं पारलौकिकमात्मनः ॥ १०

श्रान्तमध्वनि वर्तन्तं वृद्धमर्हमुपस्थितम् ।
अर्चयेद्भूतिमन्विच्छन् गृहस्थो गृहमागतम् ॥ ११

क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।
अन्नदः प्राप्नुते राजन् दिवि चेह महत् सुखम् ॥ १२

नावमन्येदभिगतं न प्रणुद्यात् कथञ्चन ।

अपि श्वपाके शुनि वा [1]ह्यन्नदानं प्रतिष्ठितम् ॥ १३

यो दद्यादपरिक्लिष्टम् अन्नमध्वनि वर्तते ।
श्रान्तायादृष्टपूर्वाय स महत्त्वमवाप्नुयात् ॥ १४

पितॄन् देवानृषीन् विप्रान् अतिथींश्च जनाधिप ।
यो नरः प्रीणयत्यन्नैस् तस्य पुण्यफलं महत् ॥ १५

कृत्वाऽपि पातकं कर्म यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण न स पापेन युज्यते ॥ १६

ब्राह्मणेष्वेव यद्दानम् अन्नं शूद्रे महाफलम् ।
अन्नदानं हि शूद्रे च ब्राह्मणे च विशिष्यते ॥ १७

न पृच्छेद्गोत्रचरणं स्वाध्यायं देशमेव वा ।
[2]भिक्षितो ब्राह्मणेनान्नं दद्यादेवाविचारतः ॥ १८

अन्नदस्यान्नदा वृक्षास् सर्वकामफलान्विताः ।
भवन्तीह तथाऽमुत्र नृपते नात्र संशयः ॥ १९

आशंसन्ते हि पितरस् सुवृष्टिमिव कर्षकाः ॥ १९॥

अस्माकमपि पुत्रो वा पौत्रो वाऽन्नं प्रदास्यति ॥ २०

ब्राह्मणो हि महद्भूतं स्वयं देहीति याचते ।

1. ख—नान्नदानं प्रविश्यति    2. क-घ—भिक्षवे ब्राह्मणाया

अकामो वा सकामो वा दत्त्वा पुण्यमवाप्नुयात् ॥ २१
ब्राह्मणस्सर्वभूतानाम् अतिथिः प्रसृताग्रभुक् ।
विप्रा यमभिगच्छन्ति भिक्षमाणा गृहं सदा ॥ २२
सत्कृताश्च निवर्तन्ते [1]तदतीव प्रवर्धते ।
महाभागे कुले जन्म प्रेत्य प्राप्नोति भारत ॥ २३
दत्त्वा त्वन्नं नरो लोके तस्य स्थानमनुत्तमम् ।
स्विष्टमृष्टान्नदायी तु स्वर्गे भवति सत्कृतः ॥ २४
अन्नं प्राणा नराणां हि सर्वमन्ने प्रतिष्ठितम् ।
[2]अन्नदः पशुमान् [3]पुत्री धनवान् भोगवानपि ॥ २५
प्राणवांश्चापि भवति रूपवांश्च नराधिप ।
अन्नदः प्राणदो लोके सर्वदः प्रोच्यते तु सः ॥ २६
अन्नं हि दत्त्वाऽतिथये ब्राह्मणाय यथाविधि ।
प्रदाता [4]सर्वमाप्नोति दैवैश्चाप्यभिपूज्यते ॥ २७
ब्राह्मणो हि महद्भूतं क्षेत्रं चरति पादवत् ।
उप्यते यत्र यद्बीजं तद्धि पुण्यफलं महत् ॥ २८
प्रत्यक्षं प्रीतिजननं भोक्तृदात्रोर्भवत्युत ।
सर्वाण्यन्यानि दानानि परोक्षफलवन्त्युत ॥ २९

---

1. अ—दाता चैव
2. ख—इतस्त्रयोदशार्धानि न सन्ति
3. क-ब—पुत्रधनवान् हेमवानपि
4. ब—सुख

अन्नाद्धि प्रभवं विद्धि [1]रतिरन्नाद्धि पार्थिव ।
धर्मार्थावन्नतो विद्धि रोगनाशं तथाऽऽत्मनः ॥ ३०

अन्नं ह्यमृतमित्याह पुरा काले प्रजापतिः ।
अन्नं दिवं भुवं खं च सर्वमन्ने प्रतिष्ठितम् ॥ ३१

अन्नप्रणाशे भिद्यन्ते शरीरे पञ्च धातवः ।
बलं बलवतोऽपीह प्रणश्यत्यन्नहानिभिः ॥ ३२

आवाहाश्च विवाहाश्च यज्ञाश्चान्नमृते तथा ।
न वर्तन्ते नरश्रेष्ठ ब्रह्म चानुप्रहीयते ॥ ३३

[2]अन्नतस्सर्वमेतद्धि यत्किञ्चित् स्थाणु जङ्गमम् ।
त्रिषु लोकेषु धर्मार्थम् अन्नं देयं सदा बुधैः ॥ ३४

अन्नदस्य मनुष्यस्य बलमोजो यशस्सुखम्
कीर्तिश्च वर्धते शश्वत् त्रिषु लोकेषु पार्थिव ॥ ३५

मेघेषु कं सन्निधत्ते प्राणानां पवनश्शिवः
तच्च मेघगतं वारि शक्रो वर्षति भारत ॥ ३६

आदत्ते च रसं भौमम् आदित्यस्स्वगभस्तिभिः ।
वायुरादित्यतस्स्वं च रसादेव प्रजापतिः ॥ ३७

तद्यदा मेघतो वारि पतितं भवति क्षितौ ।

---

1. क—अन्नमन्ना ब—वृद्धिरन्ना
2. ख-ब—अन्नदस्सत्यमे

तदा वसुमती देवी स्निग्धा भवति भारत ॥ ३८

ततस्सस्यानि रोहन्ति येन वर्तयते जगत् ।
मांसमेदोस्थि[1]शुक्लाणां प्रादुर्भावस्ततः पुनः ॥ ३९

सम्भवन्ति ततश्शुक्लात् प्राणिनः पृथिवीपते ।
अग्नीषोमौ हि तच्छुक्लम् प्रजातं पुष्यतश्च ह ॥ ४०

एवमन्नञ्च सूर्यश्च पवनश्शुक्रमेव च ।
एक एव स्मृतो राशिस् तिर्यग् भूतानि जज्ञिरे ॥ ४१

प्राणान् ददाति भूतानां तेजश्च भरतर्षभ ।
गृहमभ्यागतायाशु यो दद्यादन्नमर्थिने ॥ ४२

भीष्मः—

नारदेनैवमुक्तोऽहम् अन्नदानं सदा नृप ।
अनसूयुस्त्वमप्यन्नं तस्माद्देहि ततः परम् ॥ ४३

दत्त्वाऽन्नं विधिवद्राजन् विप्रेभ्यस्त्वमपि प्रभो ।
यथावदनुरूपेभ्यस् ततस्स्वर्गमवाप्स्यसि ॥ ४४

अन्नदानं हि ये लोकास् तांस्त्वं शृणु नराधिप ।
भवनानि प्रकाशन्ते दिवि तेषां महात्मनाम् ॥ ४५

नानासंस्थानरूपाणि नानास्तम्भान्वितानि च ।
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ॥ ४६

---

1. क—भक्ष्याणां

तरुणादित्यवर्णानि स्थावराणि चराणि च ।
अनेकशतभौमानि सान्तर्जलवनानि च ॥ ४७

वैडूर्यार्कप्रकाशानि रौप्यरुक्ममयानि च ।
सर्वकामफलाश्चापि वृक्षा भवनसंस्थिताः ॥ ४८

वाप्यो वीथ्यस्सभाः कूपा दीर्घिकाश्चापि सर्वशः ।
[1]घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ॥ ४९

भक्ष्यभोज्यमयाश्शैला वासांस्याभरणानि च ।
क्षीरं स्रवन्त्यस्सरितस् तथा चैवान्नपर्वताः ॥ ५०

प्रासादाः पाण्डुराभ्राभाश् शय्याश्च कनकोज्ज्वलाः ।
तानन्नदाः प्रपद्यन्ते तस्मादन्नप्रदो भव ॥ ५१

एते लोकाः पुण्यकृताम् अन्नदानां महात्मनाम् ।
तस्मादन्नं विशेषेण दातव्यं मानवैर्भुवि ॥ ५२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
[ अस्मिन्नध्याये ५२ श्लोकाः ]

---

1. क-ख—पत्रवन्ति

## ॥ चतुःपञ्चाशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रत्यश्विन्यादिनक्षत्रयोगेऽन्नदानफलप्रतिपादक-नारददेवकीसंवादानुवादः ॥ १ ॥ जलादिदानफलप्रतिपादनम् ॥ २ ॥

युधिष्ठिरः—

श्रुतं मे भवतो वाक्यम् अन्नदानस्य यो विधिः ।
नक्षत्रयोगस्येदानीं दानकल्पं ब्रवीहि मे ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
देवक्याश्चैव संवादं देवर्षेर्नारदस्य च ॥ २

द्वारकामनुसम्प्राप्तं नारदं देवदर्शनम् ।
पप्रच्छेदं नृप प्रश्नं देवकी धर्मदर्शिनी ॥ ३

तस्यास्तु पृच्छमानाया देवर्षिर्नारदस्तदा ।
आचष्ट विधिवत् सर्वं यत् तच्छृणु विशां पते ॥ ४

नारदः—

कृत्तिकासु महाभागे पायसेन सुसर्पिषा ।
सन्तर्प्य ब्राह्मणान् साधूँल्लोकानाप्नोत्यनुत्तमान् ॥ ५

रोहिण्यां प्रथितैर्मांसैर् [1]अन्नेन सह सर्पिषा ।

1. क-घ—रसैरन्नेन सर्पिषा

पयोऽनुपानं दातव्यम् आनृण्यार्थं द्विजातये ॥ ६

दोग्ध्रीं दत्त्वा सवत्सां तु नक्षत्रे सोमदैवते ।
उह्यते मानुषाल्लोकात् स्वर्गलोकमनुत्तमम् ॥ ७

आर्द्रायां कृसरं दत्त्वा तैलमिश्रमुपोषितः ।
नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥ ८

अपूपान् पुनर्वसौ दत्त्वा तथैवान्नानि शोभने ।
यशस्वी रूपसम्पन्नो बह्वन्नो जायते कुले ॥ ९

पुष्ये तु कनकं दत्त्वा कृतं चाऽकृतमेव च ।
अनालोकेषु लोकेषु सोमवत्सु विराजते ॥ १०

आश्लेषा[1]यां तु यो रूप्यम् वृषभं वा प्रयच्छति ।
[2]स सर्पभयनिर्मुक्तश् शास्त्रवानधितिष्ठति ॥ ११

मघासु तिलपूर्णानि वर्धमानानि मानवः ।
प्रदाय पुत्रपशुमान् इह प्रेत्य च मोदते ॥ १२

फल्गुनीपूर्वसमये ब्राह्मणस्समुपोषितः ।
प्रणीतं तक्रसम्मिश्रं दत्त्वा सौभाग्यमृच्छति ॥ १३

घृतक्षीरसमायुक्तं विधिवत् षाष्टिकौदनम् ।
उत्तराविषये दत्त्वा स्वर्गलोके महीयते ॥ १४

यद्यत् प्रदीयते दानम् उत्तराविषये नरैः ।

---

1. क-घ—सु तथा   2. क-ख-घ—अर्धपञ्चकं नास्ति

महाफलमनन्तं च तद्भवति भूरिशः ॥ १५

हस्ते हस्तिरथं दत्त्वा चतुर्युक्तमुपोषितः ।
प्राप्नोति परमाँल्लोकान् पुण्यान् कामसमन्वितान् ॥ १६

चित्रायामृषभं दत्त्वा [1]पुण्यगन्धांश्च भारत ।
चरत्यप्सरसां लोके चरते नन्दने तथा ॥ १७

स्वातावपि धनं दत्त्वा यदिष्टतममर्थिनः ।
प्राप्नोति लोकान् स शुभान् इह चैव महद्यशः ॥ १८

विशाखायामनड्वाहं धेनुं दत्त्वा सुसम्मताम् ।
सप्रासङ्गं च शकटं सधान्यं वसु सत्तम ॥ १९

पितॄन् देवांश्च प्रीणाति प्रेत्य चानन्त्यमश्नुते ।
न च दुर्गाण्यवाप्नोति स्वर्गलोकं स गच्छति ॥ २०

दत्त्वा यथेष्टं विप्रेभ्यो वृत्तिमिष्टां स विन्दति ।
[2]नरकादींश्च सङ्क्लेशान् नाप्नोतीति विनिश्चयः ॥ २१

अनुराधासु प्रावारं वस्त्रास्तरमुपोषितः ।
दत्त्वा युगशतं चापि नरस्स्वर्गे महीयते ॥ २२

कालशाकं तु विप्रेभ्यो दत्त्वा विप्रस्समूलकम् ।
ज्येष्ठायामृद्धिमिष्टां वै गतिमिष्टां च विन्दति । २३

1. क—स्वर्गलोके महीयते

2. अ—अर्धपञ्चकं नास्ति

मूले मूलफलं दत्त्वा ब्राह्मणेभ्यस्समाहितः ।
पितॄन् प्रीणयते चापि गतिमिष्टां च विन्दति ॥ २४

अथ पूर्वास्वषाढासु दधि[1]पात्राण्युपोषितः ।
कुलवृत्तोपसम्पन्ने ब्राह्मणे वेदपारगे ॥ २५

प्रदाय जायते प्रेत्य कुले सुबहु शोभने ।
उदमन्थं ससर्पिष्कं प्रभूतमधुफाणितम् ॥ २६

दत्त्वोत्तरास्वषाढासु सर्वकामानवाप्यते ।
दुग्धं त्वभिजिते योगे दत्त्वा मधुघृताप्लुतम् ॥ २७

धर्मनित्यो मनीषिभ्यस् स्वर्गलोके महीयते ॥ २७॥
श्रवणे कम्बलं दत्त्वा वस्त्रान्तरितमेव च ।
श्वेतेन याति यानेन स्वर्गलोकानसंवृतान् ॥ २८॥

गोप्रयुक्तं श्रविष्ठासु यानं दत्त्वा समाहितः ।
वस्त्ररश्मिसमायुक्तं प्रेत्य राज्यं प्रवर्तते ॥ २९॥

गन्धाञ् शतभिषग्योगे दत्त्वा चागुरुचन्दनान् ।
प्राप्नोत्यप्सरसां लोकान् प्रेत्य गन्धांश्च शोभनान् ॥ ३०॥

पूर्वप्रोष्ठपदायोगे छागमांसं प्रदाय तु ।
सर्वभक्षफलोपेतं स वै प्रेत्य सुखी भवेत् ॥ ३१॥

औरभ्रमुत्तरायोगे यस्तु मांसं प्रयच्छति ।

1. क-ब—मन्थमुपो

स पितॄन् प्रीणयति वै प्रेत्य चानन्त्यमश्नुते ॥ ३२॥

कांस्योपदोहनां धेनुं रेवत्यां यः प्रयच्छति ।
सा प्रेत्य कामानादाय दातारमुपगच्छति ॥ ३३॥

रथमश्वसमायुक्तं दत्त्वाऽश्विन्यां नरोत्तम ।
हस्त्यश्वरथसम्पन्ने वर्चस्वी जायते कुले ॥ ३४॥

भरणीषु द्विजातिभ्यस् तिलधेनुं प्रदाय वै ।
गास्सुप्रभूताः प्राप्नोति नरः प्रेत्य यशस्तथा ॥ ३५॥

भीष्मः—

इत्येवं लक्षणोद्देशो ह्युक्तो नक्षत्रयोगतः ।
देवक्या नारदेनेह सा स्नुषाभ्योऽब्रवीदिदम् * ॥ ३६॥

सर्वान् कामान् प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनम् ।
इत्येवं भगवानत्रिः पितामहसुतोऽब्रवीत् ॥ ३७॥

पवित्रं शुच्यथायुष्यं पितॄणामक्षयं च तत् ।
सुवर्णं मनुजेन्द्रेण हरिश्चन्द्रेण कीर्तितम् ॥ ३८॥

पानीयदानं परमं दानानां मनुरब्रवीत् ।
तस्मात् कूपांश्च वापीश्च तटाकानि च खानयेत् ॥ ३९॥

सर्वं विनाशयेत् पापं पुरुषस्येह कर्मणः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

कूपः प्रवृत्तपानीयस् सुवृत्तस्स हि नित्यशः ॥ ४०॥
सर्वांस्तारयते वंश्यान् यस्य खाते जलाशये ।
गावः पिबन्ति विप्राश्च साधवश्चैव ये नराः ॥ ४१॥
निदाघकाले पानीयं यस्य तिष्ठत्यवारितम् ।
सुदुर्गं विषमं कृच्छ्रं न कदाचिदवाप्नुते ॥ ४२॥
[1]बृहस्पतेर्भगवतः पूष्णश्चैव भगस्य च ।
[2]अश्विनोश्चैव वह्नेश्च प्रीतिर्भवति सर्पिषा ॥ ४३॥
परमं भेषजं ह्येतद् यज्ञानामेतदुत्तमम् ।
रसानामुत्तमं चैतत् फलानां चैतदुत्तमम् ॥ ४४॥
बलकामो यशस्कामः पुष्टिकामश्च नित्यशः ।
घृतं दद्याद् द्विजातिभ्यस् सततं रुचिरार्थवत् ॥ ४५॥
घृतं मासे त्वाश्वयुजि विप्रेभ्यो यः प्रयच्छति ।
[3]तस्मै प्रयच्छतो रूपं प्रीतौ देवाविहाश्विनौ ॥ ४६॥
पायसं सर्पिषा मिश्रं द्विजेभ्यो यः प्रयच्छति ।
गृहं तस्य न रक्षांसि धर्षयन्ति कदाचन ॥ ४७॥
पिपासया न म्रियते सोपच्छन्दश्च दृश्यते ।
न प्राप्नुयाच्च व्यसनं करकान् यः प्रयच्छति ॥ ४८॥

---

1. क-घ—इदमर्धं नास्ति
2. क-घ—बृहस्पतेश्च वह्नेश्च
3. अ—अर्धद्वयं नास्ति

प्रयतो ब्राह्मणाग्र्येभ्यश् श्रद्धया परया युतः ।
उपस्पर्शनषड्भागं लभते पुरुषस्सदा ॥ ४९॥
यस्साधनार्थं काष्ठानि ब्राह्मणेभ्यः प्रयच्छति ।
प्रतापार्थं च राजेन्द्र भुक्तवद्भ्यस्सदा नरः ॥ ५०॥
सिद्ध्यन्त्यर्थास्सदा तस्य कार्याणि विविधानि च ।
उपर्युपरि शत्रूणां [1]वपुषा दीप्यते च सः ॥ ५१॥
भगवांश्चास्य सम्प्रीतो वह्निर्भवति नित्यदा ।
[2]न तं त्यजन्ते पशवस् सङ्ग्रामे विजयत्यपि ॥ ५२॥
पुत्राञ् श्रियं च लभते यश्छत्रं सम्प्रयच्छति ।
चक्षुर्व्याधिं न लभते यज्ञभागमथाश्नुते ॥ ५३॥
निदाघकाले वर्षे वा यश्छत्रं सम्प्रयच्छति ।
नास्य कश्चिन्मनोदाहः कदाचिदपि जायते ॥ ५४॥
कृच्छ्रात् स विषमाच्चैव विप्रो मोक्षमवाप्नुते ॥ ५५
प्रधानं सर्वदानानां शकटस्य विधीयते ।
एवमाह महाभागश् शाण्डिल्यो भगवानृषिः ॥ ५६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
[ अस्मिन्नध्याये ५६ श्लोकाः ]

---

1. क-घ—धनुषा दीप्ततेजसः　2. घ—न तं जयन्ते रिपवः

## ॥ पञ्चपञ्चाशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति जलतिलभून्यन्नगोदानादिफलकथनम् ॥

युधिष्ठिरः—

दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ।
यत् फलं तस्य भवति तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

उपानहौ प्रयच्छेद्यो ब्राह्मणेभ्यस्समाहितः ।
मर्दते कण्टकान् सर्वान् विषमान् निस्तरत्यपि ॥ २

स शत्रूणामुपरि च सन्तिष्ठति युधिष्ठिर ।
यानं चाश्वतरीयुक्तं तस्य शुभ्रं विशां पते ॥ ३

युधिष्ठिरः—

[1]यत् फलं तिलदाने च भूमिदाने च कीर्तितम् ।
गोदाने चान्नदाने च भूयस्तद्ब्रूहि कौरव ॥ ४

भीष्मः—

शृणु त्वमपि कौन्तेय तिलदानस्य यत् फलम् ।
निशम्य च यथान्यायं प्रयच्छ कुरुसत्तम ॥ ५

पितॄणां प्रथमं भोज्यं तिलास्सृष्टास्स्वयम्भुवा ।

1. घ—अर्धद्वयं नास्ति

तिलदानेन वै पुण्यं पितृलोके प्रमोदते ॥ ६

माघमासे तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति ।
सर्वसत्त्वसमाकीर्णं नरकं स न पश्यति ॥ ७

सर्वकामैस्स यजति यस्तिलैर्यजते पितॄन् ।
न चाकामेन दातव्यं तिलैश्श्राद्धं कथञ्चन ॥ ८

महर्षेः काश्यपस्यैते गात्रेभ्यः प्रसृतास्तिलाः ।
ततो दिव्यं गता भावं प्रदानेन तिलाः प्रभो ॥ ९

पौष्टिका रूपदाश्चैव तथा पापविनाशनाः ।
तस्मात् सर्वप्रदानेभ्यस् तिलदानं विशिष्यते ॥ १०

अजस्तम्भश्च मेधावी शङ्खश्च लिखितस्तथा ।
महर्षिर्गौतमश्चापि तिलदानैर्दिवं गताः ॥ ११

तिलहोमपरा विप्रास् सर्वे संयतमैथुनाः ।
[1]समं गव्येन हविषा विप्रवृत्तिषु संस्थिताः ॥ १२

सर्वेषामन्नदानानां तिलदानं परं स्मृतम् ।
अक्षय्यं सर्वदानानां तिलदानमिहोच्यते ॥ १३

उत्सर्गे च पुरा हव्ये कुशिकर्षिः परन्तप ।
तिलैरग्नित्रयं हुत्वा प्राप्तवान् गतिमुत्तमाम् ॥ १४

इति प्रोक्तं कुरुश्रेष्ठ तिलदानमनुत्तमम् ।

---

1. घ—समं दिव्येन वपुषा

विधानं योगविधिना तिलानामिह शस्यते ॥ १५

अत ऊर्ध्वं निबोधेमं देवानां यष्टुमिच्छताम् ।
समागमं महाराज ब्रह्मणा वै स्वयम्भुवा ॥ १६

देवास्समेत्य ब्रह्माणं भूमिभागमियक्षवः ।
शुभं देशमयाचन्त यजेम इति पार्थिव ॥ १७

देवाः—

भगवंस्त्वं प्रभुर्भूमेस् स्वर्गस्य त्रिदिवस्य च ।
यजेम हि महाभाग यज्ञं भवदनुज्ञया ॥ १८

[1]त्वदनुज्ञातभूमिर्हि यज्ञस्य फलमश्नुते ।
त्वं हि सर्वस्य जगतस् स्थावरस्य चरस्य च ॥ १९

प्रभुर्भवसि तस्मात् त्वं समनुज्ञातुमर्हसि ॥ १९॥

ब्रह्मा—

ददामि मेदिनीभागं भवद्भ्योऽहं सुरर्षभाः ।
यस्मिन् देशे करिष्यध्वं यज्ञं काश्यपनन्दनाः ॥ २०॥

देवाः—

भगवन् कृतकामास्तु यक्ष्यामः प्राप्तदक्षिणाः ।
शुद्धं तु देशं मुनयः पर्युपासन्तु नित्यदा ॥ २१॥

भीष्मः—

ततोऽगस्त्यश्च कण्वश्च भृगुरत्रिर्वृषाकपिः ।

---

1. अ—ततोऽनुष्ठातुमिच्छामो     ख—ततोऽनुज्ञातु

असितो देवलश्चैव देवयज्ञमुपागमन् ॥ २२॥
ततो देवा महाभागा ईजिरे यज्ञमच्युतम् ।
तथा समापयामासुर् यथाकालं सुरर्षभाः ॥ २३॥
ततस्तु यष्ट्वा त्रिदशा हिमवत्यचलोत्तमे ।
षष्ठमंशं क्रतोस्तस्य भूमिदातुः प्रचक्रिरे ॥ २४॥
प्रादेशमात्रं भूमेस्तु यो दद्यादनुपस्कृतः ।
न सीदति स कृच्छ्रेषु न च दुर्गाण्यवाप्नुते ॥ २५॥
शीतवातातपसहां यागभूमिं सुसंस्कृताम् ।
प्रदाय सुरलोकस्थः पुण्यान्तं हि न चाप्नुते ॥ २६॥
मुदितो वसते प्राज्ञश् शक्रेण सह पार्थिव ।
प्रतिश्रयप्रदाता च सोऽपि स्वर्गे महीयते ॥ २७॥
अध्यापककुले जातश् श्रोत्रियो नियतेन्द्रियः ।
गृहे यस्य वसेत्तुष्टः प्रधानं लोकमश्नुते ॥ २८॥
तथा गवार्थे शरणं शीतवातसहं महत् ।
आसप्तमं तारयति कुलं भरतसत्तम ॥ २९॥
क्षेत्र[1]भूमिं ददल्लोके पुत्रश्रियमवाप्नुयात् ।
रत्नभूमिं प्रदत्त्वा तु कुलवंशं विवर्धयेत् ॥ ३०॥
न चोषरां न निर्दग्धां महीं दद्यात् कथञ्चन ।

1. क-घ—भूतमिदं लोके पुत्र

न श्मशानपरीतां च न च पापनिषेविताम् ॥ ३१॥

पारक्ये भूमिदेशे च पितॄणां निर्वपेत्तु यः ।
[1]तद्भूमिस्वामिपितृभिश् श्राद्धकर्म विहन्यते ॥ ३२॥

तस्मात् क्रीत्वा महीं दत्त्वा स्वल्पामपि विचक्षणः ।
पिण्डः पितृभ्यो दत्तो वै तस्यां भवति शाश्वतः ॥ ३३॥

अटवी पर्वताश्चैव नदीतीर्थानि यानि च ।
सर्वाण्यस्वामिकान्याहुर् न हि तत्र परिग्रहः ॥ ३४॥

इत्येतद्भूमिदानस्य फलमुक्तं विशां पते ।
अतः परं तु गोदानं कीर्तयिष्यामि तेऽनघ ॥ ३५॥

गावोऽधिकास्तपस्विभ्यो यस्मात् सर्वेभ्य एव च ।
तस्मान्महेश्वरो देवस्तपस्ताभिस्समास्थितः ॥ ३६॥

ब्रह्मलोके वसन्त्येतास् सोमेन भरतर्षभ ।
यां तां ब्रह्मर्षयस्सिद्धाः प्राप्नुवन्ति परां गतिम् ॥ ३७॥

पयसा हविषा दध्ना शकृताप्यथ चर्मणा ।
अस्थिभिश्चोपकुर्वन्ति शृङ्गैर्वालैश्च भारत ॥ ३८॥

नासां शीतातपौ स्यातां यदेताः कर्म कुर्वते ।
न वर्षविषमं वाऽपि दुःखमासां भवत्युत ॥ ३९॥

ब्राह्मणैस्सहिता यान्ति तस्मात् परतरं पदम् ।

1. क-ख—तद्भूमिदस्य

एकं गोब्राह्मणं तस्मात् प्रवदन्ति मनीषिणः ॥ ४०॥
रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः ।
ततश्चर्मण्वती राजन् गोचर्मभ्यः प्रवर्तिता ॥ ४१॥
पशुत्वाच्च विनिर्मुक्ताः प्रदानायोपकल्पिताः ॥ ४२
ता इमा विप्रमुख्येभ्यो यो ददाति महीपते ।
निस्तरेदापदं कृच्छ्रां विषमस्थोऽपि पार्थिव ॥ ४३
गवां सहस्रदः प्रेत्य नरकं नैव गच्छति ।
[1]सर्वत्र विजयं चापि लभते मनुजाधिप ॥ ४४
अमृतं वै गवां क्षीरम् इत्याह त्रिदशाधिपः ।
तस्माद् ददाति यो धेनुम् अमृतं स प्रयच्छति ॥ ४५
आकुञ्चितमपि ह्येतद्धव्यं वेदविदो विदुः ।
[2]हव्यं ददाति यो धेनुं स हव्यं सम्प्रयच्छति ॥ ४६
स्वर्गो वै मूर्तिमांस्तेषाम् ऋषभं वै गवां पतिम् ।
विप्रे गुणयुते दद्यात् स वै स्वर्गे महीयते ॥ ४७
प्राणा वै प्राणिनामेताः प्रोच्यन्ते भरतर्षभ ।
तस्माद् ददाति यो धेनुं प्राणान् वै सम्प्रयच्छति ॥ ४८
गावश्शरण्या भूतानाम् इति वेदविदो विदुः ॥ ४८॥

1. अ—इदमर्धद्वयं नास्ति
2. ख—भव्यां

न वधार्थं प्रदातव्या न कीनाशे न नास्तिके ।
गोजीविने न दातव्या तथा गौः पुरुषर्षभ ॥ ४९॥
[1]गोरसानां न विक्रेतुर् अपक्वयजनस्य च ॥ ५०
[2]ददात्येतादृशानां यो नरो गाः पापकर्मणाम् ।
अक्षय्यं नरकं यातीत्येवमाहुर्मनीषिणः ॥ ५१
न कृशां वाऽपवत्सां वा वन्ध्यां क्रोधान्वितां तथा ।
न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय वै ॥ ५२
दशगोसहस्रदस्सम्यक् शक्रेण सह मोदते ।
अक्ष[3]य्यानश्नुते लोकान् नरश्शतसहस्रशः ॥ ५३
इत्येवं गोप्रदानं च [4]तिलदानं च कीर्तितम् ।
तथा भूमिप्रदानं च शृणुष्वान्नं च भारत ॥ ५४
अन्नदानं प्रधानं च कौन्तेय परिचक्षते ।
अन्नस्य हि प्रदानेन रन्तिदेवो दिवं गतः ॥ ५५
श्रान्ताय क्षुधितायान्नं यः प्रयच्छति भूमिप ।
स्वायम्भुवं महाभागं स पश्यति नराधिप ॥ ५६
न हिरण्यैर्न वासोभिर् नाश्वदानेन भारत ।

1. ख—नास्तीदमर्धम्
2. क-घ—दद्यात्ते तादृशानां यो नीरोगाः
3. ख-घ—याल्लभते
4. क-घ—तिलानां चैव कीर्तनम्

प्राप्नुवन्ति नराश्श्रेयो यथेहान्नप्रदाः प्रभो ॥ ५७

अन्नं हि परमं द्रव्यम् अन्नं श्रीश्च परा मता ।
अन्नात् प्राणः प्रभवति तेजो वीर्यं बलं तथा ॥ ५८

सद्यो ददाति यश्चान्नं सदैकाग्रमना नरः ।
न स दुर्गाण्यवाप्नोति तस्मैवाह पराशरः ॥ ५९

अर्चयित्वा यथान्यायं देवेभ्योऽन्नं निवेदयेत् ।
यदन्नो हि नरो राजंस् तदन्नास्तस्य देवताः ॥ ६०

कौमुद्यां शुक्लपक्षे तु योऽन्नदानं करोत्युत ।
स सन्तरति दुर्गाणि प्रेत्य चानन्त्यमश्नुते ॥ ६१

अभुक्त्वाऽतिथये चान्नं प्रयच्छेद्यस्समाहितः ।
स वै ब्रह्मविदां लोकान् प्राप्नुयाद्भरतर्षभ ॥ ६२

सुकृच्छ्रामापदं प्राप्तश् चान्नदः पुरुषस्तरेत् ।
पापं तरति चैवेह दुष्कृतं चापकर्षति ॥ ६३

इत्येतदन्नदानस्य तिलदानस्य चैव हि ।
भूमिदानस्य च फलं गोदानस्य च कीर्तितम् ॥ ६४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
[ अस्मिन्नध्याये ६४ श्लोकाः ]

---

## ॥ षट्पञ्चाशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति जलप्रभाववर्णनपूर्वकं तद्दानप्रशंसनम् ॥

युधिष्ठिरः—

श्रुतं दानफलं तात यत् त्वया परिकीर्तितम् ।
अन्नन्तु यद्विशेषेण प्रशस्तमिह भारत ॥ १

पानीयदानं परमं कथं चेह महाफलम् ।
इत्येतच्छ्रोतुमिच्छामि विस्तरेण पितामह ॥ २

भीष्मः—

हन्त ते वर्तयिष्यामि यथावद् भरतर्षभ ।
गदतस्तन्ममाद्येह शृणु सत्यपराक्रम ॥ ३
पानीयदानात् प्रभृति सर्वं वक्ष्यामि तेऽनघ ॥ ३॥

यदन्नं यच्च पानीयं सम्प्रदायाश्नुते फलम् ।
न ताभ्यां परमं दानं किञ्चिदस्तीति मे मतिः ॥ ४॥

अन्नात् प्राणभृतस्तात प्रवर्तन्ते हि सर्वशः ।
तस्मादन्नं परं लोके सर्वदानेषु कथ्यते ॥ ५॥

अन्नाद्बलं च तेजश्च प्राणिनां वर्धते सदा ।
अन्नदानमतस्तस्माच् छ्रेष्ठमाह प्रजापतिः ॥ ६॥

सावित्र्या अपि कौन्तेय श्रूयते वचनं शुभम् ।
यच्चेदं नान्यथा चैतद् दैवसत्रे महामखे ॥ ७॥

अन्ने दत्ते नरेन्द्रेण प्राणा दत्ता भवन्त्युत ।
प्राणदानाद्धि परमं न दानमिह विद्यते ॥ ८॥

श्रुतं हि ते महाबाहो लोमशस्य च तद्वचः ।
प्राणान् दत्त्वा कपोताय यत् प्राप्तं शिबिना पुरा ॥ ९॥

तां गतिं लभते दत्त्वा द्विजस्यान्नं विशां पते ।
ततो विशिष्टां गच्छन्ति तोयदा इति नश्श्रुतं ॥ १०॥

अन्नं चापि प्रभवति पानीयात् कुरुसत्तम ।
नीरजातेन हि विना न किञ्चित् सम्प्रवर्तते ॥ ११॥

नीरजातश्च भगवान् सोमो ग्रहगणेश्वरः ।
अमृतं च सुधा चैव स्वधा चैव सुरा तथा ॥ १२॥

अन्नौषध्यो महाराज वीरुधश्च जलोद्भवाः ।
[1]देवानाममृतं चान्नं नागानां च सुधा तथा ॥ १३॥
पितॄणां च स्वधा प्रोक्ता पशूनां चापि वीरुधः ॥ १४
पुरा गन्धर्वयक्षेपु पानीयात् सम्प्रवर्तते ॥ १४॥

तस्मात् पानीयदानाद्धि न परं विद्यते क्वचित् ।

---

1. क-ख——अर्धचतुष्टयं नास्ति

यतः प्राणभृतां प्राणास् सम्भवन्ति विशां पते ॥ १५॥
तच्च दद्यान्नरो नित्यं य इच्छेद्भूतिमात्मनः ॥ १६
धन्यं यशस्यमायुष्यं जलदानं विशां पते ।
शत्रूंश्च युधि कौन्तेय सदा जयति तोयदः ॥ १७
सर्वान् कामानवाप्नोति लोकानित्यब्रवीन्मनुः ।
प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते ॥ १८
तोयदो मनुजव्याघ्र स्वर्गं गत्वा महाद्युते ।
अक्षयान् समवाप्नोति [1]कीर्तिं चैव हि शाश्वतीम् ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
[अस्मिन्नध्याये १९ श्लोकाः]

---

1. अ—इतः षट्पादा न सन्ति

## ॥ सप्तपञ्चाशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति तिलजलदीपादिदानप्रशंसापरयमब्राह्मणसंवादानुवादः ॥

युधिष्ठिरः—

तिलानां कीदृशं दानम् अथ दीपस्य चैव ह ।
अन्नानां वाससां चैव भूय एव ब्रवीहि मे ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
ब्राह्मणस्य च संवादं यमस्य च युधिष्ठिर ॥ २

मध्यदेशे महान् ग्रामो ब्राह्मणानां बभूव ह ।
गङ्गायमुनयोर्मध्ये यामुनस्य गिरेरनु ॥ ३

पर्णशालेति विख्यातो रमणीयो नराधिप ।
विद्वांसस्तत्र भूयिष्ठं ब्राह्मणाश्चावसंस्तथा ॥ ४

अथ प्राह यमः कञ्चित् पुरुषं कृष्णवाससम् ।
रक्ताक्षमूर्ध्वरोमाणं काकजङ्घाक्षिनासिकम् ॥ ५

यमः—

गच्छ त्वं ब्राह्मणग्रामं ततो गत्वा तमानय ।
अगस्त्यं गोत्रतश्चापि नामतश्चापि शर्मिणम् ॥ ६

शमे निविष्टं विद्वांसम् अध्यापकमनारतम् ।
मा चान्यमानयेथास्त्वं सगोत्रं तस्य पार्श्वतः ॥ ७

स हि तादृग्विधस्तेन तुल्योऽध्ययनजन्मना ।
अपत्येषु तथा वृत्ते समस्तेनैव धीमता ॥ ८
तमानय यथोद्दिष्टं पूजा कार्या हि तस्य मे ॥ ८॥

भीष्मः—

स गत्वा प्रतिकूलं तच् चकार च यमाश्रयः ।
तमाक्रम्यानयामास प्रतिषिद्धो यमेन यः ॥ ९॥

तस्मै यमस्समुत्थाय पूजां कृत्वा च वीर्यवान् ।
प्रोवाच नीयतामेष सोऽन्य आनीयतामिति ॥ १०॥

एवमुक्ते तु वचने धर्मराजेन स द्विजः ।
उवाच धर्मराजानं [1]निर्विण्णोऽध्ययनेन वै ॥ ११॥
यो मे कालो भवेच्छिष्टस् तं वसेयमिहाच्युत ॥ १२

यमः—

नाहं कालस्य विहितं प्रपश्यामीह किञ्चन ।
यो हि धर्मं कथयति तं तु जानामि केवलम् ॥ १३

गच्छ विप्र त्वमद्यैव स्वालयं सुमहाद्युते ।
ब्रूहि वा त्वं यथा स्वैरं करवाणि किमित्युत ॥ १४

1. क—निर्वारो व्यसनेन वै घ—निर्वीर्यो व्यसनेन वै

ब्राह्मणः—

शुद्धदानं च सुमहत् पुण्यं स्यात्तद्ब्रवीहि मे ।
सर्वस्य च प्रमाणं तु त्रैलोक्यस्यापि सत्तम ॥ १५

यमः—

शृणु तत्त्वेन विप्रर्षे प्रदानविधिमुत्तमम् ।
तिलाः परमकं दानं पुण्यं चैवेह शाश्वतम् ॥ १६

[1]तिलाश्च सम्प्रदातव्या यथाशक्ति द्विजर्षभ ।
नित्यदानात् सर्वकामांस् तिला निर्वापयन्त्युत ॥ १७

तिलाञ् श्राद्धेषु शंसन्ति दानमेतदनुत्तमम् ।
तान् प्रयच्छस्व विप्रेभ्यो विधिदृष्टेन कर्मणा ॥ १८

तिला भक्षयितव्याश्च [2]दत्त्वा चालभनं च तैः ॥ १८॥

कार्यं सततमिच्छद्भिश् श्रेयस्सर्वात्मना भवेत् ।
तथाऽऽपस्सर्वदा देयास् सर्वजातिष्वसंशयम् ॥ १९॥

पुष्करिण्यस्तटाकानि कूपांश्चैवात्र खानयेत् ।
यदेतद्दुर्लभमिदं मम लोके द्विजोत्तम ॥ २०॥

आपो नित्यं प्रदेयास्ते पुण्यं ह्येतदनुत्तमम् ।
प्रपाश्च कार्या दानार्थं नित्यं ते द्विजसत्तम ॥ २१॥

1. क-घ—दिव्याश्च

2. ख—दत्त्वा चातिभवं च तैः    घ—दत्त्वा चालशुनं च तैः

[1]भुक्तेः प्रथमदेयं ते पानीयं तु विशेषतः ॥ २२

भीष्मः—

इत्युक्ते सहसा तेन यमदूतेन वै गृहान् ।
नीतश्चकार स तदा सर्वं तद्यमशासनम् ॥ २३

नयित्वा यमदूतोऽपि गृहीत्वा शर्मिणं तदा ।
ययौ स धर्मराजाय न्यवेदयदथापि तम् ॥ २४

तं धर्मराजो धर्मज्ञं पूजयित्वा प्रतापवान् ।
कृत्वा च संविदं तेन विससर्ज यथागतम् ॥ २५

तस्यापि च यमस्सर्वम् उपदेशं चकार ह ।
प्रत्येत्य च स तत् सर्वम् चकारोक्तं यमेन तत् ॥ २६

तथा प्रशंसते दीपान् यमः पितृहितेप्सया ।
[2]तस्माद्दीपप्रदो नित्यं सन्तारयति वै पितॄन् ॥ २७

दातव्यास्सततं दीपास् तस्माद्भरतसत्तम ।
देवानां च पितॄणां च चक्षुष्यास्ते मताः प्रभो ॥ २८

---

1. क-ख—भुक्तेऽप्यन्ते प्रदेयं ते पानीयं च

2. अ—पानीयाभ्यर्थितं दृष्ट्वा प्रीत्या दद्यात्त्वरान्वितः ।
वस्त्रे तन्तुप्रमाणेन दीपे निमिषवत्सरम् ॥
गवां रोमप्रमाणेन स्वर्गभोगमुपाश्नुते ।
जले बिन्दुप्रमाणेन तदेतान्युपवर्तय ॥
इत्युक्ते धर्मराजेन यमदूतेन वै गृहान् ।
नीतश्चकार च तदा सर्वं तद्यमशासनम् ॥ [अधिकः पाठः]

रत्नदानं च विधिवत् पुण्यमुक्तं जनाधिप ।
तानि विक्रीय यजते ब्राह्मणेभ्योऽभयङ्करम् ॥ २९

तद्वै ददाति विप्रेभ्यो ब्राह्मणः प्रतिगृह्य वै ।
उभयोस्स्यात्तदक्षय्यं दातुरादातुरेव च ॥ ३०

यो ददाति स्थितिं स्थित्यां तादृशाय प्रतिग्रहम् ।
उभयोरक्षयं धर्मम् [1]स चैनं प्राह धर्मवित् ॥ ३१

वाससां तु प्रदानेन स्वदारनिरतो नरः ।
सुवस्त्रश्च सुवेषश्च भवतीत्यनुशुश्रुम ॥ ३२

गावस्सुवर्णं च तथा तिलश्चैवानुवर्णिताः ।
बहुशः पुरुषव्याघ्र वेदप्रामाण्यदर्शनात् ॥ ३३

विवाहं चैव कुर्वीत पुत्रानुत्पादयेत च ।
पुत्रलाभो हि कौरव्य सर्वलाभाद्विशिष्यते ॥ ३४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
[ अस्मिन्नध्याये ३४ श्लोकाः ]

---

1. क-घ—न वैनः ख—न चैनः

## ॥ अष्टपञ्चाशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गोभूविद्यादानप्रशंसनम् ॥

युधिष्ठिरः—

कथयस्व महाभाग भूमिदानाद्विशिष्यते ।
पृथिवीं क्षत्रियो दद्याद् ब्राह्मणस्तां स्वकर्मणा ॥ १
विधिवत् प्रतिगृह्णीयान्न त्वन्यो दातुमर्हति ॥ १॥
सर्ववर्णैस्तु यच्छक्यं प्रदातुं फलकाङ्क्षिभिः ।
वेदे वा यत् समाम्नातं तन्मे व्याख्यातुमर्हसि ॥ २॥

भीष्मः—

तुल्यनामानि देयानि त्रीणि तुल्यफलानि च ।
सर्वकामफलानीह गावः पृथ्वी सरस्वती ॥ ३॥
यः प्रब्रवीति शिष्याय धर्म्यां ब्राह्मीं सरस्वतीम् ।
पृथिवीगोप्रदानाभ्यां तुल्यं स फलमश्नुते ॥ ४॥
तथैव गाः प्रशंसन्ति न च देयं ततः परम् ।
सन्निकृष्टफलास्ता हि लघ्वर्थाश्च युधिष्ठिर ॥ ५॥
मातरस्सर्वभूतानां गावस्सर्वसुखप्रदाः ।
वृद्धिमाकाङ्क्षता नित्यं गवां कार्यं प्रदक्षिणम् ॥ ६॥

मङ्गलायतनं देव्यस् तस्मात् पूज्यास्सदैव गाः ॥ ७
प्रयोजनं देवकृतं गवां कर्मसु वर्तताम् ।
पूर्वमेकाक्षरं नान्यद् अभिधेयं कथञ्चन ॥ ८
[1]प्रचारे वा निवाते वा बुधो नोद्वेजयेत गाः ।
तृषिता ह्यभिवीक्षन्त्यो नरं हन्युस्सबान्धवम् ॥ ९
[2]पितृसद्मानि सततं देवतायतनानि च ।
पूयन्ते शकृता यासां किं भूयश्चाधिकं ततः ॥ १०
ग्रासमुष्टिं परगवे दद्यात् संवत्सरं तु यः ।
अकृत्वा स्वयमाहारं व्रतं तत् सार्वकामिकम् ॥ ११
स हि पुत्रान् यशोऽर्थं च श्रियं चाप्यधिगच्छति ।
नाशयत्यशुभं चैव दुस्स्वप्नं चाप्यपोहति ॥ १२

युधिष्ठिरः—

देयाः किंलक्षणा गावः काश्चापि परिवर्जयेत् ।
कीदृशाय प्रदातव्या न देयाः कीदृशाय च ॥ १३

भीष्मः—

असद्वृत्ताय पापाय लुब्धायानृतवादिने ।
हव्यकव्यव्यपेताय न देया गौः कथञ्चन ॥ १४

1. क-घ—प्रपाने वाऽतिपाने वा ख—प्रचारे वाऽतिपाने वा×गाः
2. क—अर्धचतुष्टयं नास्ति घ—अर्धत्रयं नास्ति

[1]भिक्षवे बहुपुत्राय श्रोत्रियायाहिताग्नये ।
दत्त्वा दशशतं गावो लोकानाप्नोत्यनुत्तमान् ॥ १५

जुहोति यद्भोजयति यद् ददाति गवां रसैः ।
सर्वस्यैवांशभाग्दाता तन्निमित्तं प्रवर्तितः ॥ १६

यश्चैनमुत्पादयति यश्चैनं त्रायते भयात् ।
[2]यश्चास्य कुरुते वृत्तिं सर्वे ते पितरस्त्रयः ॥ १७

कल्मषं गुरुशुश्रूषा हन्यान्मानो महायशः ।
अपुत्रत्वं त्रयः पुत्राः [3]कुवृत्तिं दश धेनवः ॥ १८

वेदान्तनिष्ठस्य बहुश्रुतस्य
प्रज्ञानतृप्तस्य जितेन्द्रियस्य ।
शिष्टस्य दान्तस्य यतस्य चैव
भूतेषु नित्यं प्रियवादिनश्च ॥ १९

[4]यः क्षुद्भयाद्वै न विकर्म कुर्या-
न्मृदुर्दान्तश्चातिथिर्यस्य नित्यम् ।
वृत्तिं विप्रायातिसृजेत तस्मै
यस्तुल्यदानश्च सपुत्रदारः ॥ २०

1. ख-घ—भिक्षते
2 क—अर्धचतुष्टयं पादश्चैको नास्ति घ—अर्धपञ्चकं नास्ति
3. अ-क-घ—प्रवृत्तिं
4. घ—यश्चास्य चैव भूतेषु नित्यं च प्रियवादिना। [ अधिकः पाठः ]

शुभे पात्रे ये गुणा गोप्रदाने
तावन्तो दोषा ब्राह्मणस्वापहारे ।
[1]सर्वापत्सु ब्राह्मणस्वापहारे
दाराश्चैषां दूरतो वर्जनीयाः ॥ २१

विप्रदारे परहृते [2]विप्रस्वनिचये तथा ।
परित्रायन्ति शक्तास्तु नमस्तेभ्यो मृतास्तु वा ॥ २२

[3]न पालयन्ति चेत्तस्य हन्ता वैवस्वतो यमः ।
दण्डयन् भर्त्सयन् नित्यं निरयेभ्यो न मुञ्चति ॥ २३

तथा गवां परित्राणे पीडने च शुभाशुभम् ।
विप्रगोषु विशेषेण रक्षितेषु [4]हतेषु वा ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
[ अस्मिन्नध्याये २४ श्लोकाः ]

---

1. अ-क—सर्वावस्थं ब्रा
2. क-घ— यः परैस्ताश्चिहत्य वै
3. क-घ—स नृपस्स्वर्गमाप्नोति पुत्रपौत्रसमन्वितः । [ अधिकः पाठः ]
4. अ-ख—गृहेषु वा

## ॥ एकोनषष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणस्वापहारस्यानर्थहेतुतायां दृष्टान्ततया नृगोपाख्यानकथनम् ॥

भीष्मः—

अत्रैव कीर्त्यते सद्भिर् ब्राह्मणस्वाभिमर्शने ।
नृगेण सुमहत् कृच्छ्रं यदवाप्तं कुरूद्वह ॥ १

[1]निविशन्त्यां पुरा पार्थ द्वारवत्यामिति श्रुतिः ।
अदृश्यत महाकूपस् तृणवीरुत्समावृतः ॥ २

प्रयत्नं तत्र कुर्वाणास् तस्मात् कूपाज्जलार्थिनः ।
श्रमेण महता युक्तास् तस्मिं[2]स्तोये सुसंवृते ॥ ३

ददृशुस्ते महाकायं कृकलासमवस्थितम् ।
तत्र चोद्धरणे यत्नम् अकुर्वंस्ते सहस्रशः ॥ ४

प्रग्रहैश्चैव पट्टैश्च तं बद्ध्वा पर्वतोपमम् ।
नाशक्नुवन् समुद्धर्तुम् ततो जग्मुर्जनार्दनम् ॥ ५

खमावृत्योदपानस्य कृकलासस्थितो महान् ।
तस्य नास्ति समुद्धर्तेत्यथ कृष्णे न्यवेदयन् ॥ ६

---

1. ख—निर्विशन्त्यां+कुरूद्वह । घ—निवसन्त्यां
2. क-घ—स्तोयसमावृते

स वासुदेवेन समुद्धृतश्च
पृष्टश्च कामान् निजगाद राजा ।
नृगस्तदाऽऽत्मानमथो न्यवेदयत्
पुरातनं [1]क्रतुसहस्रयाजिनम् ॥ ७

तथा ब्रुवाणं तु तमाह माधवश्
शुभं त्वया कर्म कृतं न पापकम् ।
अथो भवान् दुर्गतिमीदृशीं गतो
नरेन्द्र तद्ब्रूहि किमेतदीदृशम् ॥ ८

शतं सहस्राणि शतं गवां पुनर्
गवां शतान्यष्टशतायुतानि ।
त्वया पुरा दत्तमितीह शुश्रुमो
नृप द्विजेभ्यः क्व नु तत्तथा गतम् ॥ ९

नृगस्तदाऽब्रवीत् कृष्णं ब्राह्मणस्याग्निहोत्रिणः ।
प्रोषितस्य परिभ्रष्टा गौरेका मम गोधने ॥ १०

गवां सहस्रे सङ्ख्याते तदा तैः पशुपैर्मम ।
सा ब्राह्मणाय मे दत्ता [2]प्रेत्यार्थमभिकाङ्क्षता ॥ ११

अपश्यत् परिमार्गंश्च तां गां परगृहे द्विजः ।

---

1. ख-घ—यज्ञ
2. क-घ—प्रीत्यर्थं

ममेयमिति चोवाच ब्राह्मणो यस्य साऽभवत् ॥ १२
तावुभौ मामनुप्राप्तौ विवदन्तौ भृशज्वरौ ।
भवान् दाता भवान् हर्तेत्यथ तौ मां तदोचतुः ॥ १३
तत्तेन शतसङ्ख्येन गवां विनिमयेन वै ।
याचे प्रतिग्रहीतारं स तु मामब्रवीदिदम् ॥ १४
देशकालोप[1]सन्ना मे दोग्ध्री कान्ताऽतिवत्सला ।
स्वादुक्षीरप्रदा धन्या मम नित्यं निवेशने ॥ १५
श्रियं च भरते या गौर् मम पुत्रमपस्तनम् ।
न सा शक्या मया दातुम् इत्युक्त्वा स जगाम ह ॥ १६
ततस्तमपरं विप्रं याचे विनिमयेन वै ।
गवां शतसहस्रं वै तत्कृते गृह्यतामिति ॥ १७
न राज्ञः प्रतिगृह्णामि शक्तोऽहं स्वस्य मार्गणे ।
सैव गौर्दीयतां शीघ्रं ममेति मधुसूदन ॥ १८
[2]रुक्ममश्वांश्च ददतो राजतान् स्यन्दनांस्तथा ।
न जग्राह ययौ चापि तदा स ब्राह्मणर्षभः ॥ १९
एतस्मिन्नेव काले तु चोदितः कालधर्मणा ।
पितृलोकमहं प्राप्य धर्मराजमुपागमम् ॥ २०

---

1. क-घ—सम्पन्ना
2. ख—अर्धसप्तकं नास्ति

यमस्तु पूजयित्वा मां ततो वचनमब्रवीत् ।
नान्तस्सङ्ख्यायते राजंस् तव पुण्यस्य कर्मणः ॥ २१

अस्ति चैव कृतं पापम् अज्ञानात्तदपि त्वया ।
चरस्व पापं पश्चाद्वा पूर्वं वाऽपि यथेच्छसि ॥ २२

रक्षितास्मीति चोक्तं ते प्रतिज्ञा च त्वया कृता ।
ब्राह्मणस्वस्य चादानं त्रिविधस्ते व्यतिक्रमः ॥ २३

पूर्वं कृच्छ्रं चरित्वाऽहं पश्चाच्छुभमिति प्रभो ।
धर्मराजं ब्रुवन्नेव पतितोऽस्मि महीतले ॥ २४

अश्रौषं प्रच्युतश्चाहं यमस्योच्चैः प्रभाषतः ।
वासुदेवस्समुद्धर्ता भविता ते जनार्दनः ॥ २५

पूर्णे वर्षसहस्रान्ते क्षीणे कर्मणि दुष्कृते ।
प्राप्स्यसे शाश्वताँल्लोकाञ् जितान् स्वेनैव कर्मणा ॥ २६

कूपेत्मानमधश्शीर्षम् पश्य मां पतितं च ह ।
तिर्यग्योनिमनुप्राप्तं न तु मामजहात् स्मृतिः ॥ २७

त्वया तु तारितोऽस्म्यद्य किमन्यत्र तपोबलात् ।
अनुजानीहि मां कृष्ण गच्छेयं दिवमद्य वै ॥ २८

[1]अनुज्ञातस्स कृष्णेन नमस्कृत्य जनार्दनम् ।
विमानं दिव्यमास्थाय ययौ दिवमरिन्दमः ॥ २९

---

1. अ-ख—अर्धसप्तकं नास्ति

ततस्तस्मिन् दिवं प्राप्ते नृगे भरतसत्तम ।
वासुदेव इमाञ् श्लोकाञ् जगाद कुरुनन्दन ॥ ३०

ब्राह्मणस्वं न हर्तव्यं क्षत्रियेण विशेषतः ।
ब्राह्मणस्वं हृतं हन्ति नृगं ब्राह्मणगौरिव ॥ ३१

सतां समागमस्सद्भिर् नाफलः पार्थ विद्यते ।
विमुक्तं नरकात् पश्य नृगं साधुसमागमात् ॥ ३२

प्रदानं फलवत्तत्र द्रोहस्तत्र तथाऽबलः ।
अपहारं गवां तस्माद् वर्जयेत युधिष्ठिर ॥ ३३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
[ अस्मिन्नध्याये ३३ श्लोकाः ]

---

## ॥ षष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गोदानप्रशंसापरनाचिकेतोपाख्यानकथनम् ॥

युधिष्ठिरः—

दत्तानां फलसम्प्राप्तिं गवां प्रब्रूहि मेऽनघ ।
विस्तरेण महाबाहो नाहं तृप्यामि कथ्यताम् ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
ऋषिरौद्दालकिर्दीक्षाम् उपगम्य ततस्सुतम् ॥ २

त्वं मामुपचरस्वेति नाचिकेतमभाषत ॥ २॥

समाप्ते नियमे तस्मिन् महर्षिः पुत्रमब्रवीत् ॥ ३

उपस्पर्शनसक्तस्य स्वाध्यायनिरतस्य च ।
इध्मा दर्भास्सुमनसः कलशश्चाभितो जलम् ॥ ४
विस्मृतं मे तदादाय नदीतीरादिहाव्रज ॥ ४॥

गत्वाऽनवाप्य तत् सर्वं नदीवेगसमाप्लुतम् ।
न पश्यामि तदित्येव पितरं सोऽब्रवीन्मुनिम् ॥ ५॥

क्षुत्पिपासासमाविष्टो मुनिरौद्दालकिस्तदा ।

यमं पश्येति तं पुत्रम् अशपत् क्रोधमूर्च्छितः ॥ ६॥

तथा पित्रा स निहतो वाग्वज्रेण कृताञ्जलिः ।
प्रसीदेति ब्रुवन्नेव गतसत्त्वोऽपतद्भुवि ॥ ७॥

नाचिकेतं पिता दृष्ट्वा पतितं दुःखमूर्च्छितः ।
किं मया कृतमित्युक्त्वा निपपात महीतले ॥ ८॥

तस्य दुःखपरीतस्य स्वं पुत्रमुपगूहतः ।
व्यतीतं तदहश्शेषं सा चोग्रा शर्वरी तदा ॥ ९॥

पित्र्येणास्रप्रपातेन नाचिकेतः कुरूद्वह ।
प्रास्पन्दच्छयने शुभ्रे वृष्ट्या सस्यमिवाप्लुतम् ॥ १०॥

पर्यपृच्छत् ततः पुत्रं श्लाघ्यं प्रत्यागतं पुनः ।
दिव्यगन्धैस्समादिग्धं क्षीणस्वप्नमिवोत्थितम् ॥ ११॥

औद्दालकिः—

अपि पुत्र गता लोकाश् शुभास्ते स्वेन कर्मणा ।
दिष्ट्या चासि पुनः प्राप्तो न हि ते मानुषं वपुः ॥ १२॥

भीष्मः—

प्रत्यक्षदर्शी सर्वस्य पित्रा पृष्टो महात्मना ।
अभ्युत्थाय पितुर्मध्ये महर्षीणां न्यवेदयत् ॥ १३॥

नाचिकेतः—

कुर्वन् भवच्छासनमाशु यातो
ह्यहं विशालां रुचिरप्रभासाम् ।
वैवस्वतीं प्राप्य सभामपश्यं
सहस्रशो योजनहैमभौमाम् ॥ १४॥

दृष्ट्वैव मामभिमुखमापतन्तं
गृहं निवेद्यासनमादिदेश ।
वैवस्वतोऽर्घ्यादिभिरर्हणैश्च
भवत्कृते पूजयामास मां सः ॥ १५॥

[1]ततस्त्वहं तं शनकैरवोचं
वृतं सदस्यैरभिपूज्यावनम्य ।
प्राप्तोऽस्मि ते विषयं धर्मराज
लोकानहं यामि तन्मे विधत्स्व ॥ १६॥

यमोऽब्रवीन्मां न मृतोऽसि सौम्य
[2]यमं पश्येत्याह तु त्वां तपस्वी ।
पिता प्रदीप्ताग्निसमानतेजा
न तच्छक्यमनृतं विप्रकर्तुम् ॥ १७॥

---

1. क-घ—वैवस्वतं तं
2. क-घ—यन्मां पश्येत्याह ततस्तपस्वी

दृष्टस्तेऽहं प्रतिगच्छस्व तातं
शोचत्यसौ तव देहस्य कर्ता ।
ददामि किञ्चापि [1]मनःप्रतीतं
प्रियातिथेस्तव कामं वृणीष्व ॥ १८॥

तेनैवमुक्तस्तमहं प्रत्यवोचं
प्राप्तोऽस्मि ते विषयं दुर्नि[2]वर्त्यम् ।
इच्छाम्यहं पुण्यकृतां समृद्धाँ-
ल्लोकान् द्रष्टुं यदि तेऽहं वरार्हः ॥ १९॥

यानं समारोप्य तु मां स देवो
हयैर्युक्तं सुप्रभं भानुमन्तम् ।
सन्दर्शयामास तदा स्म लोकान्
सर्वांस्तथा पुण्यकृतां द्विजेन्द्र ॥ २०॥

अपश्यं तत्र वेश्मानि [3]तैजसानां कृतात्मनाम् ।
नानासंस्थानरूपाणि सर्वरत्नमयानि तु ॥ २१॥

चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ।
अनेकशतभौमानि सान्तर्जलवनानि च ॥ २२॥

---

1. क-ग—वरं प्रतीतम्
2. क-घ—वेद्यम्
3. क—सप्त पादा न सन्ति घ—वैडूर्यंकमयानि च [ इति पाठान्तरम् ]
[ ततः अष्टौ पादा न सन्ति ]

वैडूर्यार्कप्रकाशानि रूप्यरूपमयानि च ।
तरुणादित्यवर्णानि स्थावराणि चराणि च ॥ २३॥

भक्ष्यभोज्यमयाञ् शैलान् वासांसि शयनानि च ।
सर्वकामफलैश्चैव वृक्षान् भवननिष्ठितान् ॥ २४॥

नद्यो वीथ्यस्सभा वापीर् दीर्घिकाश्चैव नित्यशः ।
घोषवन्ति च यानानि युक्तान्येव सहस्रशः ॥ २५॥

क्षीरस्रवा वै सरितो [1]गिरींश्चैव ससर्पिषः ॥ २६

वैवस्वतस्यानुमतांश्च देशान्
अदृष्टपूर्वान् सुबहूनपश्यम् ।
सर्वं दृष्ट्वा [2]ह्यगमं धर्मराजम्
अवोचं वै सर्वदेवं सहिष्णुम् ॥ २७

क्षीरस्यैतास्सर्पिषश्चैव नद्यश्
शश्वत् स्रोताः कस्य भोज्याः प्रवृत्ताः ॥ २७॥

यमोऽब्रवीद्विद्धि भोज्यांस्त्वमेतान्
ये दातारस्साधवो गोरसानाम् ।
अन्ये लोकाश्शाश्वता वीतशोकास्
समाकीर्णा गोप्रदाने रतानाम् ॥ २८॥

---

1. क-ख-घ—गिरींश्च; ससर्पिष्कं विमलं चापि तोयम्
2. घ—तदहम्

न त्वेवासां दानमात्रं प्रशस्तं
पात्रं कालो गोविशेषो विधिश्च ।
ज्ञात्वा देया विप्र गवान्तरं हि
दुःखं ज्ञात्वा पावकादित्यभूतम् ॥ २९॥

स्वाध्यायाध्यायी ह्यंतिमात्रं तपस्वी
वैतानस्थो ब्राह्मणः पात्रमासाम् ।
गोषु क्षान्तं गोशरण्यं कृतज्ञं
वृत्तिग्लानं तादृशं पात्रमाहुः ॥ ३०॥

कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च
द्वारैरेतैर्गोविशेषाः प्रशस्ताः ।
अन्तर्जातास्सुक्रयज्ञानलब्धाः
प्राणक्रीतास्सोदकास्सोढ़हाश्च ॥ ३१॥

तिस्रो रात्रीस्त्वद्भिरुपोष्य भूमौ
तृप्ता गावस्तर्पितेभ्यः प्रदेयाः ।
वत्सैः प्रीतास्सुप्रजास्सोपचारास्
त्र्यहं दत्त्वा गोरसैर्वर्तितव्यम् ॥ ३२॥

दत्त्वा धेनुं सुव्रतां साधुदोहां
कल्याणवत्सामपलायिनीं च ।

यावन्ति रोमाणि भवन्ति तस्यास्
तावद्वर्षाण्यश्नुते देवलोकम् ॥ ३३॥

तथाऽनड्वाहं ब्राह्मणाय प्रदाय
दान्तं धुर्यं बलवन्तं युवानम् ।
कुलोपजीव्यं वीर्यवन्तं बृहन्तं
भुङ्क्ते लोकान् सम्मितान् धेनुदस्य ॥ ३४॥

वृत्तिग्लाने सम्भृते वा महार्थे
शान्त्यर्थं वा होमहेतोः प्रसूत्याम् ।
गुर्वर्थे वा यज्ञसमाप्तये वा
गां वै दातुं देशकालो विशिष्टः ॥ ३५॥

श्रुत्वा वैवस्वतवचस् तमहं पुनरब्रवम् ।
अगोमी गोप्रदातॄणां कथं लोकान निगच्छति ॥ ३६॥

ततो यमोऽब्रवीद्धीमान् गोप्रदानं ततो गतिम् ।
गोप्रदानानुकल्पात्तु गामृते सन्तु गोप्रदाः ॥ ३७॥

अलाभे यो गवां दद्याद् घृतधेनुं यतव्रतः ।
[1]तमिमा घृतवाहिन्यः क्षरन्ते वत्सला इव ॥ ३८॥

घृतालाभे तु यो दद्यात् तिलधेनुं यतव्रतः ।
स दुर्गात्तारितो धेन्वा क्षीरनद्यां प्रमोदते ॥ ३९॥

---

1. क-घ—तस्यैता

तिलालाभे तु यो दद्यात् क्षीरधेनुं यतव्रतः ।
स कामप्रवहां शीतां नदीमेतामुपाश्नुते ॥ ४०॥

एवमादीनि मे तत्र धर्मराजो व्यदर्शयत् ।
दृष्ट्वा च परमं हर्षम् अवापमहमच्युत ॥ ४१॥

निवेदये चापि प्रियं भवत्सु
क्रतुर्महानल्पधनप्रचारः ।
प्राप्तो मया तत्र [1]स मन्त्रपूतः
प्रवर्त्स्यते वेदविधिप्रवृत्तः ॥ ४२॥

शापो ह्ययं भवतोऽनुग्रहाय
प्राप्तो मया यत्र दृष्टो यमो मे ।
दातुर्व्युष्टिं तत्र दृष्ट्वा महार्हां
निस्सन्दिग्धो दानधर्मांश्चरिष्ये ॥ ४३॥

इदं च मामब्रवीद्धर्मराजः
पुनः पुनस्सम्प्रहृष्टो [2]द्विजर्षे ।
दाने तावत् प्रयतोऽभूस्सदैव
विशेषतो गोप्रदानं च कुर्याः ॥ ४४॥

शुद्धो ह्यर्थो नावमन्यस्व धर्मे
पात्रे देयं देशकालोपपन्नम् ।

---

1. क-घ—समृद्ध 2. क-घ—द्विजेभ्यः

तस्माद् गावस्ते नित्यमेव प्रदेया
मा भूच्च ते संशयः कश्चिदत्र ॥ ४५॥

एताः पुरा अददन् नित्यमेव
शान्तात्मानो दानवशे निविष्टाः ।
तपांस्युग्राण्यप्रतिशंसमानाः
पुनर्दानं प्रददुश्चैव शक्त्या ॥ ४६॥

[1]काले च शक्त्या मत्सरं वर्जयित्वा
शुद्धात्मान[2]श्शीलिनः पुण्यशीलाः ।
दत्त्वा गा वै लोकममुं प्रपन्नास्
ते दीप्यन्ते पुण्यशीलाश्च लोके ॥ ४७॥

एतद्दानं न्यायलब्धं द्विजेभ्यः
पात्रे वित्तं प्रापणीयं परीक्ष्य ।
काम्येऽष्टम्यां वर्तितव्यं दशाहं
रसैर्गवां शकृता प्रस्नवैर्वा ॥ ४८॥

वेदव्रती स्याद् वृषभप्रदाता
वेदावाप्तिर्गोयुगस्य प्रदाने ।
तीर्थावाप्तिर्गोप्रयुक्तप्रदाने
पापोत्सर्गः कपिलायाः प्रदाने ॥ ४९॥

1. अ—अर्धत्रयं नास्ति
2. ख—शुचिनः

गामप्येकां कपिलां सम्प्रदाय
न्यायोपेतां कल्मषाद्विप्रमुच्येत् ।
गवां रसात् परमं नास्ति किञ्चिद्
गवां दानं सुमहत्तद्वदन्ति ॥ ५०॥
गावो लोकान् धारयन्ति क्षरन्त्यो
गावश्चान्नं सञ्जनयन्ति लोके ।
यस्तं जानन् न गवां हार्दमेति
स वै गन्ता निरयं पापचेताः ॥ ५१॥
यत्ते दातुं गास्सहस्रं शतं वा
शतार्धं वा दश वा साधुवत्साः ।
अप्येकां वा साधवे सम्प्रदाय
यास्यत्यमुष्मिन् पुण्यतीर्थां नदीं वै ॥ ५२॥
प्राप्त्या पुष्ट्या लोकसंरक्षणेन
गावस्तुल्यास्सूर्यपादैः पृथिव्याम् ।
शब्दश्चैकस्संन्ततिश्चोपभोगास्
तस्माद् गोदस्सूर्य इवाभिभाति ॥ ५३॥
गुरुं शिष्यो वरयेद्गोप्रदाने
स वै कर्ता नियतस्स्वर्गदाने ।
विधिज्ञानात् सुमहानेष धर्मो
विधिं [1]विद्याविनयास्संश्रयन्ति ॥ ५४॥

1. क-ख—सद्यो विधयः

[1]त्वय्याशंसन्त्यमरा दानवाश्च
वयं चापि प्रसृते पुण्यशील ॥ ५५
इत्युक्तोऽहं धर्मराज्ञा महर्षे
धर्मात्मानं शिरसाऽभिप्रणम्य ।
अनुज्ञातस्तेन वैवस्वतेन
प्रत्यागमं भगवत्पादमूलम् ॥ ५६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
[ अस्मिन्नध्याये ५६ श्लोकाः ]

---

## ॥ एकषष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गोदानफलविशेषविषयकेन्द्रप्रश्नानुवादः ॥ १ ॥ ब्रह्मणा इन्द्रं प्रति गोदानप्रशंसनम् ॥ २ ॥

---

युधिष्ठिरः—

उक्तं वै गोप्रदानं मे नाचिकेतमृषिं प्रति ।
माहात्म्यमपि चैवोक्तम् उद्देशेन गवां प्रभो ॥ १
नृगेण च यथा दुःखम् अनुभूतं महात्मना ।
एकापराधादज्ञानान्नृगस्तां दुर्गतिं गतः ॥ २

---

1. क-ध—तस्याशं

द्वारवत्यां यथा चासौ [1]निविशन्त्यां समुद्धृतः ।
मोक्षहेतुरभूत् कृष्णस् तदप्यवधृतं मया ॥ ३
किं चास्ति मम सन्देहो गवां लोकं प्रति प्रभो ।
तत्त्वतश्श्रोतुमिच्छामि गोदा यस्मिन् विशन्त्युत ॥ ४

भीष्मः—
अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
यथाऽपृच्छत् पद्मयोनिम् एतदेव शतक्रतुः ॥ ५

इन्द्रः—
स्वर्लोकवासिनां लक्ष्मीम् अभिभूय स्वया त्विषा ।
गोलोकवासिनः पश्ये वदतां संशयोऽत्र मे ॥ ६
कीदृशा भगवँल्लोका गवां तद्ब्रूहि मेऽनघ ।
यानावसन्ति दातार एतदिच्छामि वेदितुम् ॥ ७
कीदृशाः किम्फलाः किंस्वित्परमास्तत्र वै गुणाः ।
कथं च पुरुषव्याघ्र गच्छन्ति विगतज्वराः ॥ ८
कियत्कालं प्रदानस्य दाता च फलमश्नुते ।
कथं बहुविधं दानं स्यादल्पमपि वा कथम् ॥ ९
बह्वीनां कीदृशं दानम् अल्पानां वाऽपि कीदृशम् ।
अदत्त्वा गोप्रदास्सन्ति केन वै तच्च शंस मे ॥ १०
कथं च बहुदाता स्याद् अल्पदात्रा समः प्रभो ।
अल्पप्रदानाद् बहुदः कथं च स्यादिहेश्वर ॥ ११

---
1. ख—निवसन्त्यां

कीदृशी दक्षिणा चैव गोप्रदाने विशिष्यते ।
एतत् तथ्येन भगवन् मम शंसितुमर्हसि* ॥ १२

पितामहः—

योऽयं प्रश्नस्त्वया पृष्टो गोप्रदानाधिकारवान् ।
नान्यः प्रष्टाऽस्ति लोकेऽस्मिंस् त्वत्तोऽन्यो हि शतक्रतो ॥ १३

सन्ति नानाविधा लोका यांस्त्वं शक्र न पश्यसि ।
पश्यामि तानहं लोकान् [1]एकपत्न्यश्च यास्त्रियः ॥ १४

कर्मभिश्चापि सुशुभैस् सुव्रताश्चर्षयस्तथा ।
सशरीरा हि तान् यान्ति ब्राह्मणाश्शुभवृत्तयः ॥ १५

शरीरन्यासमोक्षेण मनसा निर्मलेन च ।
स्वप्रभूतांश्च ताँल्लोकान् पश्यन्तीहापि सुव्रताः ॥ १६

ते तु लोकास्सहस्राक्ष शृणु यादृग्गुणान्विताः ।
न तत्र क्रमते लोभो न जरा न च पापकम् ॥ १७

तथाऽन्यत्राशुभं किञ्चिन्न व्याधिस्तत्र न क्लमः ।
यद्यच्च गावो मनसा तस्मिन् वाञ्छन्ति वासव ॥ १८

तत् सर्वं प्रापयन्ति स्म मम प्रत्यक्षदर्शनात् ।
कामगाः कामचारिण्यः [2]कामं कामांश्च भुञ्जते ॥ १९

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. अ—अष्टौ पादा न सन्ति

2. ब—कर्मकामाश्च

वाप्यस्सरांसि सरितो विविधानि [1]वनानि च ।
गृहाणि पर्वताश्चैव यावद्द्रव्यं च किञ्चन ॥ २०
मनोज्ञं सर्वभूतभ्यस् तद्वनं तत्र दृश्यते ।
ईदृशान् विद्धि ताँल्लोकान् नास्ति लोकस्ततोऽधिकः ॥ २१
तत्र सर्वसहाः क्षान्ता वत्सला गुरुवर्तिनः ।
अहङ्कारैर्विरहिता यान्ति शक्र नरोत्तमाः ॥ २२

यस्सर्वमांसानि न भक्षयीत
[2]पुमान् सदा यावदतो विरक्तः ।
मातापित्रोरर्चिता सत्ययुक्तश्
शुश्रूषिता ब्राह्मणानां विशुद्धः ॥ २३
अक्रोधनो गोपु तथा द्विजेपु
धर्मे युक्तो गुरुशुश्रूषकश्च ।
यावज्जीवं सत्यवृत्ते रतश्च
दाने युक्तो यः क्षमी चापराधे ॥ २४
मृदुर्दान्तो देवपरायणश्च
सर्वातिथिश्चापि तथा दयावान् ।
ईदृग्गुणा मानवास्सम्प्रयान्ति
लोकं गवां शाश्वतं चाव्ययं च ॥ २५

---

1. क—धनानि
2. क—दयावाश्चै वदते धर्मयुक्तः घ—दवाय वै वद ते धर्मयुक्तः

न पारदारी पश्यति लोकमेनं
न वै गुरुघ्नो न मृषा प्रवादी ।
सदापवादी ब्राह्मणश्शान्तवेदो
[1]दोषैरन्यैर्यश्च युक्तो दुरात्मा ॥ २६

न मित्रध्रुङ्नैकृतिकः कृतघ्नश्
शठोऽनृजुर्धर्मविद्वेषकश्च ।
न ब्रह्महा मनसाऽपि प्रपश्येद्
गवां लोकं पुण्यकृतां निवासम् ॥ २७

एतत्ते सर्वमाख्यातं नैपुण्येन सुरेश्वर ।
गोप्रदानरतानां च फलं शृणु शतक्रतो ॥ २८

दायाद्यलब्धैरर्थैर्यो गाः क्रीत्वा सम्प्रयच्छति ।
धर्मार्जितधनैः क्रीतास् स लोकानश्नुतेऽक्षयान् ॥ २९

यो वै द्यूते धनं जित्वा गाः क्रीत्वा सम्प्रयच्छति ।
स [2]विद्वानयुतं शक्र वर्षाणां फलमश्नुते ॥ ३०

दायाद्या यस्य वै गावो न्यायात् पूर्वैरुपार्जिताः ।
प्रदद्युस्ताः प्रदातृणां सम्भवन्त्यक्षया ध्रुवम् ॥ ३१

प्रतिगृह्य च यो दद्याद् गास्सुशुद्धेन चेतसा ।
तस्यापीहाक्षयाँल्लोकान् ध्रुवान् विद्धि शचीपते ॥ ३२

1. क—इतः षट् पादा न सन्ति 2. व—दिव्यमयुतं वर्षं

जन्मप्रभृति सत्यं च यो ब्रूयाद्विजितेन्द्रियः ।
गुरुद्विजसहः क्षान्तस् तस्य गोदैस्समा गतिः ॥ ३३

न जातु ब्राह्मणा वाच्या यदवाच्यं शचीपते ।
मनसा गोषु न द्रुह्येद् गोवृत्तिर्गोनुकम्पकः ॥ ३४

सत्ये धर्मे च निरतस् तस्य [1]कर्मफलं शृणु ।
गोसहस्रेण समिता तस्य धेनुर्भवत्युत ॥ ३५

क्षत्रियस्यापि च गुणैर् अन्वितस्य फलं शृणु ।
सप्तार्धशततुल्या गौर् भवतीति विनिश्चयः ॥ ३६

वैश्यस्यैते यदि गुणास् तस्य पञ्चशतं भवेत् ।
शूद्रस्यापि विनीतस्य चतुर्भागं फलं स्मृतम् ॥ ३७

एतच्चैवं योऽनुतिष्ठेत युक्तस्
सत्येन युक्तो गुरुशुश्रूषया च ।
दान्तः क्षान्तो देवतार्चिः प्रशान्तश्
शुचिर्बुद्धो धर्मशीलोऽनहंवाक् ॥ ३८

महत् फलं प्राप्नुते सद्द्विजाय
दत्त्वा दोग्ध्रीं विधिना तेन धेनुम् ।
नित्यं दद्याद्देवभक्तस्सदा च
सदोद्युक्तो गुरुशुश्रूपिता च ॥ ३९

1. क-घ—पुण्यफलं

वेदाध्यायी गोषु च भक्तिमांश्च
　नित्यं [1]द्रष्टुं योऽभिनन्देत गाश्च ।
आजानतो यश्च गवां नमेत
　इदं फलं शक्र भवेत तस्य ॥ ४०

यत् स्यादिष्ट्वा राजसूये फलं तु
　यत् स्यादिष्ट्वा बहुना काञ्चनेन ।
एतत् तुल्यं फलमस्याहुरग्र्यं
　सर्वे सन्तस्त्वृषयो ये च सिद्धाः ॥ ४१

योऽग्रं भक्तात् किञ्चिद्[2]प्राश्य दद्याद्
　गोभ्यो नित्यं गोव्रती सत्यवादी ।
शान्तो [3]भक्तो गोसहस्रस्य पुण्यं
　संवत्सरेणाप्नुयात् पुण्यशीलः ॥ ४२

य एवं भक्तमश्नीयाद् दद्यादेवं गवां च यत् ।
दश वर्षाणि च फलं वाजपेयस्य विन्दति ॥ ४३

एकेनैव च भक्तेन यः क्रीत्वा गां प्रयच्छति ।
यावन्ति तस्य प्रोक्तानि दिवसानि शतक्रतो ॥ ४४

तावच्छतानां स गवां फलमाप्नोति शाश्वतम् ।
ब्राह्मणस्य फलं हीदं क्षत्रियेऽभिहितं शृणु ॥ ४५

1. क-घ—दृष्ट्वा योगिनं देवताश्च　　2. क-घ—दुद्धृत्य
3. क-ख-घ—बुद्धो

पञ्चवार्षिकमेतत् तु क्षत्रियस्य फलं स्मृतम् ।
ततोऽर्धेन तु वैश्यस्य शूद्रो वैश्यार्धतस्स्मृतः ॥ ४६

यश्चात्मविक्रयं कृत्वा गाः क्रीत्वा सम्प्रयच्छति ।
यावतीस्स्पर्शयेद्गा वै तावतां फलमश्नुते ॥ ४७
रोम्णि रोम्णि महाभाग लोकाश्चास्याक्षयास्स्मृताः ॥ ४७॥
सङ्ग्रामेष्वार्जयित्वा तु यो वै गावः प्रयच्छति ।
आत्मविक्रयतुल्यास्ताश्शाश्वता विद्धि [1]कौशिक ॥ ४८॥
अभावे यो गवां दद्यात् तिलधेनुं यतव्रतः ।
दुर्गात् स तारितो धेन्वा क्षीरनद्यां प्रमोदते ॥ ४९॥

न त्वेवासां दानमात्रं प्रशस्तं
पात्रं कालो गोविशेषो विधिश्च ।
कालज्ञानं विप्रगवान्तरं हि
दुःखं ज्ञातुं पावकादित्यभूतम् ॥ ५०॥
स्वाध्यायाढ्यं शुद्धयोनिं प्रशान्तं
वैतानज्ञं पापभीरुं कृतज्ञम् ।
गोषु क्षान्तं नातितीक्ष्णं शरण्यं
वृत्तिग्लानं तादृशं पात्रमाहुः ॥ ५१॥
वृत्तिग्लाने सीदति वाऽतिमात्रं
तुष्ट्यर्थं वा होमहेतोः प्रसूत्याम् ।

1. क—भारत घ—काश्यप

गुर्वर्थे वा बालसंवृद्धये वा
धेनुं दद्याद्देशकालेऽविशिष्टे ॥ ५२॥

अन्तर्जातास्सुक्रयज्ञानलब्धाः
प्राणक्रीतास्सोदकास्सोद्वहाश्च ।
कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च
द्वारैरेतैर्गोविशेषाः प्रशस्ताः ॥ ५३॥

बलान्विताश्शीलवयोपपन्नास्
सर्वाः प्रशंसन्ति सुगन्धवत्यः ।
यथा हि गङ्गा सरितां वरिष्ठा
तथाऽर्जुनीनां कपिला विशिष्टा ॥ ५४॥

तिस्रो रात्रीरद्भिरुपोष्य भूमौ
तृप्ता गावस्तर्पितेभ्यः प्रदेयाः ।
वत्सैः पुष्टैः क्षीरपैस्सुप्रचारैस्
त्र्यहं दत्वा गोरसैर्वर्तितव्यम् ॥ ५५॥

दत्त्वा धेनुं सुव्रतां साधुवत्सां
कल्याणवृत्तामपलायिनीं च ।
यावन्ति रोमाणि भवन्ति तस्यास्
तावन्ति वर्षाणि वसन्त्यमुत्र ॥ ५६॥

तथाऽनड्वाहं ब्राह्मणायाथ [1]युग्मं
दत्त्वा युवानं बलिनं विनीतम् ।
कुलस्य कर्तारमनन्तवीर्यं
प्राप्नोति लोकान् दशधेनुदस्य ॥ ५७॥

कान्ताराद्ब्राह्मणान् गाश्च यः परित्राति [2]कौशिक ।
क्षेमेण तु विमुच्येत तस्य पुण्यफलं शृणु ॥ ५८॥
अश्वमेधक्रतोस्तुल्यम् फलं भवति शाश्वतम् ॥ ५९
मृत्युकाले सहस्राक्ष यां वृत्तिमनुकाङ्क्षते ।
लोकान् बहुफलान् विद्याद् यद्वाऽस्य हृदि वर्तते ॥ ६०
तत्सर्वं समवाप्नोति कर्मणाऽनेन मानवः ॥ ६०॥
गोभिश्च समनुज्ञातस् [3]सर्वत्र स महीयते ॥ ६१
यस्त्वेतेनैव भावेन गा वनेष्वनुगच्छति ।
तृणगोमयपर्णाशी विस्मितो नियतश्शुचिः ॥ ६२
अकामं तेन वस्तव्यं [4]मुदितेन शतक्रतो ॥ ६२॥
मम लोके स वसति लोके वा यत्र चेच्छति* ॥ ६३

इन्द्रः—
[5]जानन् यो गामपहरेद् विक्रीयादर्थकारणात् ।

1. घ—युग्यम्
2. घ—काश्यपे
3. क-घ—सर्वदा
4. क—अभीतेन
* अ-ख—कोशयोः अत्रैवाध्यायसमाप्तिर्दृश्यते
* क-घ—कोशयोः नात्राध्यायसमाप्तिर्दृश्यते
5. क-घ—अर्धद्वयं नास्ति

एतद्विज्ञातुमिच्छामि का नु तस्य गतिर्भवेत् ॥ ६४

ब्रह्मा—

भक्तार्थं विक्रयार्थं वा येऽपहारं हि कुर्वते ।
दानार्थं ब्राह्मणार्थं वा तदेवं श्रूयतां फलम् ॥ ६५

विक्रयार्थं हि यो हिंस्याद् भक्षयेद्वा निरङ्कुशः ।
घातयानं हि पुरुषं येऽनुमन्येयुरर्थिनः ॥ ६६

घातकः खादको वाऽपि तथा यश्चानुमन्यते ।
यावन्ति तस्या रोमाणि तावद्वर्षाणि मज्जति ॥ ६७

ये दोषा यादृशाश्चैव द्विजयज्ञोपघातके ।
विक्रये चापहारे च ते दोषा वै स्मृता गवाम् ॥ ६८

अपहृत्य तु यो गां वै ब्राह्मणाय प्रयच्छति ।
यावद्दाने फलं तस्यास् तावन्निरयमृच्छति ॥ ६९

सुवर्णं दक्षिणामाहुर् गोप्रदाने महाद्युते ।
सुवर्णं परमं ह्युक्तम् दक्षिणार्थमसंशयम् ॥ ७०

गोप्रदानं तारयते सप्त पूर्वांस्तथाऽपरान् ।
सुवर्णं दक्षिणां दत्वा तावद्द्विगुणमुच्यते ॥ ७१

सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
सुवर्णं पावनं शक्र परमाणां परं स्मृतम् ॥ ७२

सुवर्णं प्राहुरेतज्ज्ञा जातरूपं शतक्रतो ।

एषा [1]मे दक्षिणा प्रोक्ता समासेन महाद्युते ॥ ७३

भीष्मः—

एतत् पितामहेनोक्तम् इन्द्राय भरतर्षभ ।
इन्द्रो दशरथायाह रामायाह पिता तथा ॥ ७४
राघवोऽपि प्रियभ्रात्रे लक्ष्मणाय यशस्विने ।
ऋषिभ्यो लक्ष्मणेनोक्तम् अरण्ये वसता विभो ॥ ७५
परम्परागतं चेदम् ऋषयस्संशितव्रताः ।
दुर्धरं धारयामासू राजानश्चैव धार्मिकाः ॥ ७६
उपाध्यायेन गदितं मम चेदं युधिष्ठिर ॥ ७६॥
य इदं ब्राह्मणो नित्यं वदेद्ब्राह्मणसंसदि ।
यज्ञेषु गोप्रदानेषु द्वयोरपि समागमे ॥ ७७॥
तस्य लोकाः किलाक्षय्या दैवतैस्सह नित्यदा ।
इति ब्रह्मा स भगवान् उवाच परमेश्वरः ॥ ७८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥
[ अस्मिन्नध्याये ७८॥ श्लोकाः ]

---

1. क-घ—ते

## ॥ द्विषष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति सत्यदमादिप्रशंसनम् ॥

युधिष्ठिरः—

विस्रम्भितोऽहं भवता धर्मान् प्रवदता विभो ।
प्रवक्ष्यामि तु सन्देहं तन्मे ब्रूहि पितामह ॥ १
व्रतानां किं फलं प्रोक्तं कीदृशं वा महाद्युते ।
नियमानां फलं किं स्वित् स्वधीतस्य च किं फलम् ॥ २
[1]दमस्येह फलं किं स्वित् [2]वेदानां धारणे च किम् ।
अध्यापने फलं किं स्वित् सर्वमिच्छामि वेदितुम् ॥ ३
अप्रतिग्राहके किं च फलं लोके पितामह ।
तस्य किं च फलं दृष्टं श्रुतं यस्सम्प्रयच्छति ॥ ४
स्वधर्मनिरतानां च शूराणां चापि किं फलम् ।
सत्ये च किं फलं प्रोक्तं ब्रह्मचर्ये च किं फलम् ॥ ५
पितृशुश्रूषणे किं च मातृशुश्रूषणे तथा ।
आचार्यगुरुशुश्रूषासानुक्रोशानुकम्पने ॥ ६
एतत् सर्वमशेषेण पितामह यथातथम् ।

1. घ—अर्धपञ्चकं नास्ति
2. क—इतः अर्धचतुष्टयं नास्ति

वेत्तुमिच्छामि [1]धर्मात्मन् परं कौतूहलं हि मे ॥ ७

भीष्मः—

यो व्रतं वै यथोद्दिष्टं तथा सम्प्रतिपद्यते ।
अखण्डं सम्यगारब्धम् तस्य लोकास्सनातनाः ॥ ८

नियमानां फलं राजन् प्रत्यक्षमिह दृश्यते ।
नियमानां क्रतूनां च त्वयाऽवाप्तमिदं फलम् ॥ ९

स्वधीतस्यापि च फलं दृश्यतेऽमुत्र चेह च ।
इह लोकेऽर्थवान् नित्यं ब्रह्मलोके च मोदते ॥ १०

दमस्य तु फलं राजञ् शृणु त्वं विस्तरेण मे ।
दान्तास्सर्वत्र सुखिनो दान्तास्सर्वत्र निर्वृताः ॥ ११

[2]यत्रेच्छागामिनो विप्रास् सर्वशत्रुनिषूदनाः ।
प्रार्थयन्ते हि यद्दान्ता लभन्ते तदसंशयम् ॥ १२
[3]युज्यन्ते सर्वकामैर्हि दान्तास्सर्वत्र पाण्डव ॥ १२॥
स्वर्गे तथाऽनुमोदन्ते तपसा विक्रमेण च ॥ १३

दानैर्यज्ञैश्च विविधैर् यथा दान्ताः क्षमान्विताः ।
दाता कुप्यति नो दान्तास् तस्माद्दानाद्वरो दमः ॥ १४
यस्तु दद्यादकुप्यन् हि तस्य लोकास्सनातनाः ॥ १४॥

---

1. क-घ—तद्धर्मं 2. अ-क-घ—नास्तीदमर्धम्
3. क-घ—अर्धचतुष्टयं नास्ति

क्रोधो हन्ति हि यद्दानं तस्माद्दानाद्वरो दमः ॥ १५

विद्यादानात् परं नास्ति वेदविद्या महाफला ।
अध्यापकः परिक्लेशाद् अक्षयं फलमश्नुते ॥ १६

विधिवत् पावकं हुत्वा ब्रह्मलो[1]कगतो नृप ।
अधीत्यापि हि यो वेदान् न्यायविद्भ्यः प्रयच्छति ॥ १७
गुरुकर्मप्रशंसी च सोऽपि स्वर्गे महीयते ॥ १७॥

क्षत्रियोऽध्ययने युक्तो यजने दानकर्मणि ।
युद्धे यश्च परित्राता सोऽपि स्वर्गे महीयते ॥ १८॥

वैश्यस्स्वकर्मनिरतः प्रदानाल्लभते महत् ।
शूद्रस्स्वकर्मनिरतस् स्वर्गं शुश्रूषयेच्छति ॥ १९॥

शूरा बहुविधाः प्रोक्तास् तेषामर्थांश्च मे शृणु ।
शूरान् विधात्रा निर्दिष्टान् फलं शूरस्य चैव हि ॥ २०॥

यज्ञे शूरास्सत्यशूरा दमे शूरास्तथा परे ।
युद्धशूरास्तथैवोक्ता दानशूराश्च मानवाः ॥ २१॥

बुद्धिशूरास्तथा चान्ये क्षमाशूरास्तथा परे ।
आर्जवेन तथा शूरास् समवर्तन्त मानवाः ॥ २२॥

तैस्तैस्तु नियमैश्शूरा बहवस्सन्ति चापरे ।

---

1. क-ख-घ—के यथा नृप

वेदाध्ययनशूराश्च [1]शूराश्चाध्यापने तथा ॥ २३॥

गुरुशुश्रूषया शूराः [2]पितृशुश्रूषया परे ।
[3]मातृशुश्रूषया शूरा भैक्षशूरास्तथा परे ॥ २४॥

साङ्ख्यशूराश्च बहवो योगशूरास्तथा परे ।
अरण्ये गृहवासे च शूराश्चातिथि[4]पूजने ॥ २५॥

सर्वे यान्ति पराँल्लोकान् स्वकर्मफलनिर्जितान् ॥ २६

[5]पारणं सर्व[6]देये च सर्वतीर्थावगाहनम् ।
सत्यं च ब्रुवतो नित्यं समं वा स्यान्नवा समम् ॥ २७

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेकं विशिष्यते ॥ २८

सत्येन सूर्यस्तपति सत्येनाग्निः प्रदीप्यते ।
सत्येन मारुतो वाति सर्वं सत्ये प्रतिष्ठितम् ॥ २९

सत्येन देवान् प्रीणाति पितॄंश्च ब्राह्मणांस्तथा ।
सत्यमाहुः परं धर्मं तस्मात् सत्यं न लोपयेत् ॥ ३०

मुनयस्सत्यनिरता मुनयस्सत्यविक्रमाः ।
मुनयस्सत्यशपथास् तस्मात् सत्यं विशिष्यते ॥ ३१

---

1. क-घ—वेदस्याध्यापने तथा
2. अ—अयं पादोऽनन्तरश्च न स्तः
3. ख—इदमर्धं नास्ति
4. क-ख-घ—भोजने
5. ख—धारणं सर्ववेदानां
6. क-घ—तीर्थानां सह

सत्यवन्तस्सत्यलोके मोदन्ते भरतर्षभ ।
दमस्सत्यफलावाप्तिर् उक्तस्सर्वात्मना मया ॥ ३२

असंशयं विनीतात्मा स च स्वर्गे महीयते ।
ब्रह्मचर्यस्य तु गुणान् शृणु मे वसुधाधिप ॥ ३३

आजन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह ।
न तस्य किञ्चिदप्राप्यम् इति विद्धि जनाधिप ॥ ३४

बह्व्यः कोट्यस्त्वृषीणां तु ब्रह्मलोकमितो गताः ।
सत्ये रतानां सततं दान्तनामूर्ध्वरेतसाम् ॥ ३५

ब्रह्मचर्यं [1]दहेद्राजन् सर्वपापान्युपासितम् ।
ब्राह्मणेन विशेषेण ब्राह्मणो ह्यग्निरुच्यते ॥ ३६

प्रत्यक्षं च तथाऽप्येतद् ब्राह्मणेषु तपस्विषु ।
बिभेति च तथा शक्रो ब्रह्म[2]चर्यप्रधर्षितः ॥ ३७

तद्ब्रह्मचर्यस्य फलम् ऋषीणामिह विद्यते ॥ ३७॥

मातापित्रोः पूजने यो धर्मस्तमपि मे शृणु ॥ ३८

शुश्रूषते यः पितरं न चासूयेत् कथञ्चन ।
मातरं वाऽनहं वादी गुरुमाचार्यमेव च ॥ ३९

---

1. ख—हरेद्राजन्
2. क-घ—चारि

तस्य पार्थफलं विद्धि स्वर्लोके स्थानमुत्तमम् ।
न च पश्येत नरकं गुरुशुश्रूषुरात्मवान् ॥ ४०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
[ अस्मिन्नध्याये ४० श्लोकाः ]

---

## ॥ त्रिषष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गोदानविधिफलादिकथनम् ॥

---

युधिष्ठिरः—

विधिं गवां परमहम् श्रोतुमिच्छामि तत्त्वतः ।
येनेह शाश्वताँल्लोकान् अखिलानश्नुवीमहि ॥ १

भीष्मः—

न गोदानात् परं किञ्चिद् विद्यते वसुधाधिप ।
गौर्हि न्यायागता दत्ता सद्यस्तारयते कुलम् ॥ २

सतामर्थस्सम्यगुत्पादितो यस्
स वै कॢप्तस्सम्यगिज्या प्रजाभ्यः ।
तस्मात् कालं सम्यगिज्याप्रवृत्तं
गवां दाने शृणु राजन् विधिं मे ॥ ३

पुरा गोष्ठे निलीनासु गोषु सन्दिग्धदर्शिना ।
मान्धात्रा प्रकृतं प्रश्नम् बृहस्पतिरभाषत ॥ ४

द्विजानामन्त्र्य सत्कृत्य प्रोक्तं कालमुपोष्य च ।
गोदानार्थं नियुञ्जीत रोहिणीं नियतव्रतः ॥ ५

आह्वानं च प्रयुञ्जीत सङ्गवे बहुलेऽपि च ।
प्रविश्य च गवां मध्यम् इमां श्रुतिमुदाहरेत् ॥ ६

गौर्मे माता गोवृषभः पिता मे
दिवं गच्छन् जगती मे प्रतिष्ठा ।
प्रपद्यैवं शर्वरीमुष्य गोषु
मुनिर्वाणीमुत्सृजेद् गोप्रदाने ॥ ७

[1]स तामेकां निशां गोभिस् समसङ्ख्यसमावृतः ।
एकाग्रगमनात् सद्यः कलुषाद्विप्रमुच्यते ॥ ८

[2]उत्सृष्टवृषवत्सा हि प्रदेया सूर्यदर्शने ।
त्रिविधा प्रतिपत्तव्या अर्थवादाशिषस्तवाः ॥ ९

ऊर्जस्विन्य ऊर्जमेधाश्च यज्ञा
गर्भोऽमृतस्य जगतश्च प्रतिष्ठा ।

---

1. क—कृशामेकान्नशाङ्गो हि समस्सख्यसमावृतः ।
एतान्मे गमनात्　[ पाठान्तरम् ]
घ—सितामेकान्नशां गोभिस्समसंख्यसमायुतः ।
एतान्मे गमनात् सद्यः　[ पाठान्तरम् ]
2. क-घ—उत्सृष्टा वै सवत्सा हि

[1]क्षितौ रोम्णः प्रभवश्शश्वदेव
प्राजापत्यस्सर्वविद्याप्रवादः ॥ १०

गावो ममैनः प्रणुदन्तु सौर्यास्
तथा सौम्यास्स्वर्गयानाय सन्तु ।
आत्मानं मे मातृवच्चाश्रयन्तु
तथाऽनुक्तास्सन्तु सर्वाशिषो मे ॥ ११

[2]शेषोत्सर्गे कर्मभिर्देहमोक्षे
[3]सरस्वत्यां श्रेयसि सम्प्रवृत्ताः ।
यूयं नित्यं पुण्यकर्मोपवाहाश्
शंसध्वं मे गतिमिष्टां प्रपन्नाः ॥ १२

या वै यूयं सोऽहमद्यैकभावो
युष्मान् दत्त्वा देहमात्मप्रदाता ।
मनश्च्युता मन एवोपपन्नास्
सन्धुक्षध्वं सौम्यरूपाग्र्यदेहाः ॥ १३

दानस्याग्रे पूर्वमेतद्वदेत
गवां दाता विद्धि यत् पूर्वदृष्टम् ।
प्रतिब्रूयाच्छेषधर्मान् द्विजातिः
प्रतिगृह्णन् वै गोप्रदाने विधिज्ञः ॥ १४

---

1. क-घ—अर्धत्रयं नास्ति 2. घ—रोषात्सर्गे
3. घ—सरस्वत्या

गां ददानीति वक्तव्यम् अर्घ्यमुत्सृज्य सुव्रत ।
ऊढव्या भरितव्या च वैष्णवीति च चोदयेत् ॥ १५

नाम सङ्कीर्तयेत्तस्या यथासङ्ख्योत्तराय वै ।
फलं षड्विंशदष्टौ च सहस्राणि च विंशतिः ॥ १६

एवमेतान् गुणान् वृद्धान् भावनीयान् यथाक्रमम् ।
गोप्रदानात् समाप्नोति समस्तानष्टमे क्रमे ॥ १७

गोदानशीलो निर्भयश्चा[1]न्नदाता
तस्याददे वसुदाता च कामी ।
ऊढव्योढा भारत यश्च विद्वान्
समाख्यातास्ते वैष्णवाश्चन्द्रलोकाः ॥ १८

गा वै दत्त्वा गोव्रती स्यात् त्रिरात्रं
निशां चैकां [2]संवसेतेह ताभिः ।
काम्याष्टम्यां वर्तितव्यं त्रिरात्रं
रसैर्वा गोश्शकृता प्रस्रवैर्वा ॥ १९

[3]वेदव्रती स्याद्वृषभप्रदाता
वेदावाप्तिर्गोयुगस्य प्रदाने ।

1. अ—स्य  घ—ई
2. क-घ—समुपास्ते ह  ख—संवसतीह
3. अ-क-घ—देवव्रती

तथा गवां विधिमासाद्य यज्वा
लोकानग्र्यान् विन्दते गोविधिज्ञः ॥ २०

[1]कामान् सर्वान् पार्थिवानेकसंस्थान्
यो वै दद्यात् कामदुघां च भूमिम् ।
सम्यग्गयास्स्युर्हव्यकव्यं वहन्त्यस्
ता उत्सृज्या अक्षयं सम्प्रदानम् ॥ २१

[2]न वाऽशिष्यायाव्रतायोपकुर्या-
न्नाश्रद्दधानाय न वक्रबुद्धये ।
गुह्यो ह्ययं सर्वलोकस्य धर्मो
न मांधाता यत्र तत्र प्रजल्पेत् ॥ २२

सन्ति लोके श्रद्दधाना मनुष्यास्
सन्ति क्षुद्रा राक्षसा मानुषेषु ।
येषां दानं दीयमानं ह्यनिष्टं
नास्तिक्यं वै संश्रयन्ते ह्यपुण्याः ॥ २३

बार्हस्पत्यं वाक्यमेतन्निशम्य
राजानो वै गोप्रदानानि कृत्वा ।
लोकान् प्राप्ताः पुण्यशीलास्सुवृत्तास्
स्थाने राजन् कीर्त्यमानान् निबोध ॥ २४

---

1. क-घ—क्रमात्
2. क-घ—नाशिष्याय नाव्रता

उशीनरो विष्वगश्वो नृगश्च
　भगीरथो विश्रुतो यौवनाश्वः ।
मान्धाता वै मुचुकुन्दश्च राजा
　भूरिद्युम्नो नैषधस्सोमकश्च ॥ २५

पुरूरवा भरतश्चक्रवर्ती
　यस्यान्वया भारतास्सर्व एव ।
तथा वीरो दाशरथिश्च रामो
　ये चाप्यन्ये विश्रुताः कीर्तिमन्तः ॥ २६

तथा राजा पृथुकर्मा दिलीपो
　दिवं प्राप्ता गोप्रदाने विधिज्ञाः ।
यज्ञैर्होमैस् तपसा दानधर्मैर्
　मान्धाता वै गोप्रदानैश्च युक्तः ॥ २७

तस्मात् पार्थ त्वमपीमां मयोक्तां
　बार्हस्पत्यां भारतीं धारयस्व ।
द्विजाग्र्येभ्यः प्रयच्छस्व प्रतीतो
　गाः पुण्या वै प्राप्य राज्यं कुरूणाम् ॥ २८

**वैशम्पायनः—**

तथा सर्वं कृतवान् धर्मराजो
　भीष्मेणोक्तो विधिवद् गोप्रदाने ।

स मांधाता देवगुरूपदिष्टं
[1]सत्यं धर्मं धारयामास राजा ॥ २९

इति नृपतिवरस्सुस्थितो गोप्रदाने
[2]यवशकलैस्सह गोमयं पिबानः ।
क्षितितलशयनश्शिखी यतात्मा
वृष इव राजवृषस्तदा बभूव ॥ ३०

स नृपतिरभवत् स देवताभ्यः
प्रवणमना ह्यभिसंस्तुवंश्च गा वै ।
न च धुरि नृप गामयुङ्क्त भूयस्
तुरगवरैरगमच्च यत्र तत्र ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
[ अस्मिन्नध्याये ३१ श्लोकाः ]

---

1. क-घ—सम्यग्धर्मं
2. घ—यवीयैस्सकलैस्सह गोमयं पिबानः

## ॥ चतुष्षष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गोसामान्योत्पत्तिप्रकारकथनपूर्वकं कपिलोत्पत्तिप्रकारकथनम् ॥

वैशम्पायनः—

ततो युधिष्ठिरो राजा भूयश्शान्तनवं नृप ।
गोदाने विस्तरं धीमान् पप्रच्छ विनयान्वितः ॥ १

युधिष्ठिरः—

गोप्रदाने गुणान् सर्वान् पुनः प्रब्रूहि भारत ।
न हि तृप्याम्यहं वीर शृण्वानोऽमृतमीदृशम् ॥ २

वैशम्पायनः—

इत्युक्तो धर्मराजेन तदा शान्तनवो नृप ।
सम्यगाह गुणांस्तस्मै गोप्रदानस्य केवलान् ॥ ३

भीष्मः—

वत्सलां गुणसम्पन्नां तरुणां वस्त्रसंवृताम् ।
दत्त्वेदृशीं गां विप्राय सर्वपापैः प्रमुच्यते ॥ ४

अनन्ता नाम ते लोका गां दत्त्वा यत्र गच्छति ॥ ४॥

पीतोदकां त्यक्ततृणां दुष्टदुग्धां निरिन्द्रियाम् ।
ज्वरार्तामुपयुक्तार्थां जीर्णां कूपमिवाजलम् ॥ ५॥

तमो दत्त्वा प्रविशति द्विजं [1]क्लेशेन योजयन् ॥ ६

1. क-घ—कोपेन

दुष्टा रुष्टा व्याधिता दुर्बला च
न दातव्या या तु मूल्यैर्न दत्ता ।
क्लेशैर्विप्रं योऽफलैस्संयुनक्ति
तस्यावीर्याश्चाफलाश्चैव लोकाः ॥ ७

बलान्विताश्शीलवीर्योपपन्नास्
सर्वाः प्रशंसन्ति सुगन्धवत्यः ।
यथा हि गङ्गा सरितां वरिष्ठा
तथाऽर्जुनीनां कपिला वरिष्ठा ॥ ८

युधिष्ठिरः—

कस्मात् साम्ये बहुलानां प्रदानात्
सद्भिः प्रशस्तं कपिलाप्रदानम् ।
विशेषमिच्छामि महानुभाव
श्रोतुं समर्थो हि भवान प्रवक्तुम् ॥ ९

भीष्मः—

वृद्धानां ब्रुवतां श्रुत्वा कपिलानामथोद्भवम् ।
वक्ष्यामि तमशेषेण रोहिण्यो निर्मिता यथा ॥ १०

प्रजास्सृजेति व्यादिष्टः पूर्वं दक्षस्स्वयम्भुवा ।
नासृजद्वृत्तिमेवाग्रे प्रजानां हितकाम्यया ॥ ११

यथा ह्यमृतमाश्रित्य वर्तयन्ति दिवौकसः ।
तथा वृत्तिमुपाश्रित्य वर्तयन्ति प्रजास्सदा ॥ १२

अचरेभ्यश्च भूतेभ्यश् चराश्श्रेष्ठास्ततो नराः ।
ब्राह्मणाश्च तथा श्रेष्ठास् तेषु यज्ञाः प्रतिष्ठिताः ॥ १३

यज्ञैराप्यायते सोमस् स च गोषु प्रतिष्ठितः ।
ताभ्यो देवाः प्रमोदन्ते प्रजानां वृत्तिरासु च ॥ १४

ततः प्रजासु सृष्टासु दक्षाद्यैः क्षुधिताः प्रजाः ।
प्रजापतिमुपाधावन् विचिन्त्य च चतुर्मुखम् ॥ १५

एतान्येव तु भूतानि प्राक्रोशन् वृत्तिकाङ्क्षया ।
वृत्तिदं माऽन्वपद्यन्त तृषिताः पितृमातृवत् ॥ १६

इति तन्मनसा गत्वा प्रजासर्गार्थमात्मनः ।
प्रजापतिर्बलाधानम् अमृतं प्रापिबत्तदा ॥ १७

शंसतस्तस्य तृप्तिं तु गन्धात् सुरभिरुत्थिता ॥ १७॥

मुखजा साऽसृजद्धातुस् सुरभिं लोकमातरम् ।
दर्शनीयरसां वृत्तिं सुरभिं मुखजां सुताम् ॥ १८॥

साऽसृजत् सौरभेयीस्तु सुरभिर्लोकमातरः ।
सुवर्णवर्णाः कपिलाः प्रजानां वृत्तिधेनवः ॥ १९॥

तासाममृतवृत्तीनां क्षरन्तीनां समन्ततः ।
बभूवामृतजः फेनस् स्रवन्तीनामिवोर्मिजः ॥ २०॥

स वत्समुखविभ्रष्टो भवस्य भुवि तिष्ठतः ।
शिरस्यवापतत् क्रुद्धस् स तदैक्षत च प्रभुः ॥ २१॥

ललाटप्रभवेनाक्ष्णा रोहिणीं प्रदहन्निव ॥ २२
तत्तेजस्तु ततो रौद्रं कपिलां गां विशां पते ।
नानावर्णत्वमनयन्मेघानिव दिवाकरः ॥ २३
यास्तु तस्मादपक्रम्य सोममेवाभिसंश्रिताः ।
यथोत्पन्नास्स्ववर्णस्थास् ता ह्येता नान्यवर्णगाः ॥ २४
[1]अथ क्रुद्धं महादेवं प्रजापतिरभाषत ॥ २४॥

ब्रह्मा—

अमृतेनावसिक्तस्त्वम् नोच्छिष्टं विद्यते गवाम् ॥ २५
यथा ह्यमृतमादाय सोमो विष्यन्दते पुनः ।
तथा क्षीरं क्षरन्त्येता रोहिण्योऽमृतसम्भवाः ॥ २६
न दुष्यत्यनिलो नाग्निर् न सुवर्णं घृतं दधि ।
नामृतेनामृतं पीतं न वत्सैर्दुष्यते पयः ॥ २७
इमाँल्लोकान् धरिष्यन्ति हविषा प्रस्रवेन च ।
आसाममृतमश्नीहि सर्वामृतमयं शुभम् ॥ २८

भीष्मः—

ऋषभं च ददौ तस्मै भगवाँल्लोकभावनः ।
प्रसादयामास ततस् तेन रुद्रं च भारत ॥ २९
प्रीतश्चापि महादेवश् चकार वृषभं तदा ।
ध्वजं च वाहनं चैव तस्मात् स वृषभध्वजः ॥ ३०

1. क-घ—अर्धचतुष्टयं नास्ति

तदा देवो महादेवस् तथा पशुपतिः कृतः ।
ईश्वरस्सन् स भगवान् वृषाङ्क इति कीर्त्यते ॥ ३१

एवमव्यग्रवर्णानां कपिलानां विशां पते ।
प्रदाने प्रथमः कल्पस् सर्वासामेव कीर्तितः ॥ ३२

लोकज्येष्ठा लोकवृत्त्यै प्रवृत्ता
रुद्रोद्भूताम्सोमविष्यन्दभूताः ।
काम्याः पुण्याः कामदाः प्राणदाश्च
गा वै दत्त्वा सर्वकामप्रदस्स्यात् ॥ ३३

इदं गवां प्रभवविधानमुत्तमं
पठेत् सदा शुचिरतिमङ्गल[1]प्रियम् ।
विमुच्यते कलिकलुषेण मानवः
प्रियान् सुतान् पशुधनमाप्नुयान्नरः ॥ ३४

हव्यं कव्यं तर्पणं शान्तिकर्म
यानं वासो वृद्धबालस्य तुष्टिः ।
एतान् सर्वान् गोप्रदाने गुणांस्तु
[2]दानाद्राजन्नाप्नुयात् सर्वदैव ॥ ३५

**वैशम्पायनः—**

पितामहस्याथ निशम्य वाक्यं
राजा सह भ्रातृभिराजमीढः ।

---

1. ख-घ—प्रियः    2. ख-घ—दाता राजन्नाप्नुयाद्वै सदैव

सौवर्णकांस्योपदुहास्ततो गाः
पार्थो ददौ ब्राह्मणसत्तमेभ्यः ॥ ३६

तथैव तेभ्योऽपि ददौ द्विजेभ्यो
गवां सहस्राणि शतानि चैव ।
यज्ञान् समुद्दिश्य स दक्षिणार्थे
लोकान् विजेतुं [1]परमस्य कर्तुः ॥ ३७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
[ अस्मिन्नध्याये ३७ श्लोकाः ]

## ॥ पञ्चषष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गोमहिमप्रतिपादकवसिष्ठसौदाससंवादानुवादः ॥

भीष्मः—

एतस्मिन्नेव काले तु वसिष्ठमृषिसत्तमम् ।
इक्ष्वाकुवंशजो राजा सौदासो ददतां वरः ॥ १

सर्वलोकचरं सिद्धं ब्रह्मलोकधरं मुनिम् ।
पुरोहितमिदं वाक्यम् अभिवाद्योपचक्रमे ॥ २

1. अ–ख—परमं च कर्तुम्

सौदासः—

त्रैलोक्ये भगवन् किंस्वित् पवित्रं कथ्यतेऽनघ ।
यत् कीर्तयन् सदा मर्त्यः प्राप्नुयात् पुण्यमुत्तमम् ॥ ३

भीष्मः—

तस्मै प्रोवाच भगवान् प्रणताय हितं तथा ।
गवामुपनिषद्विद्यां नमस्कृत्य गवां शुचिः ॥ ४

वसिष्ठः—

गावस्सुरभिगन्धिन्यस् तथा गुग्गुलुगन्धिकाः ।
गावः प्रतिष्ठा [1]लोकानां गावस्स्वस्त्ययनं महत् ॥ ५

गावो भूतं भविष्यच्च गावः पुष्टिस्सनातनी ।
गावो लक्ष्म्यास्सदा मूलं गोषु दानं न नश्यति ॥ ६

अन्नं हि सततं गावो देवानां परमं हविः ।
स्वाहाकारवषट्कारौ नित्यं गोषु प्रतिष्ठितौ ॥ ७

गावो यज्ञस्य हि फलं गोषु यज्ञः प्रतिष्ठितः ।
सायं प्रातश्च सततं होमकाले महामते ॥ ८

गावो ददति वै होमम् ऋषिभ्यः पुरुषर्षभ ॥ ८॥

कानिचिद्यानि दुर्गाणि दुष्कृतानि कृतानि च ।
तरन्ति ते च पाप्मानं धेनुं ये ददति प्रभो ॥ ९॥

एकां च दशगुर्दद्याद् दश दद्याच्च गोशती ।

---

1. क-ख-घ—लाभानां

शतं सहस्रगुर्दद्यात् सर्वे तुल्यफला हि ते ॥ १०॥
अनाहिताग्निश्शतगुर् अयज्वा च सहस्रगुः ।
समृद्धो यश्च कीनाशो नार्घमर्हन्ति ते त्रयः ॥ ११॥
कपिलां ये प्रयच्छन्ति सवत्सां कांस्यदोहनाम् ।
सुव्रतां वस्त्रसंवीताम् उभौ लोकौ जयन्ति ते ॥ १२॥
युवानमिन्द्रियोपेतं शतेन सह यूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिश्रृङ्गमलङ्कृतम् ॥ १३॥
ऋषभं ये प्रयच्छन्ति श्रोत्रियस्य परन्तप ।
ऐश्वर्यं तेऽभिजायन्ते जायमानाः पुनः पुनः ॥ १४॥
नाकीर्तयित्वा गास्सम्यक् नासंस्पृश्य तथोत्पतेत् ।
सायं प्रातर्नमस्येच्च गास्ततः पुष्टिमाप्नुयात् ॥ १५॥
गवां मूत्रपुरीषस्य नोद्विजेत कदाचन ।
न चासां मांसमश्नीयाद् गवां पुष्टिं तथाऽऽश्नुते ॥ १६॥
गाश्च सङ्कीर्तयेन्नित्यं नावमन्येत गास्तथा ।
अनिष्टं स्वप्नमालक्ष्य नरो गास्सम्प्रकीर्तयेत् ॥ १७॥
गोमयेन सदा स्नायाद् गोकरीषे च संविशेत् ।
श्लेष्ममूत्रपुरीषाणां प्रतिघातं तु वर्जयेत् ॥ १८॥
सौम्ये चर्मणि भुञ्जीत निरीक्षन् वारुणीं दिशम् ।
वाग्यतस्सर्पिषा भूमौ गवां पुष्टिं तथाऽऽश्नुते ॥ १९॥

घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतं दद्याद्घृतं प्राशेद् गवां व्युष्टिं तथाऽश्नुते ॥ २०॥

गोमत्या विद्यया धेनुं तिलानां योऽभिमन्त्रयेत् ।
रथं रत्नमयं दद्यान्न स शोचेत् कृताकृते ॥ २१॥

गावो मामुपतिष्ठन्तु हेमशृङ्गाः पयोमुचः ।
सुरभ्यस्सौरभेय्यश्च सरितस्सागरं यथा ॥ २२॥

गाश्च पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा ।
गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् ॥ २३॥

एवं रात्रौ दिवा चैव समेषु विषमेषु च ।
महाभयेषु च नरः कीर्तयन्मुच्यते भयात् ॥* २४॥

शतं वर्षसहस्राणां तपस्तप्तं सुदुश्चरम् ।
गोभिः पूर्वविसृष्टाभिर् गच्छामश्शृङ्गितामिति ॥ २५॥

लोकेऽस्मिन् दक्षिणानां च सर्वासां वयमुत्तमाः ।
[1]स एव चेतसा तेन हतो लिप्येत सर्वशः ॥ २६॥

भवेम न च लिप्येम दोषेणेति परन्तप ।
शकृता च पवित्रार्थं कुर्वीरन् देवमानुषाः ॥ २७॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. क—स एव च ततोऽहं च तेतप्रेत सहस्रशः ।
घ—स एव वाचा सातोहं ते तप्येत सहस्रशः । [पाठान्तरम्]

तथा सर्वाणि भूतानि स्थावराणि चराणि च ।
प्रदातारश्च गोलोकान् गच्छेयुरिति मानद ॥ २८॥

ताभ्यो वरं ददौ ब्रह्मा तपसोऽन्ते स्वयं प्रभुः ।
एवं भवत्विति विभुर् लोकांस्तारयतेति च ॥ २९॥

उत्तस्थुस्सिद्धकामास्ता भूतभव्यस्य मातरः ।
तपसोऽन्ते महाराज गावो लोकपरायणाः ॥ ३०॥

तस्माद् गावो महाभागाः पवित्रं परमुच्यते ।
तथैव सर्वभूतानां गावस्तिष्ठन्ति मूर्धनि ॥ ३१॥

समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां [1]ब्रह्मलोके महीयते ॥ ३२॥

[2]रोहिणीं तुल्यवत्सां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां स्वर्गलोके महीयते ॥ ३३॥

[3]समानवत्सां श्वेतां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां इन्द्रलोके महीयते ॥ ३४॥

समानवत्सां धवलां धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां स्वर्गलोके महीयते ॥ ३५॥

समानवत्सां कृष्णां तु धेनुं दत्त्वा पयस्विनीम् ।

---

1. ख—वसु
2. क-ख—द्वादशार्धानि न सन्ति
3. ख—अर्धषट्कं नास्ति

सुव्रतां वस्त्रसंवीतां स्वर्गलोके महीयते ॥ ३६॥

समानवत्सां नीलां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीताम् अग्निलोके महीयते ॥ ३७॥

वातरेणुसवर्णां तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां वायुलोके महीयते ॥ ३८॥

[1–2]समानवत्सां धूम्रां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां यमलोके महीयते ॥ ३९॥

अपां फेनसवर्णां तु सवत्सां कांस्यदोहनीम् ।
प्रदाय वस्त्रसंवीतां वारुणं लोकमश्नुते ॥ ४०॥

[3]हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कांस्यदोहनीम् ।
प्रदाय वस्त्रसंवीतां कौबेरं लोकमश्नुते ॥ ४१॥

पलालधूम्रवर्णां तु सवत्सां कांस्यदोहनीम् ।
प्रदाय वस्त्रसंवीतां पितृलोके महीयते ॥ ४२॥

सवत्सां पीवरीं दत्त्वा शितिकण्ठामलङ्कृताम् ।
वैश्वदेवम[4]सौ पुण्यं स्थानं श्रेष्ठं प्रपद्यते ॥ ४३॥

समानवत्सां गौरीं तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां वसूनां लोकमश्नुते ॥ ४४॥

---

1. क-घ—इदमर्धद्वयं नास्ति 2 ख—अर्धचतुष्टयं नास्ति
3. ख—अर्धचतुष्टयं नास्ति 4. ख-घ—संबाधं

पाण्डुकम्बलवर्णां तु सवत्सां कांस्यदोहनाम् ।
[1]प्रदाय वस्त्रसंवीतां साध्यानां लोकमाप्नुते ॥ ४५॥
वैतानस्थितमुक्षाणं सर्वरत्नैरलङ्कृतम् ।
प्रदाय मरुतां लोकान् [2]विशोकः प्रतिपद्यते ॥ ४६॥
वत्सोपपन्नां नीलां गां सर्वरत्नसमन्विताम् ।
गन्धर्वाप्सरसां लोकान् दत्त्वा प्राप्नोति मानवः ॥ ४७॥
शितिकण्ठमनड्वाहं सर्वरत्नैरलङ्कृतम् ।
दत्त्वा प्रजापतेर्लोकान् विशोकः प्रतिपद्यते ॥ ४८॥
गोप्रदानरतो याति भित्त्वा जलदसञ्चयान् ।
विमानेनार्कवर्णेन दिवि राजन विराजते ॥ ४९॥
तं चारुवेषास्सुश्रोण्यस् सहस्रं वरयोषितः ।
रमयन्ति नरश्रेष्ठ गोप्रदानरतं नरम् ॥ ५०॥
वीणानां वल्लकीनां च नूपुराणां च शिञ्जितैः ।
हासैश्च हरिणाक्षीणां प्रसुप्तः प्रतिबोध्यते ॥ ५१॥

यावन्ति रोमाणि भवन्ति धेन्वास्
तावन्ति वर्षाणि महीयते सः ।
स्वर्गाच्च्युतश्चापि ततो नृलोके
कुले प्रसूतो विपुले विशोकः* ॥ ५२॥

---

1. क-घ—इदमर्धं नास्ति    2. अ-ख—आर्जितान्
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः ।
घृतनद्यो घृतावर्तास् ता मे सन्तु सदा गृहे ॥ ५३॥

घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् ।
घृतं सर्वेषु गात्रेषु घृतं मे मनसि स्थितम् ॥ ५४॥

गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ।
गावो मे सर्वतश्चैव गवां मध्ये वसाम्यहम् ॥ ५५॥

इत्याचम्य जपेत् सायं प्रातश्च पुरुषस्सदा ।
यदहः कुरुते पापं तस्मात् सद्यो विमुच्यते ॥ ५६॥

प्रासादा यत्र सौवर्णा वसोर्धाराश्च कामदाः ।
गन्धर्वाप्सरसो यत्र तत्र यान्ति सहस्रदाः ॥ ५७॥

नवनीतपङ्काः क्षीरोदा दधिशैवलसङ्कुलाः ।
वहन्ति यत्र नद्यो वै तत्र यान्ति सहस्रदाः ॥ ५८॥

गवां शतसहस्रं तु यः प्रयच्छेद्यथाविधि ।
परां वृद्धिमवाप्याथ स गोलोके महीयते ॥ ५९॥

दश चोभयतः प्रेत्य मातापित्रोः पितामहात् ।
स याति सुकृताँल्लोकान् पुनाति च कुलं नरः ॥ ६०॥

धेन्वाः प्रमाणेन समप्रमाणां
धेनुं तिलानामपि च प्रदाय ।

पानीयवापीस्स यमस्य लोके
न यातनां काञ्चिदुपैति तत्र ॥ ६१॥

पवित्रमग्र्यं जगतः प्रतिष्ठा
दिवौकसां मातरोऽथाप्रमेयाः ।
अन्वालभेद्दक्षिणतो व्रजेच्च
दद्याच्च पात्रे प्रसमीक्ष्य कालम् ॥ ६२॥

धेनुं सवत्सां कपिलां भूरिशृङ्गीं
कांस्योपदोहां वसनोत्तरीयाम् ।
प्रदाय [1]तां गाहति दुर्विगाहां
याम्यां सभां वीतभयो मनुष्यः ॥ ६३॥

सुरूपा अनुरूपाश्च विश्वरूपाश्च मातरः ।
गावो मामुपतिष्ठन्ताम् इति नित्यं प्रकीर्तयेत् ॥ ६४॥

नातः पुण्यतरं दानं नातः पुण्यतरं फलम् ।
नातो विशिष्टं लोकेषु भूतं भवितुमर्हति ॥ ६५॥

त्वचा लोम्नाऽथ शृङ्गैश्च वालैः क्षीरेण मेदसा ।
यज्ञं वहन्ति सम्भूय किमस्त्यभ्यधिकं ततः ॥ ६६॥

यया सर्वमिदं व्याप्तं जगत् स्थावरजङ्गमम् ।
तां धेनुं शिरसा वन्दे भूतभव्यस्य मातरम् ॥ ६७॥

---

1. क-ब—तां गां हरिपृष्ठगाढाम्

गुणवचनसमुच्चयैकदेशो
नृवर मयैष गवां प्रकीर्तितस्ते ।
न हि परमिह दानमस्ति गोभ्यो
भवति न चापि परायणं ततोऽन्यत् ॥ ६८॥

भीष्मः—

वरमिदमिति भूमिपो विचिन्त्य
प्रवरमृषेर्वचनं ततो महात्मा ।
व्यसृजत नियतात्मवान् द्विजेभ्यस्
सुबहु स गोधनमाप्तवांश्च लोकान् ॥ ६९॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
[ अस्मिन्नध्याये ६९॥ श्लोकाः ]

---

## ॥ षट्षष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गवां तपःप्रसन्नाद् ब्रह्मणः शृङ्गप्राप्त्यादिकथनम् ॥ १ ॥ तथा गोदानप्राप्यपुण्यलोकवर्णनम् ॥ २ ॥

युधिष्ठिरः—

पवित्राणां पवित्रं यच्छ्रेष्ठं लोके च यद्भवेत् ।
पावनं परमं चैव तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

गावो महार्थाः पुण्याश्च तारयन्ति च मानवान् ।
धारयन्ति प्रजाश्चेमाः पयसा हविषा तथा ॥ २

न हि पुण्यतमं किञ्चिद् गोभ्यो भरतसत्तम ।
एताः पवित्रा पुण्याश्च त्रिषु लोकेष्वनुत्तमाः ॥ ३

देवानामुपरिष्टाच्च गावः प्रतिवसन्ति वै ।
दत्त्वा चैता नरपते यान्ति स्वर्गं मनीषिणः ॥ ४

मान्धाता यौवनाश्वश्च ययातिर्नहुषस्तथा ।
गा वै ददन्तस्सततं सहस्रशतसम्मिताः ॥ ५

गताः परमकं स्थानं देवैरपि सुदुर्लभम् ॥ ५॥

अपि चात्र पुरावृत्तम् कथयिष्यामि तेऽनघ ॥ ६

ऋषीणामुत्तमान् धर्मान् कृष्णद्वैपायनं शुकः ।

अभिवाद्याह्निकं कृत्वा शुचिः प्रयतमानसः ॥ ७
पितरं परिपप्रच्छ दृष्टलोकपरावरम् ॥ ७॥

शुकः—

को यज्ञस्सर्वयज्ञानां वरिष्ठ उपलक्ष्यते ।
किञ्च कृत्वा परं स्वर्गं प्राप्नुवन्ति मनीषिणः ॥ ८॥

केन देवाः पवित्रेण [1]स्वर्गमश्नन्ति वै प्रभो ।
किञ्च यज्ञस्य यज्ञत्वं क्व च यज्ञः प्रतिष्ठितः ॥ ९॥

दानानामुत्तमं किञ्च किञ्च सत्रमतः परम् ।
पवित्राणां पवित्रं च यत्तद् ब्रूहि महामुने ॥ १०॥

भीष्मः—

एतच्छ्रुत्वा तु वचनं व्यासः परमधर्मवित् ।
पुत्रायाकथयत् सर्वं तत्त्वेन भरतर्षभ ॥ ११॥

व्यासः—

गावः प्रतिष्ठा भूतानां तथा गावः परायणम् ।
गावः पुण्याः पवित्राश्च पावनं धर्मतस्तथा ॥ १२॥

पूर्वमासन्नशृङ्गा वै गाव इत्यनुशुश्रुम ।
शृङ्गार्थे समुपासन्त ताः कुलप्रभुमव्ययम् ॥ १३॥

ततो ब्रह्मा तु गास्सत्रम् उपविष्टास्समीक्ष्य ह ।

---

1. क-घ—स्वर्गं भुञ्जन्ति

ईप्सितं प्रददौ गोभ्यस् ताभ्यः प्रत्येकशः प्रभुः ॥ १४॥
तासां शृङ्गाण्यजायन्त यस्या यादृङ् मनोगतम् ।
नानावर्णाश्शृङ्गवत्यस् ता व्यरोचन्त पुत्रक ॥ १५॥
ब्रह्मणा वरदत्तास्ता हव्यकव्यप्रदाश्शुभाः ।
पुण्याः पवित्रास्सुभगा दिव्यसंस्कारलक्षणाः ॥ १६॥
गावस्तेजो महद्दिव्यं गवां दानं प्रशस्यते ॥ १७
ये वैतास्सम्प्रयच्छन्ति साधवो गतमत्सराः ।
ते वै सुकृतिनः प्रोक्तास् सर्वदानप्रदाश्च ते ॥ १८
गवां लोकं तथा पुण्यम् आप्नुवन्ति च तेऽनघ ॥ १८॥
यत्र वृक्षा मधुफला दिव्यपुष्पफलोपगाः ।
पुष्पाणि च सुगन्धीनि दिव्यानि द्विजसत्तम ॥ १९॥
सर्वा मणिमयी भूमिस् सूक्ष्मकाञ्चनवालुका ।
[1]सर्वत्र शुभसंस्पर्शा निष्पङ्का निरजाशुभा ॥ २०॥
रक्तोत्पलवनैश्चैव मणिदण्डैर्हिरण्मयैः ।
तरुणादित्यसङ्काशैर् भान्ति तत्र जलाशयाः ॥ २१॥
महार्हमणिपत्रैश्च काञ्चनोपमकेसरैः ।
नीलोत्पलविमिश्रैश्च सरांसि बहुपङ्कजैः ॥ २२॥
करवीरवनैः फुल्लैस् सहस्रावर्तसंवृतैः ।

1. क—अर्धपञ्चकं नास्ति

सन्तानक[1]वनैः फुल्लैर् वृक्षैश्च समलङ्कृताः ॥ २३॥
निर्मलाभिश्च मुक्ताभिर् मणिभिश्च महाधनैः ।
उद्भूतपुलिनास्तत्र जातरूपैश्च निम्नगाः ॥ २४॥
सर्वरत्नमयैश्चित्रैर् अवगाढा नगोत्तमैः ।
जातरूपमयैश्चान्यैर् हुताशनसमप्रभैः ॥ २५॥
सौवर्णा गिरयस्तत्र मणिरत्नशिलोच्चयाः ।
सर्वरत्नमयैर्भान्ति शृङ्गैश्चारुभिरुच्छ्रितैः ॥ २६॥
नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः ।
नित्यगन्धरसैः पुष्पैः फलैश्च मुनिसत्तम ॥ २७॥
रज्यन्ते पुण्यकर्माणस् तत्र नित्यं सुखान्विताः ।
सर्वकामसमृद्धाश्च निश्शोका गतमन्यवः ॥ २८॥
विमानेषु विचित्रेषु रमणीयेषु सत्तम ।
मोदन्तः पुण्यकर्माणो विहरन्ति यशस्विनः ॥ २९॥
उपक्रीडन्ति तान् ब्रह्मञ् शुभाश्चाप्सरसां गणाः ।
[2]एताँल्लोकानवाप्नोति गां दत्त्वा मुनिसत्तम ॥ ३०॥
यासामधिपतिः पूषा मारुतो बलवान् बले ।
ऐश्वर्ये वरुणो राजा ता मां पान्तु युगन्धराः ॥ ३१॥
अरूपा बहुरूपाश्च विश्वरूपाश्च मातरः ।

1. क-घ—फलैः पुष्पैः
2. क-ख—इमान्

प्राजापत्या इति ब्रह्मञ् जपेन्नित्यं यतव्रतः ॥ ३२॥

गास्तु शुश्रूषते यश्च समन्वेति च सर्वशः ।
तस्मै तुष्टाः प्रयच्छन्ति वरानपि च दुर्लभान् ॥ ३३॥

द्रुह्येन्न मनसा वाऽपि गोषु तास्सुसुखप्रदाः ।
अर्चयेत सदा चैव नमस्कारैश्च पूजयेत् ॥ ३४॥

दान्तः प्रीतमना नित्यं गवां तुष्टिं तथाऽश्नुते ।
[1]त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं पिबेत् पयः ॥ ३५॥

गवामुष्णं पयः पीत्वा त्र्यहमुष्णं घृतं पिबेत् ।
[2]त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो भवेत् त्र्यहम् ॥ ३६॥

[3]येन देवाः पवित्रेण भुञ्जते लोकमुत्तमम् ।
यत् पवित्रं पवित्राणां तद्घृतं शिरसा वहेत् ॥ ३७॥

घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतं प्राशेद् घृतं दद्याद् गवां पुष्टिं तथाऽश्नुते ॥ ३८॥

[4]निर्हृतैश्च यवैर्गोभिर् मासान् प्रसृतयावकः ।
ब्रह्महत्यासमं पापं सर्वमेतेन शुध्यति ॥ ३९॥

[5]पराभवार्थं दैत्यानां देवैश्शौचमिदं कृतम् ।
देवत्वमपि च प्राप्तास् संसिद्धाश्च महाबलाः ॥ ४०॥

---

1. क-घ—इदमर्धं नास्ति
2. क-घ—इदमर्धं नास्ति
3. अ—इदमर्धचतुष्टयं नास्ति
4. क-घ—इदमर्धं नास्ति
5. अ—पावनार्थं हि देहानां

गावः पुण्याः पवित्राश्च पावनं परमं महत् ।
अपि दत्त्वा द्विजातिभ्यो नरस्स्वर्गमुपाश्नुते ॥ ४१॥
गवां मध्ये शुचिर्भूत्वा गोमतीं मनसा जपेत् ।
पूताभिरद्भिराचम्य शुचिर्भवति निर्मलः ॥ ४२॥
अग्निमध्ये गवां मध्ये ब्राह्मणानां च संसदि ।
विद्यावेदव्रतस्नातान् ब्राह्मणान् पुण्यकर्मिणः ॥ ४३॥
अध्यापयति शिष्यान् वै गोमतीं यज्ञसम्मिताम् ।
त्रिरात्रोपोषितो भूत्वा गोमतीं लभते पराम् ॥ ४५॥
[1]पुत्रकामश्च लभते पुत्रं धनमथापि च ।
पतिकामा च भर्तारं सर्वकामांश्च मानवः ॥ ४५॥
गावस्तुष्टाः प्रयच्छन्ति सेविता वै न संशयः ॥ ४६
एवमुक्ता महाभागा यज्ञियास्सर्वकामदाः ।
रोहिण्य इति जानीहि नैताभ्यो विद्यते परम् ॥ ४७

भीष्मः—

इत्युक्तस्स महातेजाश् शुकपित्रा महात्मना ।
पूजयामास ता नित्यं तस्मात् त्वमपि पूजय ॥ ४८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
[ अस्मिन्नध्याये ४८ श्लोकाः ]

---

1. क—अर्धचतुष्टयं नास्ति

## ॥ सप्तषष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गोलोकस्य ब्रह्मलोकादप्युपरितनत्वे ब्रह्मणो वरदानस्य कारणत्वकथनम् ॥

युधिष्ठिरः—

सुराणामसुराणां च भूतानां च पितामह ।
प्रभुस्स्रष्टा च भगवान् मुनिभिस्स्तूयते [1]भुवि ॥ १

तस्योपरि कथं ह्येष लोकश्च स्थानतां गतः ।
संशयो मे महानेष तन्मे व्याख्यातुमर्हसि ॥ २

भीष्मः—

मनोवाग्बुद्धयस्तावद् एकस्थाः कुरुसत्तम ।
ततो मे शृणु कार्त्स्न्येन गो[2]माहात्म्यमनुत्तमम ॥ ३

पुण्यं यशस्यमायुष्यं तथा स्वस्त्ययनं महत् ।
कीर्तिर्विहरतां लोके गवां [3]यो गोषु भक्तिमान् ॥ ४

शुश्रूषते पुराणेषु महर्षीणां महात्मनाम् ।
संस्थाने सर्वलोकानां देवानां चापि सम्भवे ॥ ५

देवतार्थेऽमृतार्थे च यज्ञार्थे चैव भारत ।

1. क-घ—विभुः 2. अ-क—महाभाग्यमुत्तमम
3. क-घ—लोकेषु ख—योगेषु

सुरभिर्नाम विख्याता रोहिणी कामरूपिणी ॥ ६

सङ्कल्प्य मनसा पूर्वं रोहिणी ह्यमृतानना ।
घोरं तपस्समास्थाय निर्मिता विश्वकर्मणा ॥ ७

पुरुषं चासृजद्भूयस् तेजसा तपसा च ह ।
देदीप्यमानं वपुषा समिद्धमिव पावकम् ॥ ८

सोऽपश्य[1]द्दिष्टरूपां तां सुरभिं रोहिणीं तदा ।
दृष्ट्वैव चातिविमनास् सोऽभवत् काममोहितः ॥ ९

तं कामार्तमथो ज्ञात्वा स्वयम्भूर्लोकभावनः ।
माऽऽर्तो भव तथा चैष भगवानभ्यभाषत ॥ १०

ततस्स भगवांस्तत्र मार्ताण्ड इति विश्रुतः ।
चकार नाम तं दृष्ट्वा तस्यार्तीभावमुत्तमम् ॥ ११

स ददौ भगवांस्तस्मै मार्ताण्डाय महात्मने ।
सुरूपां सुरभिं कन्यां तपस्तेजोमयीं शुभाम् ॥ १२

यथा मयैष चोद्भूतस् त्वं चैवैषा च रोहिणी ।
मैथुनं गतवन्तौ च [2]तथा चोत्पत्स्यति प्रजा ॥ १३

प्रजा भविष्यते पुण्या पवित्रं परमं च वाम् ।
न वाऽप्यगम्यागमनाद् दोषं प्राप्स्यसि कर्हिचित् ॥ १४

---

1. क-घ—द्दिव्य    ख—दिष्ट
2. क-घ—तथा वां धास्यति प्रजा

त्वत्प्रजासम्भवं क्षीरं भविष्यति परं हविः ।
यज्ञेषु चाज्यभागानां त्वत्प्रजामूलजो विधिः ॥ १५

प्रजाशुश्रूषवश्चैव ये भविष्यन्ति रोहिणि ।
तव तेनैव पुण्येन गोलोकं यान्तु मानवाः ॥ १६

इदं पवित्रं परमम् ऋषभं नाम कर्हिचित् ।
यद्वै ज्ञात्वा द्विजा लोके मोक्ष्यन्ते योनिसङ्करात् ॥ १७

एतत् क्रियाः प्रपत्स्यन्ते मन्त्रब्राह्मणसंस्कृताः ।
देवतानां पितॄणां च हव्यकव्यपुरोगमाः ॥ १८

तत एतेन पुण्येन प्रजास्तव तु रोहिणि ।
ऊर्ध्वं ममापि लोकस्य वत्स्यन्ते निरुपद्रवाः ॥ १९

भद्रं तेभ्यश्च भद्रं ते ये प्रजासु भवन्ति वै ।
युगन्धराश्च ते पुत्रास् सन्तु लोकस्य धारणे ॥ २०

यान् यान् कामयसे लोकांस् ताँल्लोकाननुयास्यसि ।
सर्वदेवगणाश्चैव तव यास्यन्ति पुत्रताम् ॥ २१

तव स्तनसमुद्भूतं पिबन्तोऽमृतमुत्तमम् ॥ २१॥

एवमेतान् वरान् राजन्नगृह्णात् सुरभिस्तदा ।
ब्रुवतस्सर्वलोकेशान्निर्वृतिं चागमत् पराम् ॥ २२॥

सृष्ट्वा प्रजाश्च [1]विविधा लोकसन्धारणाय वै ।

1. अ-क—विपुला

ब्रह्मणा समनुज्ञाता सुरभिर्लोकमाविशत् ॥ २३॥
एवं वरप्रदानेन स्वयम्भोरेव भारत ।
उपरिष्टाद्गवां लोकः प्रोक्तस्ते सर्वमादितः ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
[ अस्मिन्नध्याये २४॥ श्लोकाः ]

## ॥ अष्टषष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति विस्तरेण गवोत्पत्तिप्रकारकथनम् ॥

युधिष्ठिरः—

[1]सुरभेः काः प्रजाः पूर्वं मार्ताण्डादभवन् पुरा ।
एतन्मे शंस तत्त्वेन गोषु मे प्रीयते मनः ॥ १

भीष्मः—

शृणु नामानि दिव्यानि गोमातॄणां विशेषतः ।
याभिर्व्याप्ता स्त्रयो लोकाः कल्याणीभिर्जनाधिप ॥ २
सुरभ्यः प्रथमोद्भूता याश्च स्युः प्रथमाः प्रजाः ।
मयोच्यमानाश्शृणु ताः प्राप्स्यसे विपुलं यशः ॥ ३

1. क-घ—सुभगाः

तप्त्वा तपो घोरतपास् सुरभिर्दीप्ततेजसः ।
सुषावैकादश सुतान् रुद्रा ये च्छन्द[1]सि स्तुताः ॥ ४

अजैकपादहिर्बुध्न्यस् त्र्यम्बकश्च महातपाः ।
वृषाकपिश्च शम्भुश्च कपाली रैवतस्तथा ॥ ५

हरश्च बहुरूपश्च उग्र उग्रोऽथ वीर्यवान् ।
तस्य चैवात्मजश्श्रीमान् विश्वरूपो महायशाः ॥ ६

एकादशैते कथिता रुद्रास्ते नाम नामतः ।
महात्मानो महायोगास् तेजोयुक्ता महाबलाः ॥ ७

एते वरिष्ठजन्मानो देवानां ब्रह्मवादिनाम ।
विप्राणां प्रकृतिर्लोके एत एव हि विश्रुताः ॥ ८

एत एकादश प्रोक्ता रुद्रास्त्रिभुवनेश्वराः ।
शतं त्वेतत् समाख्यातं शतरुद्रं महात्मनाम् ॥ ९

सुषुवे प्रथमां कन्यां सुरभिः पृथिवीं तदा ।
विश्वकामदुघा धेनुर् या धारयति देहिनः ॥ १०

सुतं गोब्राह्मणं राजन्नेकमित्यभिधीयते ।
गोब्राह्मणस्य जननी सुरभिः परिकीर्त्यते ॥ ११

सृष्ट्वा तु प्रथमं रुद्रान् वरदान् रुद्रसम्भवान् ।
पश्चात् प्रभुर्ग्रहपतिं सुषुवे लोकसम्मतम् ॥ १२

1. क-ब—सा स्थिताः

सोमराजानममृतं यज्ञसर्वस्वमुत्तमम् ।
ओषधीनां रसानां च देवानां जीवितस्य च ॥ १३
ततश्श्रियं च मेधां च कीर्तिं देवीं सरस्वतीम् ।
चतस्रस्सुषुवे कन्या योगेषु नियतास्स्थिताः ॥ १४
एतास्सृष्ट्वा प्रजा एषा सुरभिः कामरूपिणी ।
सुषुवे परमं भूयो दिव्या गोमातरश्शुभाः ॥ १५
[1]पुण्यां मायां मधुश्च्योतां शिवां शीघ्रां सरिद्वराम् ।
हिरण्यवर्णां सुभगां गव्यां पृश्नीं कुथावतीम् ॥ १६
अङ्गावतीं घृतवतीं दधिक्षीरपयोवतीम् ।
अमोघां सुरसां सत्यां रेवतीं मारुतीं रसाम् ॥ १७
अजां च सिकतां चैव शुद्धधूमामधारिणीम् ।
जीवां प्राणवतीं धन्यां शुद्धां धेनुं घनावहाम् ॥ १८
इन्द्रामृद्धिं च शान्तिं च शान्तपापां सरिद्वराम् ।
चत्वारिंश[2]तिमेकां च धन्यास्ता दिवि पूजिताः ॥ १९
भूयो जज्ञे सुरभ्याश्च श्रीमांश्चन्द्रांशुसन्निभः ।
[3]वृषो दक्ष इति ख्यातः कण्ठे मणितलप्रभः ॥ २०
स्रग्वी ककुद्मान् द्युतिमान मृणालसदृशप्रभः ।
सुरभ्याऽनुमतो दत्तो ध्वजो माहेश्वरस्तु सः ॥ २१

---

1. क-ख—पुण्यामम्बां　घ—पुण्यामम्बां मधुरुताम्
2. क-घ—तिरेताश्च　3. क-घ—भुवि

सुरभ्यः कामरूपिण्यो गावः पुण्यार्थमुत्तमाः ।
आदित्येभ्यो वसुभ्यश्च विश्वेभ्यश्च ददौ वरान् ॥ २२

सुरभिस्तु तपस्तप्त्वा सुषुवे गास्ततः पुनः ।
या दत्ता लोकपालानाम् इन्द्रादीनां युधिष्ठिर ॥ २३

सुदृतां कपिलां चैव रोहिणीं च यशस्विनीम् ।
सर्वकामदुघां चैव मरुतां कामरूपिणीम् ॥ २४

गावो मृष्टदुघा ह्येतास् ताश्चतस्रोऽमृतस्तुताः ।
यासां भूत्वा पुरा वत्साः पिबन्त्यमृतमुत्तमम् ॥ २५

सुदृतां देवराजाय वासवाय महात्मने ।
कपिलां धर्मराजाय वरुणाय च रोहिणीम् ॥ २६

सर्वकामदुघां धेनुं राज्ञे वैश्रवणाय च ।
इत्येता लोकमहिता विश्रुतास्सुरभेः प्रजाः ॥ २७

एतासां प्रजया पूर्णा पृथिवी मुनिपुङ्गव ।
गोभ्यः प्रभवते सर्वं यत् किञ्चिदिह शोभनम् ॥ २८

सुरभ्यपत्यमित्येतन्नामतस्तेऽनुपूर्वशः ।
कीर्तितं ब्रूहि राजेन्द्र किं भूयः कथयामि ते ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
[ अस्मिन्नध्याये २९ श्लोकाः ]

## ॥ एकोनसप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति इन्द्रस्य वत्सभावेन सुरभ्याः क्षीरपानादमरत्वादिलाभकथनम् ॥ १ ॥ तथा इन्द्रादिदेवानां वासार्थं सुरभेरनुमत्या तदीयमुखाद्यवयवसमाश्रयणकथनम् ॥ २ ॥

---

युधिष्ठिरः—

सुरभ्यास्तु तदा देव्याः कीर्तिर्लक्ष्मीस्सरस्वती ।
मेधा च प्रवरा देवी याश्चतस्रोऽथ विश्रुताः ॥ १

पृथग् [1]गोभ्यः किमेतास्स्युर् उताहो गोषु संश्रिताः ।
देवाः के वाऽऽश्रिता गोषु तन्मे ब्रूहि पितामह ॥ २

भीष्मः—

यं देवं संश्रिता गावस् तं देवं देवसंश्रितम् ।
यद्यद्देवाश्रितं दैवं तत्तद्दैवं द्विजा विदुः ॥ ३

सर्वेषामेव देवानां पूर्वं किल समुद्भवे ।
अमृतार्थे सुरपतिस् सुरभिं समुपस्थितः ॥ ४

इन्द्रः—

इच्छेयममृतं दत्तं त्वया देवि रसाधिकम् ।
त्वत्प्रसादाच्छिवं मह्यम् अमरत्वं भवेदिति ॥ ५

---

1. क-घ—पृथक् ताभ्यः

सुरभिः—

वत्सो भूत्वा सुरपते पिबस्व प्रस्नवं मम ।
ततोऽमरत्वमपि तत् स्थानमैन्द्रमवाप्स्यसि ॥ ६

न च ते वृत्रहन् युद्धे व्यथाऽरिभ्यो भविष्यति ।
बलार्थमात्मनश्शक्र प्रस्नवं पिब मे विभो ॥ ७

भीष्मः—

[1]ततोऽपिबत् स्तनं तस्यास् सुरभ्यास्सुरसत्तमः ।
अमरत्वं सुरूपत्वं बलं चापदनुत्तमम् ॥ ८

पुरन्दरोऽमृतं पीत्वा प्रहृष्टस्समुपस्थितः ।
पुत्रोऽहं तव भद्रं ते ब्रूहि किं करवाणि ते ॥ ९

सुरभिः—

कृतं पुत्र त्वया सर्वम् उपयाहि त्रिविष्टपम् ।
पालयस्व सुरान् सर्वाञ् जहि ये सुरशत्रवः ॥ १०

न च गोब्राह्मणेऽवज्ञा कार्या ते शान्तिमिच्छता ।
गोब्राह्मणस्य निश्वासश् शोषयेदपि देवताः ॥ ११

गोब्राह्मणप्रियो नित्यं स्वस्तिशब्दमुदाहरन् ।
पृथिव्यामन्तरिक्षे च नाकपृष्ठे च विक्रमे ॥ १२

यच्च तेऽन्यद्भवेत् कृत्यं तन्मे ब्रूयास्समासतः ।
तत्ते सर्वं करिष्यामि सत्येनैतद्ब्रवीमि ते ॥ १३

---

1. ख—ततोऽधयत्

इन्द्रः—

इच्छेयं गोषु नियतं वस्तुं देवि ब्रवीमि ते ।
एभिस्सुरगणैस्सार्धम् ममानुग्रहमाचर ॥ १४

सुरभिः—

गवां शरीरं प्रत्यक्षम् एतत् कौशिक लक्ष्यये ।
यो यत्रोत्सहते वस्तुं स तत्र वसतां सुरः ॥ १५

सर्वं पवित्रं परमं गवां गात्रं सुपूजितम् ।
तथा कुरुष्व भद्रं ते यथा त्वं शक्र मन्यसे ॥ १६

भीष्मः—

तस्यास्तद्वचनं श्रुत्वा सुरभ्यास्सुरसत्तमः ।
सह सर्वैस्सुरगणैर् अभजत् सौरभीं प्रजाम् ॥ १७

शृङ्गे वक्त्रे च जिह्वायां देवराजस्समाविशत् ।
सर्वच्छिद्रेषु पवनः पादेषु मरुतां गणाः ॥ १८

[1]ककुदं सर्वगो रुद्रः कुक्षौ चैव हुताशनः ।
सरस्वती स्तनेष्वग्र्या श्रीः पुरीषे जगत्प्रिया ॥ १९

मूत्रे कीर्तिस्सुमहती मेधा पयसि शाश्वती ।
[2]कण्ठे सोमस्तु वै देवो हृदये भगवान् यमः ॥ २०

धर्मः पुच्छे क्रिया लोम्नि भास्करश्चक्षुषी श्रितः ।

---

1. क-घ—ककुदे सर्वतो रुद्रो वामकुक्षौ
2. अ-ख—वक्त्रे  क—कर्णे

सिद्धास्सन्धिषु सिद्धिश्च तपस्तेजश्च चेष्टने ॥ २१

एवं सर्वे सुरगणा नियता गात्रवर्त्मसु ।
महती देवता गावो ब्राह्मणैः परिसंस्कृताः ॥ २२

गामाश्रयन्ति सहिता देवा हि प्रभविष्णवः ।
किमन्यत् सर्वकामेन विदध्याद्भगवान् प्रियम् ॥ २३

भावतः परया भक्त्या पूजयस्व नरेश्वर ।
गावस्तु परमं लोके पवित्रं पावनं हविः ॥ २४

निपात्य भक्षितस्स्वर्गाद् भार्गवः फेनपः किल ।
स च प्राणान् पुनर्लब्ध्वा ततो लोकं समाश्रितः ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
[ अस्मिन्नध्याये २५ श्लोकाः ]

---

## ॥ सप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति फेनपोपाख्यानकथनारम्भः ॥ १ ॥ त्रिशिखरगिर्याश्रमवासिने सुमित्रनाम्ने विप्रवराय आङ्गिरसेनैकस्या गोर्दानम् ॥ २ ॥ तस्या वंशेऽसङ्ख्येयानां गवां सम्भवः ॥ ३ ॥ सुमित्रेण वत्समुखोद्गतक्षीरफेनपानात् फेनप इति नामाधिगमः ॥ ४ ॥ फेनपस्य गोभिः कदाचन गोलोकादेत्य गिरिह्रदे स्त्रीरूपधारणेन विहरमाणानां गवामवलोकनम् ॥ ५ ॥ फेनपस्य गोभिस्स्वेषां गोलोकप्राप्त्युपायं पृष्टाभिस्ताभिस्ताः प्रति रन्तिदेवस्य सत्रे आत्मनां पशुत्वोपकल्पनस्य तदुपायत्वोक्तिः ॥ ६ ॥ फेनपस्य स्वेष्वतिवत्सलतया यागीयपशुत्वे तदभ्यनुज्ञानस्य दुस्सम्पादतां चिन्तयन्तीषु तासु कपिलाभिस्ताभ्यः स्वेषामेव गोषु श्रैष्ठ्यप्राप्तिरूपवराधिगमेन फेनपवधप्रतिज्ञानम् ॥ ७ ॥ फेनपस्य गोभक्त्युद्रेकसन्तुष्टाभिर्गोलोकादागतगोमातृभिः योगप्रभावेण शरीराद्वियोजनेन स्वलोकप्रापणपूर्वकं तस्मिन्कपिलानिश्चयनिवेदनम् ॥ ८ ॥ ततः कपिलाभिर्यथाप्रतिज्ञं शृङ्गाघातादिना फेनपस्य कुणपशरीरविभेदनम् ॥ ९ ॥ फेनपस्य गोभी रन्तिदेवं प्रति तत्सत्रे स्वेषां पशुत्वेन विनियोगप्रार्थना ॥ १० ॥ तेन गवां मध्ये कस्याश्चिदपि सकामत्वज्ञाने सत्रविरामरूपसमयकरणेन सत्रारम्भः ॥ ११ ॥ कदाचन कस्याश्चिद्गोर्वत्सस्नेहाद्विशसने दुःखावगमेन यागोपरमः ॥ १२ ॥

---

युधिष्ठिरः—

कः फेनपेति नाम्नाऽसौ कथं वा भक्षितः पुरा ।
मृत उज्जीवितः कस्मात् कथं गोलोकमाश्रितः ॥ १
विरुद्धो मानुषे लोके तथा समयवर्त्मसु ।

ऋते दैवं हि दुष्प्रापं मानुषेषु विशेषतः ॥ २
संशयो मे महानत्र तन्मे व्याख्यातुमर्हसि ॥ २॥

भीष्मः—

श्रूयते भार्गवे वंशे सुमित्रो नाम भारत ।
वेदाध्ययनसम्पन्नो विपुले तपसि स्थितः ॥ ३॥

वानप्रस्थाश्रमे युक्तस् स्वकर्मनिरतस्सदा ।
विनयाचारतत्त्वज्ञस् सर्वधर्मार्थकोविदः ॥ ४॥

नित्यं त्रिषवणस्नायी सन्ध्योपासनतत्परः ।
अग्निहोत्ररतः क्षान्तो जपञ् जुह्वच्च नित्यदा ॥ ५॥

पितृदेवांश्च नियतम् अतिथींश्च स पूजयन् ।
प्राणसन्धारणार्थं च यत् किञ्चिदुपहारयन् ॥ ६॥

गिरिस्त्रिशिखरो नाम यतः प्रभवते नदी ।
कूलहेति पुराणेषु विश्रुता रुद्रनिर्मिता ॥ ७॥

तस्यास्तीरे समे देशे पुष्प[1]मालासमाकुले ।
वन्यौषधिद्रुमोपेते नानापक्षिमृगायुते ॥ ८॥

व्यपेतदंशमशके ध्वाङ्क्षगृ[2]ध्रैरसेविते ।
कृष्णदर्भतृणप्राये सुरम्यज्योतिरश्मिनि ॥ ९॥

सर्वोन्नतैस्समैश्श्यामैर् याज्ञीयैस्तरुभिर्वृते ।

1. क-ब—मूल 2. क-ब—ध्रोपसे

तत्राश्रमपदं पुण्यं भृगूणामभवत् पुरा ॥ १०॥

उवास तत्र नियतस् सुमित्रो नाम भार्गवः ।
यथोद्दिष्टेन पूर्वेषां भृगूणां साधुवर्त्मना ॥ ११॥

तस्मा आङ्गिरसः कश्चिद् ददौ गां शर्करीं शुभाम् ।
वर्षासु पश्चिमे मासि पौर्णमास्यां शुचिव्रतः ॥ १२॥

स तां लब्ध्वा धर्मशी[1]लश् चिन्तयामास तत्परः ।
सुमित्रः परया भक्त्या जननीमिव मातरम् ॥ १३॥

तेन सन्धुक्ष्यमाणा सा रोहिणी कामचारिणी ।
प्रवृद्धिमगमच्छ्रेष्ठा प्राणतश्च सुदर्शना ॥ १४॥

सिराविमुक्तपार्श्वान्ता विपुलां कान्तिमुद्वहत् ।
श्यामपार्श्वान्तपृष्ठा सा सुरभिर्मधुपिङ्गला ॥ १५॥

बृहती सूक्ष्मलोमान्ता रूपोदग्रा तनुत्वचा ।
कृष्णपुच्छा श्वेतवक्त्रा समवृत्तपयोधरा ॥ १६॥

पृष्ठोन्नता पूर्वनता शङ्कुकर्णी सुलोचना ।
दीर्घजिह्वा ह्रस्वशृङ्गी सम्पूर्णदशनान्तरा ॥ १७॥

मांसाधिकगलान्ता सा प्रसन्ना शुभदर्शना ।
नित्यं शमयुता स्निग्धा सम्पूर्णोदात्तनिस्वना ॥ १८॥

प्राजापत्यैर्गवां नित्यं प्रशान्तैर्लक्षणैर्युता ।

---

1. क-घ—लो वर्धया

यौवनस्थेव वनिता शुशुभे रूपशोभया ॥ १९॥
वृषेणोपगता सा तु कला मधुरशोभना ।
मिथुनं जनयामास तुल्यरूपमिवात्मनः ॥ २०॥
संवर्धयामास स तां सवत्सां भार्गवो ऋषिः ।
तयोः प्रजाधिसंसर्गात् सहस्रं च गवामभूत् ॥ २१॥
गवां [1]जातिसहस्राणि सम्भूतानि परस्परम् ।
ऋषभाणां च राजेन्द्र नैवान्तं प्रतिदृश्यते ॥ २२॥
तैराश्रमपदं रम्यम् अरण्यं चैव सर्वशः ।
समाकुलं समभवन्मेघैरिव नभस्थलम् ॥ २३॥
कानिचित् पद्मवर्णानि किंशुकाभानि कानिचित् ।
रुक्मवर्णानि चान्यानि चन्द्रांशुसदृशानि च ॥ २४॥
तथा राजतवर्णानि कानिचिल्लोहितानि वै ।
नीललोहितताम्राणि कृष्णानि कपिलानि च ॥ २५॥
नानारागविचित्राणि यूथानि कुलयूथप ॥ २६
न च क्षीरं सुतस्नेहाद् वत्सानामुपजीवति ।
भार्गवः केवलं चासीद् गवां प्राणायने रतः ॥ २७
तथा शुश्रूषतस्तस्य गवां हितमवेक्षतः ।
व्यतीयात् सुमहान् कालो वत्सोच्छिष्टेन वर्ततः ॥ २८

1. क—शतस

क्षुत्पिपासापरिश्रान्तस् सततं प्रस्रवं गवाम् ।
वत्सैरुच्छिष्टमुदितं बहुक्षीरतया बहु ॥ २९

पीतवांस्तेन नामाऽस्य फेनपेत्यभिविश्रुतम् ॥ २९॥

[1]गौतमस्याभिनिष्पन्नम् एवं नाम युधिष्ठिर* ॥ ३०

कदाचित् कामरूपिण्यो गावस्त्रीवेषमाश्रिताः ।
ह्रदे क्रीडन्ति संहृष्टा गायन्त्यः पुण्यलक्षणाः ॥ ३१

ददृशुस्तस्य गावो वै विस्मयोत्फुल्ललोचनाः ।
ऊचुश्च का यूयमिति स्त्रियो मानुषया गिरा ॥ ३२

स्त्रियः—

[2]गाव एव वयं सर्वाः कर्मभिश्शोभनैर्युताः ।
सर्वास्स्त्रीवेषधारिण्यो यथाकामं चरामहे ॥ ३३

गावः—

गवां गावः परं दैवं गवां गावः परा गतिः ।
कथयध्वमिहास्माकं केन वस्सुकृतां गतिः ॥ ३४

स्त्रियः—

अस्माकं हविषा देवा ब्राह्मणास्तर्पितास्तथा ।
कव्येन पितरश्चैव हव्येनाग्निश्च तर्पितः ॥ ३५

---

1. अ—भार्गवस्या

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

2. क-घ—इदमर्धचतुष्टयं नास्ति

प्रजया च तथाऽस्माकं कृषिरभ्युद्धृता सदा ।
शकटैश्चापि संयुक्ता दशवाहशतेन वै ॥ ३६

[1]तदेतैस्सुकृतैस्स्फीतैर् वयं याश्चैव नः प्रजाः ।
गोलोकमनुसम्प्राप्ता [2]यः परं कामगोचरः ॥ ३७

यूयं तु सर्वरोहिण्यस् सप्रजास्सहपुङ्गवाः ।
अधोगामिन्य इत्येव पश्यामो दिव्यचक्षुषा ॥ ३८

गावः—

एवं गवां परं दैवं गाव एव परायणम् ।
स्वपक्षास्तारणीया वश् शरणाय गता वयम् ॥ ३९

किमस्माभिः करणीयं वर्तितव्यं कथञ्चन ।
प्राप्नुयाम च गोलोकं भवाम न च गर्हिताः ॥ ४०

स्त्रियः—

[3]वर्तते रन्तिदेवस्य सत्रं वर्षसहस्रकम् ।
तत्र तस्य नृपस्याशु पशुत्वमुपगच्छत ॥ ४१

ततस्तस्योपभोगेन पशुत्वे यज्ञसंस्कृताः ।
गोलोकान् प्राप्स्यथ शुभांस् तेन पुण्येन संयुताः ॥ ४२

भीष्मः—

एतत् तासां वचश्श्रुत्वा गवां संहृष्टमानसाः ।

---

1. क-घ—शक्ताश्चापि तथा युक्ता
2. क-घ—पुण्यो यः ख—यः परः कामगोचरः
3. क—पवित्रं वासुदेवस्य घ—पवित्रं

गमनाय मनश्चक्रुर् औत्सुक्यं चागमन् परम् ॥ ४३
न हि नो भार्गवो दाता पशुत्वेनोपयोजनम् ।
यज्ञस्तस्य नरेन्द्रस्य वर्तते धर्मतस्तथा ॥ ४४
वयं न चाननुज्ञाताश् शक्ता गन्तुं कथञ्चन ।
अवोचन्नथ तत्रत्या भार्गवो वध्यतामयम् ॥ ४५
एतत् सर्वा रोचयत न हि शक्यमतोऽन्यथा ।
लोकान् प्राप्तुं सहास्माभिर् निश्चयः क्रियतामयम् ॥ ४६
न तु तासां समेतानां काचिद् घोरेण चक्षुषा ।
शक्नोति भार्गवं द्रष्टुं सत्कृतेनोपसंयुता ॥ ४७
अथ पद्मसवर्णाभा [1]भास्करेण समप्रभाः ।
जपालोहितताम्राक्ष्यो निर्मांसकठिनाननाः ॥ ४८
रोहिण्यः कपिलाः प्राहुस् सर्वासां वै समक्षतः ।
मेघस्तनितनिर्घोषास् तेजोभिरभिरञ्जिताः ॥ ४९

कपिलाः—

वयं हि तं वधिष्यामस् सुमित्रं नात्र संशयः ।
सुकृतं [2]पृष्ठतः कृत्वा किं नश्श्रेयो विधास्यथ ॥ ५०

गावः—

कपिलास्सर्ववर्णेषु प्रधानत्वमवाप्स्यथ ।
गवां शतफलां चैकां दत्त्वा फलमवाप्स्यथ ॥ ५१

---

1. क-घ—भास्वरांशु 2. क-घ—पूर्वतः

भीष्मः—

एतद्रवां वचश्श्रुत्वा कपिला हृष्टमानसाः ।
चक्रुस्सर्वा भार्गवस्य सुमित्रस्य वधे मतिम्* ॥ ५२

यास्तु गोमातरस्तस्य कामचारिण्य आगताः ।
समीपं हि सुमित्रस्य कृतज्ञास्समपस्थिताः ॥ ५३

अभिप्रशस्य चैवाहुस् तमृषिं पुण्यदर्शनाः ॥ ५३॥

गोमातरः—

गोलोकादागता वेत्थ ऋषे गोमातरो वयम् ॥ ५४

सुप्रीतास्स्म वरं गृह्ण यमिच्छसि महामुने ।
यद्धि गोषु परां बुद्धिं कृतवानसि नित्यदा ॥ ५५

सुमित्रः—

प्रीतोऽस्म्यनुगृहीतोऽस्मि यन्मां गोमातरश्शुभाः ।
सुप्रीतमनसस्सर्वास् तिष्ठन्ते च वरप्रदाः ॥ ५६

भवेद् गोष्वेव मे भक्तिर् यथैवाद्य तथा सदा ।
गोघ्नाश्चैवावसीदन्तु नरा ब्रह्मद्विषश्च ये ॥ ५७

गोमातरः—

एवमेतद् ऋषिश्रेष्ठ हितं वदसि नः प्रियम् ।
एहि गच्छ सहास्माभिर् गोलोकमृषिसत्तम ॥ ५८

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

सुमित्रः—

यूयमिष्टां गतिं यान्तु न ह्यहं गन्तुमुत्सहे ।
इमा गावस्समुत्सृज्य तपस्विन्यो मम प्रियाः ॥ ५९

भीष्मः—

तास्तु तस्य वचश्श्रुत्वा कपिलानां सुदारुणम् ।
निन्युस्तमृपिमुत्क्षिप्य भार्गवं नभ उद्वहन् ॥ ६०

कलेबरं तु तत्रैव तस्य संन्यस्य मातरः ।
निष्कृष्य करणं योगाद् आनयन् भार्गवस्य वै ॥ ६१

सर्वं चास्य तदाऽऽचख्युः कपिलानां विचेष्टितम् ।
यदर्थं हरणं गोभिर् गोलोकं लोकमातरः ॥ ६२

ततस्तु कपिलास्तत्र तस्य दृष्ट्वा कलेबरम् ।
यथाप्रतिज्ञं शृङ्गैश्च खुरैश्चाप्यवचूर्णयन् ॥ ६३

ततस्सञ्छिद्य बहुधा भार्गवं नृपसत्तम ।
ययुर्यत्रेतरा गावस् तच्च सर्वं न्यवेदयन् ॥ ६४

अथ गोमातृभिश्शप्तास् ता गावः पृथिवीचराः ।
अमेध्यवदनाः क्षिप्रं भवध्वं ब्रह्मघातकाः ॥ ६५

एवं कृतज्ञा गावो हि यथा गोमातरो नृप ।
ऋषिश्च प्राप्तवाँल्लोकं गावश्च परिमोक्षिताः* ॥ ६६

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

ता गावो रन्तिदेवस्य गत्वा यज्ञं मनीषिणः ।
आत्मानं ज्ञापयामासुर् महर्षीणां समक्षतः ॥ ६७

रन्तिदेवस्ततो राजा प्रयतः प्राञ्जलिश्शुचिः ।
उवाच गावः प्रणतः किमागमनमित्यपि ॥ ६८

गावः—

इच्छाम तव राजेन्द्र सत्रेऽस्मिन् विनियोजनम् ।
पशुत्वमुपसम्प्राप्तुं प्रसादं कर्तुमर्हसि ॥ ६९

रन्तिदेवः—

नास्मि शक्तो गवां घातं कर्तुं शतसहस्रशः ।
घातयित्वा त्वहं युष्मान् कथमात्मानमुद्धरे ॥ ७०

यः पशुत्वेन संयोज्य युष्मान् स्वर्गं नयेदिह ।
आत्मानं चैव तपसा गावस्समुपगम्यताम् ॥ ७१

गावः—

अस्माकं तारणे युक्तो धर्मात्मा तपसि स्थितः ।
श्रुतोऽस्माभिर्भवान् राजंस् ततस्तु स्वयमागताः ॥ ७२

रन्तिदेवः—

मम सत्रे पशुत्वं वो यद्येवं हि मनीषितम् ।
समयेनाहमेतेन जुहुयां वो हुताशने ॥ ७३

कदाचिद्यदि वः काचिद् अकामा विनियुज्यते ।
तदा समाप्तिस्सत्रस्य गवां स्यादिति नैष्ठिकी ॥ ७४

गावः—

एवमस्तु महाराज यथा त्वं प्रब्रवीषि नः ।
अकामास्स्युर्यदा गावस् तदा सत्रं समाप्यताम् ॥ ७५

भीष्मः—

ततः प्रवृत्ते गोसत्रे रन्तिदेवस्य धीमतः ।
गोसहस्राण्यहरहर् नियुज्यन्ते शमितृभिः ॥ ७६

एवं बहूनि वर्षाणि व्यतीतानि नराधिप ।
गवां वै वध्यमानानां न चान्तः प्रत्यदृश्यत ॥ ७७

गवां चर्मसहस्रैस्तु राशयः पर्वतोपमाः ।
बभूवुः कुरुशार्दूल बहुला मेघसन्निभाः ॥ ७८

मेदःक्लेदवहा चैव प्रावर्तत महानदी ।
अद्यापि भुवि विख्याता नदी चर्मण्वती शुभा ॥ ७९

ततः कदाचित् स्वं वत्सं गौरुपामन्त्र्य दुःखिता ॥ ७९॥

गौः—

एहि पुत्र स्तनं पाहि मा त्वं पश्चात् क्षुधार्दितः ।
तप्स्यसे विमना दुःखं घातितायां मयि ध्रुवम् ॥ ८०॥

एते ह्यायान्ति चण्डालास् सशस्त्रा मां जिघांसवः ॥ ८१

भीष्मः—

अथ शुश्राव तां वाणीम् मानुषीं समुदाहृताम् ।
रन्तिदेवो महाराज ततस्तां समवारयत् ॥ ८२

स्थापयामास गोसत्रम् अथ तं पार्थिवर्षभ ।
सत्रोत्सृष्टाः परित्यक्ता गावोऽन्यास्समुपाश्रिताः ॥ ८३

यास्तस्य राज्ञो निहता गावो यज्ञे महात्मनः ।
ता गोलोकमुपाजग्मुः प्रोक्षिता ब्रह्मवादिभिः ॥ ८४

रन्तिदेवोऽपि राजर्षिर् इष्ट्वा यज्ञं यथाविधि ।
ततस्सख्यं सुरपतेस् त्रिदिवं चाक्षयं ययौ ॥ ८५

वैशम्पायनः—

फेनपो दिवि गोलोके मुमुदे शाश्वतीस्समाः ।
अविशिष्टाश्च या गावस् ता बभूवुर्वनेचराः ॥ ८६

फेनपाख्यानमेतत्ते गवां माहात्म्यमेव च ।
कथितं पावनं पुण्यं कृष्णद्वैपायनेरितम् ॥ ८७

नारायणोऽपि भगवान् दृष्ट्वा गोषु परं यशः ।
शुश्रूषां परमां चक्रे भक्तिं च भरतर्षभ ॥ ८८

तस्मात् त्वमपि राजेन्द्र गा वै पूजय भारत ।
द्विजेभ्यश्चैव सततं प्रयच्छ कुरुसत्तम ॥ ८९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥
[ अस्मिन्नध्याये ८९ श्लोकाः ]

---

## ॥ एकसप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गोमाहात्म्यप्रतिपादकव्यासशुकसंवादानुवादः ॥ १ ॥ व्यासेन शुकं प्रति ब्राह्मणेतरवर्णानां कपिलाक्षीरोपजीवनार्हत्वादिकथनम् ॥ २ ॥ व्यासेन शुकं प्रति कपिलानां गवांस्वाङ्गप्रवेशनेन देवेभ्यः प्रच्छन्नमात्मनोगोपनात् परितुष्टस्याग्नेर्वरात् सर्वश्रैष्ठ्यप्राप्तिकथनम् ॥ ३ ॥ व्यासेन शुकं प्रति कपिलालक्षणविभागादिकथनम् ॥ ४ ॥

युधिष्ठिरः—

पवित्राणां पवित्रं यच्छ्रेष्ठं लोकेषु पूजितम् ।
महाव्रतं महाभाग तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
[1]पितुः पुत्रस्य संवादं व्यासस्य च शुकस्य च ॥ २

ऋषीणामुत्तमं कृष्णं भावितात्मानमच्युतम् ।
पारम्पर्यविशेषज्ञं सर्वशास्त्रार्थकोविदम् ॥ ३

कृतशौचश्शुकस्तत्र कृतजप्यः कृताह्निकः ।
परं नियममास्थाय परं धर्ममुपाश्रितः ॥ ४

प्रणम्य शिरसा व्यासं सूक्ष्मतत्वार्थदर्शिनम् ।
शुकः पप्रच्छ वै प्रश्नं दानधर्मकुतूहलः ॥ ५

1. क-घ—पितापु

शुकः—

बहुचित्राणि दानानि बहुशश्शंससे मुने ।
महार्थं पावनं पुण्यं किंस्विद्दानं महाफलम् ॥ ६
केन दुर्गाणि तरति केन लोकानवाप्नुते ।
केन वा महदाप्नोति इह लोके परत्र च ॥ ७
के वा यज्ञस्य वोढारः केषु यज्ञः प्रतिष्ठितः ।
किञ्च यज्ञस्य यज्ञत्वं किञ्च यज्ञस्य भेषजम् ॥ ८
यज्ञानामुत्तमं किञ्च तद्भवान् प्रब्रवीतु मे ॥ ८॥

भीष्मः—

स तस्मै भजमानाय जातकौतूहलाय च ।
व्यासो व्रतनिधिः प्राह गवामिदमनुत्तमम् ॥ ९॥

व्यासः—

धन्यं यशस्यमायुष्यं लोके श्रुतिसुखावहम् ।
यत् पवित्रं पवित्राणां मङ्गलानां च मङ्गलम् ॥ १०॥
सर्वपापप्रशमनं तत् समासेन मे शृणु ॥ ११
यदिदं तिष्ठते लोके जगत् स्थावरजङ्गमम् ।
गावस्ताः प्राप्य तिष्ठन्ते लोके पुण्यस्य दर्शनात् ॥ १२
मातरस्सर्वभूतानां विश्वस्य जगतश्च ह ॥ १२॥
रुद्राणामथ साध्यानां गाव एव तु मातरः ॥ १३
रुद्राणां मातरो ह्येता ह्यादित्यानां स्वसा स्मृताः ।

वसूनां च दुहितृयस्ता ब्रह्मसन्तानमूलजाः ॥ १४
[1]यासामधिपतिः पूषा मरुतो वालबन्धनः ।
ऐश्वर्यं वरुणो राजा विश्वे देवास्समाश्रिताः ॥ १५
य एवं वेद ता गावो [2]मातरो देवपूजिताः ।
स विप्रो ब्रह्मलोकाय गवां लोकाय वा ध्रुवः ॥ १६
गावस्तु नावमन्येत कर्मणा मनसा गिरा ।
गवां स्थानं परं लोके प्रार्थयेद्यः परां गतिम् ॥ १७
न पद्भ्यां ताडयेद्वा वै न दण्डेन न मुष्टिना ॥ १७॥
इमां विद्यामुपाश्रित्य पावनीं ब्रह्मनिर्मिताम् ।
मातृणाम [3]नुपातेन न गोमध्ये न गोव्रजे ॥ १८॥
[4]नरो मूत्रपुरीषस्य दृष्ट्वा कुर्याद्विसर्जनम् ॥ १९
शुद्धाश्चन्दनशीताढ्यास् चन्द्ररश्मिसमप्रभाः ।
सौम्यास्सुरभ्यस्सुभगा गावो गुग्गुलुगन्धयः ॥ २०
सर्वे देवा विशन् गावस् समुद्रमिव सिन्धवः ।
दिवं चैवान्तरिक्षं च गवां व्युष्टिं समश्नुते ॥ २१
[5]दधिना जुहुयादग्निं दधिना स्वस्ति वाचयेत् ।
दधि दद्याच्च प्राशेत गवां व्युष्टिं समश्नुते ॥ २२

1. क-घ—इदमर्धं नास्ति  2. क—इतः अष्टौ पादा न सन्ति
3. क-घ—नुयाने च  ख—नुपाते च
4. घ—न गो  5. क—अर्धचतुष्टयं नास्ति

[1]घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतमालभ्य प्राश्नीयाद् गवां व्युष्टिं समश्नुते ॥ २३

गावस्सञ्जीवना यास्तु गावो दानमनुत्तमम् ।
ताः पुण्यगोपास्सुफला भजमानं भजन्तु माम् ॥ २४

येन देवाः पवित्रेण स्वर्गलोकमितो गताः ।
तत् पवित्रं पवित्राणां मम मूर्ध्नि प्रतिष्ठितम् ॥ २५

वीणामृदङ्गपणवा गवां मन्त्रप्रतिष्ठिताः ।
क्रीडारतिविहारार्थे त्रिषु लोकेषु वर्तते ॥ २६

न तत्र देवा वर्तन्ते नाग्निहोत्राणि जुह्वति ।
न यज्ञैरिज्यते चात्र यत्र गौर्वै न दुह्यते ॥ २७

क्षीरं दधि घृतं यासां रसानामुत्तमो रसः ।
अमृत[2]प्रभवा गावस् त्रैलोक्यं येन जीवति ॥ २८

इडामाहूय धेनुं च सवत्सां यज्ञमातरम् ।
उपाह्वयन्ति [3]यं यज्ञे गावो यज्ञहविष्कृताः ॥ २९

या मेध्या प्रथमं कर्म इयं धेनुस्सरस्वती ।
पौर्णमासेन वत्सेन कामं कामगुणान्विता ॥ ३०

यत्र सर्वमिदं प्रोतं यत् किञ्चिज्जङ्गमं जगत् ।

---

1. क—अर्धद्वयं नास्ति
2. क-घ—प्रसवानां वै
3. ख-ब—यं विप्रा

सा गौर्वै प्रथमा पुण्या सर्वभूतहिते रता ॥ ३१

धारणाः पावनाः पुण्या भावना भूतभावनाः ।
गावो मामभिरक्षन्तु इह लोके परत्र च ॥ ३२

एष यज्ञस्सहोपाङ्ग एष यज्ञस्सनातनः ।
वेदास्सहोपनिषदो गवां रूपाः प्रतिष्ठिताः ॥ ३३

एतत्तात मया प्रोक्तं गवामिह परं मतम् ।
सर्वमाश्रावयेन्नित्यं प्रयतो ब्रह्मसंसदि ॥ ३४

श्रुत्वा लभेत तान् [1]सर्वान् ये मया परिकीर्तिताः ।
श्रावयित्वाऽपि प्रीतात्मा लोकांस्तान् प्रतिपद्यते ॥ ३५

धेनुमेकां समादद्याद् अहन्यहनि पावनीम् ।
तत्तथा प्राप्नुयाद्विप्रः पठन् वै गोमतीं सदा ॥ ३६

अथ धेनुर्न विद्येत तिलधेनुमनुत्तमाम् ।
दद्याद्धोमतिकल्पेन तां धेनुं सर्वपावनीम् ॥ ३७

आह्निकं गोमतीं नित्यं यः पठेत सदा नरः ।
सर्वपापात् प्रमुच्येत प्रयतात्मा य आचरेत् ॥ ३८

घृतं वा [2]दधि वा नित्यं प्राश्य वा गोमतीं जपेत् ।
स्नात्वा वा गोकरीषेण पठन् पापात् प्रमुच्यते ॥ ३९

---

1. क-घ—लोकान्
2. क-ख-घ—नित्यमालभ्य

मनसा गोमतीं जप्येद् गोमत्या नित्यमाह्निकम् ।
न त्वेव दिवसं कुर्याद् व्यर्थं गोमतिपाठकः ॥ ४०

गोमतीं जपमाना हि देवा देवत्वमाप्नुवन् ।
ऋषित्वमृषयश्चापि गोमत्या सर्वमाप्नुवन् ॥ ४१

बद्धो बन्धात् प्रमुच्येत कृच्छ्रान्मुच्येत सङ्कटात् ।
गोमतीं सेवते यस्तु लभेत प्रियसङ्गमम् ॥ ४२

भीष्मः—

एतत् पवित्रं कात्स्न्येंन एतद्व्रतनुत्तमम् ।
एतत्तु पृथिवीपाल पावनं शृण्वतां सदा ॥ ४३

पुत्रकामाश्च ये केचिद् धनकामाश्च मानवाः ।
अध्वाने चोरवैरिभ्यो मुच्यते गोमतीं पठन् ॥ ४४

पूर्ववैरानुबन्धेषु रणे चाप्याततायिनः ।
लभेत जयमेवाशु सदा गोमतिपाठकः* ॥ ४५

शुकः—

क्षत्रियाश्चैव शूद्राश्च मन्त्रहीनाश्च ये द्विजाः ।
[1]कपिलामुपजीवन्ति कथमेतत् पितर्भवेत् ॥ ४६

व्यासः—

क्षत्रियाश्चैव शूद्राश्च मन्त्रहीनाश्च ये द्विजाः ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. ख—अर्धद्वयं नास्ति

कपिलामुपजीवन्ति तेषां वक्ष्यामि निर्णयम् ॥ ४७

कपिलास्तूत्तमा लोके गोषु चैवोत्तमा मताः ।
तासां दाता लभेत् स्वर्गं विधिना यश्च सेवते ॥ ४८

स्पृशेत कपिलां यस्तु दण्डेन चरणेन वा ।
तेन स्पर्शनमात्रेण नरकायोपपद्यते ॥ ४९

मन्त्रेण युञ्ज्यात् कपिलां मन्त्रेणैव प्रमुञ्चते ।
मन्त्रहीनं तु यो युञ्ज्यात् कृमियोनौ हि जायते ॥ ५०

प्रहारहतमर्माङ्गा दुःखेन च जडीकृता ।
पदानि यावद्गच्छेत तावल्लोकान् क्रिमिर्भवेत् ॥ ५१

यावच्च बिन्दवस्तस्याश् शोणितस्य क्षितिं गताः ।
तावद्वर्षसहस्राणि नरकं प्रतिपद्यते ॥ ५२

मन्त्रेण युञ्ज्यात् कपिलां मन्त्रेण विनियोजयेत् ।
मन्त्रहीनैरनुयुतो मज्जयेत्तमसि प्रभो ॥ ५३

कपिलां येऽपि जीवन्ति बुद्धिमोहान्विता नराः ।
तेऽपि वर्षसहस्राणि पतन्ति नरके नृप ॥ ५४

अथ न्यायेन ये विप्राः कपिलामुपयुञ्जते ।
तस्मिँल्लोके प्रमोदन्ते लोकाश्चैषामनामयाः ॥ ५५

विधिना ये न कुर्वन्ति शूद्रांस्तानुपधारय* ॥ ५५॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

शुकः—

नानावर्णैरुपेतानां गवां किं मुनिसत्तम ।
कपिलास्सर्ववर्णेषु वरिष्ठत्वमवाप्नुवन् ॥ ५६॥

व्यासः—

शृणु पुत्र यथा गोषु वरिष्ठाः कपिलास्स्मृताः ।
कपिलत्वं च सम्प्राप्ताः पूज्याश्च सततं नृषु ॥ ५७॥

अग्निः पुराऽपचक्राम देवेभ्य इति नश्श्रुतम् ।
देवेभ्यो मां छादयत शरण्याश्शरणं गतम् ॥ ५८॥

ऊचुस्तास्सहितास्तत्र स्वागतं तव पावक ।
इह गुप्तस्त्वमस्माभिर् न देवैरुपलप्स्यसे ॥ ५९॥

अथ देवा विवित्सन्तः पावकं परिचक्रमुः ।
गोषु गुप्तं च विज्ञाय ताः क्षिप्रमुपतस्थिरे ॥ ६०॥

युष्मासु निवसत्यग्निर् इति गास्समचूचुदन् ।
[1]प्रकाश्यतां हुतवहो लोकान्न च्छेत्तुमर्हथ ॥ ६१॥

एवमस्त्वित्यनुज्ञाय पावकं समदर्शयन् ॥ ६२

अधिगम्य पावकं तुष्टास् ते देवास्सद्य एव तु ।
अग्निं प्रचोदयामासुः क्रियतां गोष्वनुग्रहः ॥ ६३

गवां तु यासां गात्रेषु पावकस्समवस्थितः ।

---

1. क-घ—अर्धपञ्चकं नास्ति

कपिलत्वमनुप्राप्तास् सर्वश्रेष्ठत्वमेव च ॥ ६४

महाफलत्वं लोके च ददौ तासां हुताशनः ॥ ६४॥

तस्माद्धि सर्ववर्णानां कपिलां गां प्रदापय ।

श्रोत्रियाय प्रशान्ताय प्रयतायाग्निहोत्रिणे ॥ ६५॥

यावन्ति रोमाणि भवन्ति धेन्वा
युगानि तावन्ति पुनाति दातॄन् ।
प्रतिग्रहीतॄंश्च पुनाति दत्ता
शिष्टे तु गौर्वै प्रतिपादनेन* ॥ ६६॥

शुकः—

केन वर्णविभागेन विज्ञेया कपिला भवेत् ।

कति वा लक्षणान्यस्य दृष्टानि मुनिभिः पुरा ॥ ६७॥

व्यासः—

शृणु तात यथा गोषु विज्ञेया कपिला भवेत् ॥ ६८

नेत्रयोश्शृङ्गयोश्चैव खुरेषु वृषणेषु च ।

कर्णतो घ्राणतश्चापि षड्विधाः कपिलास्स्मृताः ॥ ६९

एतेषां लक्षणानां तु यद्येकमपि दृश्यते ।

कपिलां तां विजानीयाद् एवमाहुर्मनीषिणः ॥ ७०

आग्नेयी नेत्रकपिला खुरैर्माहेश्वरी भवेत् ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

ग्रीवायां वैष्णवी ज्ञेया पूष्णो घ्राणादजायत ॥ ७१

[1]वर्णतस्तु वसन्तेन स्वयोनिमभिजायते ।
गायत्र्याश्च वृषणयोर् उत्पत्तिष्षड्गुणा स्मृता ॥ ७२

एवं गावश्च विप्राश्च गायत्री सत्यमेव च ।
वसन्तश्च सुपर्णश्च एकतस्समजायत ॥ ७३

नेत्रयोः कपिलां यस्तु वाहयेत दुहेत वा ।
स पापकर्मा नरकं प्रतिष्ठां प्रतिपद्यते ॥ ७४

नरकाद्विप्रमुक्तस्तु तिर्यग्योनिं निषेवते ।
यदा लभेत मानुष्यं जात्यन्धो जायते नरः ॥ ७५

शृङ्गयोः कपिलां यस्तु वाहयेत दुहेत वा ।
तिर्यग्योनिं स लभते जायमानः पुनः पुनः ॥ ७६

खुरेषु कपिलां यस्तु वाहयेत दुहेत वा ।
तमस्यपारे मज्जेत धनहीनो नराधमः ॥ ७७

कपिलां वालधानेषु वाहयेत दुहेत वा ।
निराश्रयस्सदा चैव जायते यदि चेत् क्रिमिः ॥ ७८

कर्णेन कपिलां यस्तु जानन्नप्युपजीवति ।
सहस्रशः क्रिमिर्भूत्वा मानुष्यं प्राप्नुयादथ ॥ ७९
चण्डालः पापयोनिश्च जायते स नराधमः ॥ ७९॥

---

1. क-घ—अकृतस्तु

घ्राणेन कपिलां यस्तु प्रमादादुपजीवति ।
सोऽपि वर्षसहस्राणि तिर्यग्योनौ प्रजायते ॥ ८०॥
व्याधिग्रस्तो जडो रोगी भवेन्मानुष्यमागतः ॥ ८१
मधुसर्पिस्सुगन्धास्तु कपिलाश्शाश्वतस्स्मृताः ।
एतास्समुपजीवेत सोऽपि तिर्यक्षु जायते ॥ ८२
स्थावरत्वमनुप्राप्तो यदि मानुष्यतां लभेत् ।
अल्पायुस्स भवेज्जातो हीनवर्णकुलोद्भवः ॥ ८३
ये तु पापा ह्यसूयन्ते कपिलां वाहयन्ति च ।
निरयेषु प्रतिष्ठन्ते यावदाभूतसम्प्लवम् ॥ ८४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
[ अस्मिन्नध्याये ८४ श्लोकाः ]

---

## ॥ द्विसप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति श्रियो बलात्कारेण स्वप्रार्थनया गोमूत्रपुरीषयोर्निवासस्य कथनम् ॥ १ ॥ गोश्रीसंवादानुवादः ॥ २ ॥

युधिष्ठिरः—

मया गवां पुरीषं हि श्रिया जुष्टमिति श्रुतम् ।
एतदिच्छाम्यहं श्रोतुं संशयोऽत्र हि मे महान् ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
गोभिर्नृपेह संवादं श्रिया भरतसत्तम ॥ २

श्रीः कृत्वेह वपुः कान्तं गोमध्यं प्रविवेश ह ।
गावोऽथ विस्मितास्तस्या दृष्ट्वा रूपस्य सम्पदम् ॥ ३

गावः—

काऽसि देवि कुतो वा त्वं रूपेणाप्रतिमा भुवि ।
विस्मितास्स्म महाभागे तव रूपस्य सम्पदा ॥ ४

इच्छामस्त्वां वयं ज्ञातुं का त्वं क्व च गमिष्यसि ।
तत्त्वेन हि सुवर्णाभे सर्वमेतद्ब्रवीहि नः ॥ ५

श्रीः—

लोकस्य कान्तिर्भद्रं वश्र् श्रीर्नामेह परिश्रुता ।

मया [1]दैत्याः परित्यक्ता विनष्टाश्शाश्वतीस्समाः ॥ ६
इन्द्रो विवस्वान् सोमश्च विष्णुरापोऽग्निरेव च ।
मयाऽभिपन्ना दीप्यन्ते ऋषयो देवतास्तथा ॥ ७
यांश्च द्विषाम्यहं गावस् ते विनश्यन्ति सर्वशः ।
धर्मार्थकामहीनाश्च ते भवन्त्यसुखान्विताः ॥ ८
एवम्प्रभावां मां गावो विजानीत सुखप्रदाम् ॥ ८॥
इच्छेयं चापि युष्मासु वस्तुं सर्वासु नित्यदा ।
आगता प्रार्थयानाऽहं श्रीजुष्टा भवतानघाः ॥ ९॥

गावः—

अध्रुवा चपला च त्वं सामान्या बहुभिस्सह ।
न त्वामिच्छाम भद्रं ते गम्यतां यत्र रोचते ॥ १०॥
वपुष्मन्त्यो वयं सर्वाः किमस्माकं त्वयाऽद्य वै ।
यथेष्टं गम्यतां तत्र कृतकार्या वयं त्वया ॥ ११॥

श्रीः—

किमेतद्वः क्षमं गावो यन्मां नेहाभिनन्दथ ।
न मां सम्प्रतिगृह्णीत कस्माद्वै दुर्लभां सतीम् ॥ १२॥
सत्यश्च लोकवादोऽयं लोके चरति सुव्रताः ।
स्वयं प्राप्ते परिभवो भवतीति विनिश्चयः ॥ १३॥

---

1. क-ब—देवा

## ॥ द्विसप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति श्रियो बलात्कारेण स्वप्रार्थनया गोमूत्रपुरीषयोर्निवासस्य कथनम् ॥ १ ॥ गोश्रीसंवादानुवादः ॥ २ ॥

युधिष्ठिरः—

मया गवां पुरीषं हि श्रिया जुष्टमिति श्रुतम् ।
एतदिच्छाम्यहं श्रोतुं संशयोऽत्र हि मे महान् ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
गोभिर्नृपेह संवादं श्रिया भरतसत्तम ॥ २

श्रीः कृत्वेह वपुः कान्तं गोमध्यं प्रविवेश ह ।
गावोऽथ विस्मितास्तस्या दृष्ट्वा रूपस्य सम्पदम् ॥ ३

गावः—

काऽसि देवि कुतो वा त्वं रूपेणाप्रतिमा भुवि ।
विस्मितास्स्म महाभागे तव रूपस्य सम्पदा ॥ ४

इच्छामस्त्वां वयं ज्ञातुं का त्वं क्व च गमिष्यसि ।
तत्त्वेन हि सुवर्णाभे सर्वमेतद्ब्रवीहि नः ॥ ५

श्रीः—

लोकस्य कान्तिर्भद्रं वश्र् श्रीर्नामेह परिश्रुता ।

मया [1]दैत्याः परित्यक्ता विनष्टाश्शाश्वतीस्समाः ॥ ६
इन्द्रो विवस्वान् सोमश्च विष्णुरापोऽग्निरेव च ।
मयाऽभिपन्ना दीप्यन्ते ऋषयो देवतास्तथा ॥ ७
यांश्च द्विषाम्यहं गावस् ते विनश्यन्ति सर्वशः ।
धर्मार्थकामहीनाश्च ते भवन्त्यसुखान्विताः ॥ ८
एवम्प्रभावां मां गावो विजानीत सुखप्रदाम् ॥ ८॥
इच्छेयं चापि युष्मासु वस्तुं सर्वासु नित्यदा ।
आगता प्रार्थयानाऽहं श्रीजुष्टा भवतानघाः ॥ ९॥

गावः—

अध्रुवा चपला च त्वं सामान्या बहुभिस्सह ।
न त्वामिच्छाम भद्रं ते गम्यतां यत्र रोचते ॥ १०॥
वपुष्मन्त्यो वयं सर्वाः किमस्माकं त्वयाऽद्य वै ।
यथेष्टं गम्यतां तत्र कृतकार्या वयं त्वया ॥ ११॥

श्रीः—

किमेतद्वः क्षमं गावो यन्मां नेहाभिनन्दथ ।
न मां सम्प्रतिगृह्णीत कस्माद्वै दुर्लभां सतीम् ॥ १२॥
सत्यश्च लोकवादोऽयं लोके चरति सुव्रताः ।
स्वयं प्राप्ते परिभवो भवतीति विनिश्चयः ॥ १३॥

1. क-ख—देवा

महदुग्रं तपः कृत्वा मां निषेवन्ति मानवाः ।
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ॥ १४॥

क्षममेतद्धि वो गावः प्रतिगृह्णीत मामिह ।
नावमन्या ह्यहं सौम्यास् त्रैलोक्ये सचराचरे ॥ १५॥

गावः—

नावमन्यामहे देवि न त्वां परिभवामहे ।
[1]अध्रुवा चलचित्ताऽसि ततस्त्वां वर्जयामहे ॥ १६॥

बहुनाऽत्र किमुक्तेन गम्यतां यत्र वाञ्छसि ।
वपुष्मन्त्यो वयं सर्वाः किमस्माकं त्वयाऽनघे ॥ १७॥

श्रीः—

अवज्ञाता भविष्यामि सर्वलोकेषु मानवैः ।
प्रत्याख्यातेति युष्माभिः प्रसादः क्रियतामिति ॥ १८॥

महाभागा भवत्यो वै शरण्याश्शरणागताम् ।
परित्रायन्तु मां नित्यं भजमानामनिन्दिताम् ॥ १९॥

मानयित्वाऽहमिच्छामि भवत्यस्सततं शुभाः ।
सुप्रीताऽङ्गेषु वो वस्तुम् इच्छामीह न कुत्सिते ॥ २०॥

न वोऽस्ति कुत्सितं किञ्चिद् अङ्गेष्वालक्ष्यतेऽनघाः ।
पुण्याः पवित्रास्सुभगा अवाग्देशं प्रयच्छत ॥ २१॥

---

1. क-घ—इदमर्धं नास्ति

वसेयं यत्र वो देहे तन्मे व्याख्यातुमर्हथ ॥ २२

भीष्मः—

एवमुक्तास्तु ता गावश् शुभाः करुणवत्सलाः ।
सम्मान्य सहितास्सर्वाश् श्रियमूचुर्नराधिप ॥ २३

गावः—

अवश्यं मानना कार्या तवास्माभिर्यशस्विनि ।
शकृन्मूत्रे निवसतां पुण्यमेतद्धि नश्शुभे ॥ २४

[1]श्रीः—

दिष्ट्या प्रसादो युष्माभिः कृतो मेऽनुग्रहात्मकः ।
एवं भवतु भद्रं वः पूजिताऽस्मि सुखप्रदाः ॥ २५

भीष्मः—

एवं कृत्वा तु समयं श्रीर्गोभिस्सह भारत ।
पश्यन्तीनां ततस्तासां तत्रैवान्तरधीयत ॥ २६

एवं गोशकृतः पुत्र माहात्म्यं तेऽनुवर्णितम् ।
माहात्म्यं च गवां भूयश् श्रूयतां गदतो मम ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
[ अस्मिन्नध्याये २७ श्लोकाः ]

---

भीष्मः—

1. घ—एवमुक्तास्तु ता गावश्शुभास्तरुणवत्सलाः ।  [ अधिकः पाठः ]

## ॥ त्रिसप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गोलोकस्य देवलोकादप्युपरितनत्वे निमित्त-प्रतिपादकब्रह्मशक्रसंवादानुवादः ॥

भीष्मः—

ये च गास्सम्प्रयच्छन्ति हुतशिष्टाशनाश्च ये ।
तेषां सत्राणि यज्ञाश्च नित्यमेव युधिष्ठिर ॥ १

ऋते दधिघृतेनेह न यज्ञस्सम्प्रवर्तते ।
तेन यज्ञस्य यज्ञत्वम् अतो मूलं च लक्ष्यते ॥ २

[1]दानानामपि सर्वेषां गवां दानं प्रशस्यते ।
गावश्श्रेष्ठाः पवित्राश्च पावनं परमं तथा ॥ ३

पुष्ट्यर्थमेतास्सेवेत शान्त्यर्थमपि चैव ह ।
पयो दधि घृतं तासां सर्वपापप्रमोचनम् ॥ ४

गावस्तेजः परं प्रोक्तम् इह लोके परत्र च ।
न गोभ्यः परमं किञ्चित् पवित्रं भरतर्षभ ॥ ५

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
पितामहस्य संवादम् इन्द्रस्य च युधिष्ठिर ॥ ६

पराभूतेषु दैत्येषु शक्रस्त्रिभुवनेश्वरः ।

1. ख—देवानामपि

प्रजास्समुदितास्सर्वास् सत्यधर्मपरायणाः ॥ ७

अथर्षयस्सगन्धर्वाः किन्नरोरगराक्षसाः ।
देवासुरसुपर्णाश्च प्रजानां पतयस्तथा ॥ ८

पर्युपासन्त कौरव्य कदाचिद्वै पितामहम् ॥ ८॥

नारदः पर्वतश्चैव विश्वावसुर्हहाहुहू ।
दिव्यगानेन गायन्तः पर्युपासत तं प्रभुम् ॥ ९॥

तत्र दिव्यानि पुष्पाणि प्रावहत् पवनस्तदा ।
आजह्रुश्चर्तवश्चापि सुगन्धीनि पृथक् पृथक् ॥ १०॥

तस्मिन् देवसमावापे सर्वभूतसमागमे ।
दिव्यवादित्रसङ्घुष्टे दिव्यस्त्रीचारणान्विते ॥ ११॥

इन्द्रः पप्रच्छ देवेशम् अभिवाद्य प्रणम्य च ॥ १२

इन्द्रः—

देवानां भगवन् कस्माल् लोकेशानां पितामह ।
उपरिष्टाद्गवां लोक एतदिच्छामि वेदितुम् ॥ १३

किं तपो ब्रह्मचर्यं वा गोभिः कृतमिहेश्वर ।
देवानामुपरिष्टाद्यद् वसन्त्यरजसस्सुखम् ॥ १४

भीष्मः—

ततः प्रोवाच तं ब्रह्मा शक्रं बलनिषूदनम् ॥ १४॥

ब्रह्मा—

अवज्ञातास्त्वया नित्यं गावो बलनिषूदन ।
तेन त्वमासां माहात्म्यं न वेत्थ शृणु तत् प्रभो ॥ १५॥
गवां प्रभावं परमं माहात्म्यं च सुरर्षभ ॥ १६
यज्ञाङ्गं कथिता गावो यज्ञ एव च वासव ।
एताभिश्चाप्यते यज्ञो न प्रवर्तेत् कथञ्चन ॥ १७
धारयन्ति प्रजा[1]श्चैताः पयसा हविषा तथा ।
एतासां तनयाश्चापि कृषियोगमुपासते ॥ १८
जनयन्ति च धान्यानि बीजानि च धनानि च ।
ततो यज्ञाः प्रवर्तन्ते हव्यं कव्यं च सर्वशः ॥ १९
पयो दधि घृतं चैव पुण्याश्चैतास्सुराधिप ।
हरन्ति विविधान् भोगान् क्षुत्तृष्णापरिपीडितान् ॥ २०
[2]मुनींश्च धारयन्तीह प्रजाश्चैव तु कर्मणा ।
वासवाकूटवाहिन्यः कर्मणा सुकृतेन च ॥ २१
उपरिष्टात् ततोऽस्माकं वसन्त्येतास्सदैव हि ।
एतत् ते कारणं शक्र निवासकृतमद्य वै ॥ २२
गावो देवोपरिष्टाद्धि समाख्याताश्शतक्रतो ।
एता हि [3]वरदत्ताश्च वरदाश्चैव वासव ॥ २३

1. क-घ—श्चेष्टाः 2. क-घ—अग्नींश्च
3. अ—वरदाश्चैव वरदत्ता हि वासव

सौरभ्यः पुण्यकर्मिण्यः पावनाश्शुभलक्षणाः ॥ २३॥

यदर्थं गां गताश्चैव सुरभ्यस्सुरसत्तम ।
तच्च मे शृणु कात्स्न्र्येन वदतो बलसूदन ॥ २४॥

पुरा देवयुगे तात दैत्येन्द्रेषु महात्मसु ।
त्रीँल्लोकाननुशासत्सु विष्णौ गर्भत्वमागते ॥ २५॥

अदित्यां तप्यमानायां तपो घोरं सुदुश्चरम् ।
पुत्रार्थममरश्रेष्ठ पादेनैकेन नित्यदा ॥ २६॥

तां दृष्ट्वा महतीं देवीं तप्यमानां महत्तपः ।
दक्षस्य दुहिता देवी सुरभिर्नाम नामतः ॥ २७॥

अतप्यत तपो घोरं हृष्टा धर्मपरायणा ॥ २८

कैलासशिखरे रम्ये देवगन्धर्वसेविते ।
व्यतिष्ठदेकपादेन [1]परं योगमुपस्थिता ॥ २९

दशवर्षसहस्राणि दशवर्षशतानि च ।
सन्तप्तास्तपसा तस्या देवास्सर्षिपुरोगमाः ॥ ३०

तत्र गत्वा मया सार्धं प्रत्युपासत तां शुभाम् ।
अथाहमब्रवं तत्र देवीं तां तपसाऽन्विताम् ॥ ३१

किमर्थं तप्यसे देवि तपो घोरमनिन्दिते ।
प्रीतस्तेऽहं महाभागे तपसा तव शोभने ॥ ३२

---

1. अ-ख—परमं योगमास्थिता

वरयस्व वरं देवि दातास्मीति पुरन्दर ॥ ३२॥

सुरभिः—

वरेण भगवन् मेऽद्य कृतं लोकपितामह ।
एष एव वरो मेऽद्य यत् प्रीतोऽसि ममानघ ॥ ३३॥

ब्रह्मा—

तामेवं ब्रुवतीं देवीं सुरभिं त्रिदशेश्वर ।
प्रत्यब्रवं यद्देवेन्द्र तन्निबोध शचीपते ॥ ३४॥

अलोभकाम्यया देवि तपसा शुचिना च ते ।
प्रसन्नोऽहं वरं तस्माद् अमरत्वं ददामि ते ॥ ३५॥

त्रयाणामपि लोकानाम् उपरिष्टान्निवत्स्यसि ।
मत्प्रसादाच्च विख्यातो गोलोकस्सम्भविष्यति ॥ ३६॥

मानुष्येषु च कुर्वाणाः प्रजाः कर्म सुतास्तव ।
निवत्स्यन्ति महाभागे सर्वा दुहितरश्च ते ॥ ३७॥

मनसा चिन्तिता भोगास् त्वया दिव्याश्च मानुषाः ।
यच्च स्वर्गसुखं देवि तत्ते सम्पत्स्यते शुभे ॥ ३८॥

तस्या लोकास्सहस्राक्ष सर्वकामसमन्विताः ।
न तत्र क्रमते मृत्युर् न च कालो न [1]पावकः ॥ ३९॥

न दैन्यं नाशुभं किञ्चिद् विद्यते तत्र वासव ॥ ४०

1. अ-ख—पातकम्

तत्र दिव्यान्यरण्यानि दिव्यानि भवनानि च ।
विमानानि च युक्तानि कामगानि च वासव ॥ ४१
व्रतैश्च विविधैः पुण्यैस् तथा तीर्थानुसेवनात् ।
तपसा महता चैव सुकृतेन च कर्मणा ॥ ४२
शक्यस्समासादयितुं गोलोकः पुष्करेक्षण ॥ ४२॥
एतत् ते सर्वमाख्यातं मया शक्राभिपृच्छते ।
न ते परिभवः कार्यो गवामरिनिषूदन ॥ ४३॥

भीष्मः—

एतच्छ्रुत्वा सहस्राक्षः पूजयामास नित्यदा ।
गाश्चक्रे बहुमानं च तासु नित्यं युधिष्ठिर ॥ ४४॥
एतत् ते सर्वमाख्यातं पावनं च महाद्युते ।
पवित्रं परमं चापि गवां माहात्म्यमुत्तमम् ॥ ४५॥
कीर्तितं पुरुषव्याघ्र सर्वपापविनाशनम् ॥ ४६
य इदं कथयेन्नित्यं ब्राह्मणेभ्यस्समाहितः ।
हव्यकव्येषु यज्ञेषु पितृकार्येषु चैव ह ॥ ४७
सार्वकामिकमक्षय्यं पितॄंस्तस्योपगच्छति ॥ ४७॥
गोषु भक्तिं च लभते यद्यदिच्छति मानवः ।
स्त्रियोऽपि भक्ता या गोषु ताश्च कामानवाप्नुयुः ॥ ४८॥
पुत्रार्थी लभते पुत्रं कन्या पतिमवाप्नुयात् ।

विद्यार्थी प्राप्नुयाद्विद्यां सुखार्थी प्राप्नुयात् सुखम् ॥ ४९॥
न किञ्चिद् दुर्लभं चैव गवां भक्तस्य भारत ॥ ५०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
[ अस्मिन्नध्याये ५० श्लोकाः ]

## ॥ चतुस्सप्ततितमोऽध्यायः ॥

युधिष्ठिरेण सुवर्णोत्पत्तिप्रकारं पृष्टेन भीष्मेण तत्प्रतिपादकवसिष्ठपरशुरामसंवादानुवादारम्भः ॥ १ ॥ भवस्य भवान्या सह रतियोगे तद्वीर्यभीरुभिर्देवैः प्रार्थितेन देवेन वीर्यस्योर्ध्वनिरोधने प्रजोच्छेदकुपितया देव्या देवानामनपत्यत्वशापदानम् ॥ २ ॥ तारकासुरबाधितैर्देवैर्ब्रह्माणं प्रति स्वेषां पार्वतीशापेनानपत्यत्वकथनपूर्वकमसुरवधोपायकथनप्रार्थना ॥ ३ ॥ ब्रह्मणा देवान्प्रति अग्नेरसंनिहितत्वेन देवीशापाविषयतया देवेन स्ववीर्यनिरोधकाले भुवि प्रस्कन्नकिंचिद्वीर्यांशस्य तस्मिन्संसृष्टतया च तेन गङ्गायां कुमारोत्पादनकथनेनाग्न्यन्वेषणचोदना ॥ ४ ॥ अग्निना देवानां प्रार्थनया गङ्गायां स्वयंसृष्टरुद्रवीर्याधानम् ॥ ५ ॥ गङ्गायाऽग्निना स्वस्मिन्नाहितगर्भस्य मेरुगिरौ समुत्सर्जने तदीयतेजोव्याप्तयावद्वस्तूनां काञ्चनीभावप्राप्तिः ॥ ६ ॥ एवं भीष्मेण सुवर्णोत्पत्तिप्रकारकथनम् ॥ ७ ॥ वसिष्ठेन परशुरामं प्रति सुवर्णप्रभावकथनप्रसङ्गेन रुद्रयज्ञे भृग्वङ्गिरःप्रभृतिप्रभावादिकथनम् ॥ ८ ॥

युधिष्ठिरः—
उक्तं पितामहेनेदं गवां दानमनुत्तमम् ।
विशेषेण नरेन्द्राणाम् इति धर्ममवेक्षताम् ॥ १

राज्यं च सततं दुःखम् आश्रमाश्च सुदुर्विदाः ।
परिचारेण वै दुःखं दुर्धरं चाकृतात्मभिः ॥ २

भूयिष्ठं च नरेन्द्राणां विद्यते न शुभा गतिः ॥ २॥

पूयन्ते ते तु नियतं प्रयच्छन्तो वसुन्धराम् ।
पूर्वं च कथिता धर्मास् त्वया मे कुरुनन्दन ॥ ३॥

एवमेव गवामुक्तं प्रदानं ते नृगेण ह ।
ऋषिणा नाचिकेतेन पूर्वमेव निदर्शितम् ॥ ४॥

वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा ।
सर्वक्रतुषु चोद्दिष्टा भूमिर्गावोऽथ काञ्चनम् ॥ ५॥

तत्र श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै ।
एतदिच्छाम्यहं श्रोतुं पितामह यथातथम् ॥ ६॥

किं सुवर्णं कथं जातं कस्मिन् काले किमात्मकम् ।
किंदानं किंफलं चैव कस्माच्च परमुच्यते ॥ ७॥

कस्माद् दानं सुवर्णस्य पूजयन्ति मनीषिणः ।
कस्माच्च दक्षिणार्थं तद् यज्ञकर्मसु शस्यते ॥ ८॥

कस्माच्च पावनं श्रेष्ठं भूमेर्गोभ्यश्च काञ्चनम् ।
परमं दक्षिणार्थे च तन्मे ब्रूहि पितामह ॥ ९॥

भीष्मः—

शृणु राजन्नवहितो बहुकारणविस्तरम् ।

जातरूपसमुत्पत्तिम् अनुभूतं च यन्मया ॥ १०॥

पिता मम महातेजाश् शन्तनुर्निधनं गतः ।
तस्य दित्सुरहं श्राद्धं गङ्गाद्वारमुपागतः ॥ ११॥

तत्राहमागत्य पितुश् श्राद्धकर्म समारभम् ।
[1]माता मे जाह्नवी चैव साहाय्यमकरोत्तदा ॥ १२॥

तत्रागतांस्तपस्सिद्धान् उपवेश्य बहूनृषीन् ।
तोयप्रदानात् प्रभृति कार्याण्यथ समारभम् ॥ १३॥

तत् समाप्य यथोद्दिष्टं सर्वं कर्म समाहितः ।
दातुं निर्वपनं सम्यग् यथावदहमारभम् ॥ १४॥

ततस्स दर्भविन्यासं भित्त्वा सुरुचिराङ्गदः ।
प्रलम्बाभरणो बाहुर् उदतिष्ठद्विशां पते ॥ १५॥

[2]मुहूर्तमपि तं दृष्ट्वा परं विस्मयमागतः ।
प्रतिग्रहीता साक्षान्मे पितेति भरतर्षभ ॥ १६॥

[3]ततो मे पुनरेवासीत् संज्ञा सञ्चिन्त्य शास्त्रतः ।
नायं वेदेषु विहितो विधिर्हस्त इति प्रभो ॥ १७॥

पिण्डो देयो नरेणेह ततो मतिरभून्मम ॥ १८

साक्षाद्देहं मनुष्यस्य पितरोऽन्तर्हिताः क्वचित् ।

1. क-घ—अर्धपञ्चकं नास्ति 2. क-घ—मुहूर्तं पितरम्
3. क-घ—अर्धनवकं नास्ति

गृह्णन्ति विहितं देयं पिण्डो देयः कुशेष्विति ॥ १९
ततोऽहं तदपाक्रम्य पितृहस्तनिदर्शनम् ।
शास्त्रप्रमाणसूक्ष्मार्थम् इमं पार्थिव संस्मरे ॥ २०
ततो दर्भेषु तत् सर्वम् अददं भरतर्षभ ।
शास्त्रमार्गानुसारेण तद्विद्धि त्वं युधिष्ठिर ॥ २१
ततस्सोऽन्तर्हितो बाहुः पितुर्मम जनाधिप ।
ततो मां दर्शयामासुस् तृप्तास्ते पितरस्तथा ॥ २२
प्रीयमाणास्स्म मामूचुः प्रीतास्स्म भरतर्षभ ।
विज्ञानेन तवानेन यन्न मुह्यसि धर्मतः ॥ २३
त्वया हि कुर्वता शास्त्रं प्रमाणमिह भारत ।
आत्मा धर्मश्श्रुतं वेदाः पितरश्च महर्षिभिः ॥ २४
साक्षात् पितामहो ब्रह्मा गुरवोऽथ प्रजापतिः ।
प्रमाणमुपनीता वै स्थितिश्च न विचालिता ॥ २५
तदिदं सम्यगारब्धं त्वयाऽद्य भरतर्षभ ।
किं तु भूमेर्गवां चार्थे सुवर्णं दीयतामिति ॥ २६
एवं वयं च धर्मश्च सर्वे चास्मत्पितामहाः ।
पाविता वै भविष्यन्ति पावनं परमं हि तत् ॥ २७
नवपूर्वानधश्चान्यान् नव सन्तारयन्ति ते ।
सुवर्णं ये प्रयच्छन्तीत्येवं मां पितरोऽब्रुवन् ॥ २८

ततोऽहं विस्मितो राजन् प्रतिबुद्धो विशां पते ।
सुवर्णदानेऽकरवं मतिं भरतसत्तम ॥ २९

इतिहासमिमं चापि शृणु राजन् पुरातनम् ।
जामदग्न्यं प्रति विभो धन्यमायुष्यमेव च ॥ ३०

जामदग्न्येन रामेण तीव्ररोषान्वितेन च ।
त्रिस्सप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ॥ ३१

ततो जित्वा महीं कृत्स्नां रामो राजीवलोचनः ।
आजहार क्रतुं वीरो ब्रह्मक्षत्रेण पूजितम् ॥ ३२

वाजिमेधं महाराज सर्वकामसमन्वितम् ।
पावनं सर्वभूतानां तेजो[1]वीर्यविवर्धनम् ॥ ३३

विपाप्माऽपि च तेजस्वी [2]तेन क्रतुबलेन वै ।
नैवात्मनोऽथ लघुतां जामदग्न्योऽध्यगच्छत ॥ ३४

स तु क्रतुवरेणेष्ट्वा महात्मा दक्षिणावता ।
पप्रच्छागमसम्पन्नान् ऋषीन् देवांश्च भारत ॥ ३५

पावनं परमं नृणाम् उग्रे कर्मणि वर्तताम् ।
तदुच्यतां महाभागा इति [3]रामो वचोऽब्रवीत् ॥ ३६
प्रत्युवाच ततस्तेषां वसिष्ठो भगवान् ऋषिः ॥ ३६॥

---

1. अ-ख—द्युति
2. क—इतः चत्वारः पादा न सन्ति घ—पादत्रयं नास्ति
3. अ-ख—जातघृणो

वसिष्ठः—

देवतास्ते प्रयच्छन्ति सुवर्णं ये ददत्युत ।
अग्निर्हि देवतास्सर्वास् सुवर्णं च तदात्मकम् ॥ ३७॥

तस्मात् सुवर्णं ददता दत्तास्सर्वाश्च देवताः ।
भवन्ति पुरुषव्याघ्र न ह्यतः परमं विदुः ॥ ३८॥

भूय एव च माहात्म्यं सुवर्णस्य निबोध मे ।
वदतो मम विप्रर्षे सर्वशस्त्रभृतां वर ॥ ३९॥

मया श्रुतमिदं पूर्वं पुराणे भृगुनन्दन ।
प्रजापतेः कथयतो मनोस्स्वायम्भुवस्य वै ॥ ४०॥

शूलपाणेर्भगवतो रुद्रस्यापि महात्मनः ।
गिरौ हिमवति श्रेष्ठे तदा भृगुकुलोद्वह ॥ ४१॥

देव्या विवाहे निर्वृत्ते रुद्राण्या भृगुनन्दन ।
समागमो भगवतो देव्या सह महात्मनः ॥ ४२॥

ततस्सर्वे समुद्विग्ना भगवन्तमथागमन् ॥ ४३

ते महादेवमासीनं देवीं च वरदामुमाम् ।
[1]प्रसाद्य सगणं सर्वे रुद्रमूचुस्सुरेश्वराः ॥ ४४

देवाः—

अयं समागमो देव देव्या सह तवानघ ।
तपस्विनस्तपस्विन्या तेजस्विन्याऽतितेजसः ॥ ४५

1. क-ख—प्रणम्य

अमोघतेजास्त्वं देव देवी चेयमुमा तथा ।
अपत्यं युवयोर्देव बलवद्भविता प्रभो ॥ ४६
तन्नूनं त्रिषु लोकेषु न किञ्चिच्छेषयिष्यति ॥ ४६॥
[1]तदेभ्यः प्रणतेभ्यस्तु देवेभ्यः पृथुलोचन ।
वरं प्रयच्छ लोकेश त्रैलोक्यहितकाम्यया ॥ ४७॥
अपत्यार्थं निगृह्णीष्व तेजो ज्वलनमुत्तमम् ॥ ४८

वसिष्ठः—

इति तेषां कथयतां भगवान् वृषभध्वजः ।
एवमस्त्विति देवांस्तान् विप्रर्षे प्रत्यभाषत ॥ ४९

उमा—

तस्मात् सर्वे सुरा यूयम् अनपत्या भविष्यथ ॥ ४९॥
प्रजाच्छेदो मम कृतो यस्माद् युष्माभिरद्य वै ।
तस्मात् प्रजा वः खगमास् सर्वेषां न भविष्यति ॥ ५०॥

वसिष्ठः—

पावकस्तु न तत्रासीच् छापकाले भृगूद्वह ।
[2]देवा देव्यास्ततश्शापाद् अनपत्यास्तदाऽभवन् ॥ ५१॥
रुद्रस्तु तेजोऽप्रतिमं धारयामास तत्तदा ।
प्रस्कन्नं तु ततस्तस्मात् किञ्चित्तत्रापतद्भुवि ॥ ५२॥
तत् पपात तदा चाग्नौ ववृधे चाद्भुतोपमम् ।
तेजस्तेजसि सम्पृक्तम् एकयोनित्वमागतम् ॥ ५३॥

---

1. ब—अर्धद्वयं नास्ति

2. क-ब—अर्धद्वयं नास्ति

एतस्मिन्नेव काले तु देवाश्शक्रपुरोगमाः ।
असुरस्तारको नाम तेन सन्तापिता भृशम् ॥ ५४॥
आदित्या वसवो रुद्रा मरुतोऽथाश्विनावपि ।
साध्याश्च सर्वे सन्त्रस्ता दैतेयस्य पराक्रमात् ॥ ५५॥
स्थानानि देवतानां हि विमानानि पुराणि च ।
ऋषीणामाश्रमाश्चापि बभूवुरसुरैर्हृताः ॥ ५६॥
ते दीनमनसस्सर्वे देवाश्च ऋषयश्च ह ।
प्रजग्मुश्शरणं देवं ब्रह्माणमजरं प्रभुम् * ॥ ५७॥

देवाः—

असुरस्तारको नाम त्वया दत्तवरः प्रभो ।
सुरानृषींश्च क्लिश्नाति वधस्तस्य विधीयताम् ॥ ५८॥
तस्माद्भयं समुत्पन्नम् अस्माकं वै पितामह ।
परित्रायस्व नो देव न ह्यन्या गतिरस्ति नः ॥ ५९॥

ब्रह्मा—

समोऽहं सर्वभूतानाम् अधर्मं तं न रोचये ।
हन्यतां तारकः क्षिप्रं सुरर्षिगणबाधकः ॥ ६०॥
वेदा धर्माश्च नोत्सादं गच्छेयुस्सुरसत्तमाः ।
विहितं पूर्वमेवात्र मया वै व्येतु वो भयम् ॥ ६१॥

देवाः—

वरदानाद्भगवतो दैतेयो बलगर्वितः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

देवैर्न शक्यते हन्तुं स कथं प्रशमं व्रजेत् ॥ ६२॥

स हि नैव स्म देवानां नासुराणां न रक्षसाम् ।
वध्यस्स्यामिति जग्राह वरं त्वत्तः पितामह ॥ ६३॥

देवाश्च शप्ता रुद्राण्या प्रजोच्छेदे पुराकृते ।
न भविष्यति वोऽपत्यम् इति सर्वजगत्पते ॥ ६४॥

ब्रह्मा—

हुताशनो न तत्रासीच् छापकाले सुरोत्तमाः ।
स उत्पादयिताऽपत्यं वधार्थं त्रिदशद्विषाम् ॥ ६५॥

तद्वै देवानतिक्रम्य देवदानवराक्षसान् ।
मानुषानथ गन्धर्वान् नागानपि च पक्षिणः ॥ ६६॥

अस्त्रेणामोघपातेन शक्त्या तं घातयिष्यति ।
यतो वो भयमुत्पन्नं ये चान्ये सुरशत्रवः ॥ ६७॥

सनातनो हि सङ्कल्पः काम इत्यभिधीयते ।
रुद्रस्य [1]तेजः प्रस्कन्नम् अग्नौ निपतितं च तत् ॥ ६८॥

तत्तेजोऽग्निर्महद्भूतं द्वितीयमिव पावकम् ।
वधार्थं देवशत्रूणां गङ्गायां जनयिष्यति ॥ ६९॥

स तु नावाप तं शापं नष्टस्स हुतभुक् तदा ।
[2]तस्माद्वो न भयं देवास् समुत्पत्स्यति पावकिः ॥ ७०॥

---

1. अ-ख—रेतः+च पतितं

2. ख—तस्माद्वो भयनुद्देवाः

[1]अन्विष्य तं वै ज्वलनं तथा चाद्य नियुज्यताम् ।
तारकस्य वधोपायः कथितो वो मयाऽनघाः ॥ ७१॥

न हि तेजस्विनां शापास् तेजसः प्रभवन्ति वै ।
बलान्यतिबलं प्राप्य न बलानि भवन्ति वै ॥ ७२॥

हन्यादवध्यानपरान् अपि चैव तपस्विनः ।
सङ्कल्पाभिरुचिः [2]कामस् सनातनसमोऽनलः ॥ ७३॥

जगत्पतिरनिर्देश्यस् सर्वगस्सर्वभावनः ।
[3]हृच्छयस्सर्वभूतानां ज्येष्ठो रुद्रादपि प्रभुः ॥ ७४॥

अन्विष्यतां ततः क्षिप्रं तेजोराशिर्हुताशनः ।
स वो मनोगतं कामं देवस्सम्पादयिष्यति ॥ ७५॥

वसिष्ठः—

एतद्वाक्यमुपश्रुत्य ततो देवा महात्मनः ।
जग्मुस्संसिद्धसङ्कल्पाः पर्यटन्तो विभावसुम् ॥ ७६॥

ततस्त्रैलोक्यमृषयो विचिन्वन्तस्सुरैस्सह ।
काङ्क्षन्तो दर्शनं वह्नेस् सर्वे तद्गतमानसाः ॥ ७७॥

परेण तपसा युक्ताश् श्रीमन्तो लोकविश्रुताः ।
लोकानन्वचरन् सिद्धास् सर्व एव भृगूद्वह ॥ ७८॥

---

1. अ-क-घ—अन्वीक्ष्य
2. क—कालः + समो बलः    घ—काल + समो नयः
3. क-घ—अर्धचतुष्टयं नास्ति

नष्टमात्मनि संलीनं नाभिजग्मुर्हुताशनम् ॥ ७९

ततस्ताञ् जातसन्त्रासान् अग्नेर्दर्शनलालसान् ।
जलेचरः क्लान्तमनास् तेजसाऽग्नेः प्रदीपितः ॥ ८०
उवाच देवान् मण्डूको रसातलतलोत्थितः ॥ ८०॥

मण्डूकः—

रसातलतले देवा वसत्यग्निरिति प्रभुः ॥ ८१
सन्तापादिह सम्प्राप्तः पावकप्रभवादहम् ॥ ८१॥
स संसुप्तो जले देवा भगवान् हव्यवाहनः ।
अपस्संसृज्य तेजोभिस् तेन सन्तापिता वयम् ॥ ८२॥
तस्य दर्शनमिष्टं वो यदि देवा विभावसोः ।
तत्रैवमभिगच्छध्वं कार्यं वो वह्निना यदि ॥ ८३॥
मृग्यतां साधयिष्यामो वयं ह्यग्निभयात् पुरा ॥ ८४

वसिष्ठः—

एतावदुक्त्वा मण्डूकस् त्वरितो जलमाविशत् ॥ ८४॥
हुताशनस्तु बुबुधे मण्डूकस्याथ पैशुनम् ।
शशाप तं समासाद्य न रसान् वेत्स्यसीति वै ॥ ८५॥
स तं संयुज्य शापेन मण्डूकं पावको ययौ ।
अन्यत्र वासाय विभुर् न च देवानदर्शयत् ॥ ८६॥
देवास्त्वनुग्रहं चक्रुर् मण्डूकानां भृगूद्वह ।
यत्तच्छृणु महाबाहो गदतो मम सर्वशः ॥ ८७॥

देवाः—

अग्निशापादजिह्वा हि रसज्ञानबहिष्कृताः ।
सरस्वतीं बहुविधां यूयमुच्चारयिष्यथ ॥ ८८॥

बिलवासगताश्चाथ निरादाना विचेतसः ।
गतासूनपि वश्शुष्कान् भूमिस्सन्धारयिष्यति ॥ ८९॥

तमोगतायामपि च निशायां प्रचरिष्यथ ॥ ९०

वसिष्ठः—

[1]इत्युक्त्वा तांस्ततो देवाः पुनरेव महीमिमाम् ।
परीयुर्ज्वलनस्यार्थे न चाविन्दन् हुताशनम् ॥ ९१

अथ तान् द्विरदः कश्चित् सुरेन्द्रद्विरदोपमः ।
अश्वत्थस्थोऽग्निरित्येवम् आह देवान् भृगूद्वह ॥ ९२

शशाप ज्वलनस्सर्वान् द्विरदान् क्रोधमूर्च्छितः ॥ ९२॥

प्रतीपा भवतां जिह्वा भवित्रीति भृगूद्वह ।
इत्युक्त्वा निस्सृतोऽश्वत्थाद् अग्निर्वारणसूचितः ॥ ९३॥

प्रविवेश शमीगर्भम् अथ वह्निस्सुषुप्सया ॥ ९४

अनुग्रहं तु नागानां यं चक्रुश्शृणु तं प्रभो ।
देवा भृगुकुलश्रेष्ठ प्रीतास्सत्यपराक्रमाः ॥ ९५

देवाः—

प्रतीपया जिह्वयाऽपि सर्वाहारान् हरिष्यथ ।

1. अ—एकादशार्धानि न सन्ति

वाचश्चोच्चारयिष्यध्वम् उच्चैरव्यञ्जिताक्षराः ॥ ९६

वसिष्ठः—

इत्युक्त्वा पुनरेवाग्निम् अनुसस्रुर्दिवौकसः ॥ ९६॥

अश्वत्थान्निस्सृतश्चाग्निश् शमीगर्भगतस्तदा ।
शुकेन ख्यापितो विप्र तं देवास्समुपाद्रवन् ॥ ९७॥

शशाप शुकमग्निस्तु वाग्विहीनो भविष्यसि ।
जिह्वां चावर्तयामास तस्यापि हुतभुक् तदा ॥ ९८॥

दृष्ट्वा तु ज्वलनं देवाश् शुकमूचुर्दयान्विताः ॥ ९९

देवाः—

भविता न त्वमत्यन्तं शकुने नष्टवागिति ॥ ९९॥

आवृत्तजिह्वस्य सतो वाक्यं कान्तं भविष्यति ।
बालस्येव प्रवृत्तस्य कलमव्यक्तमद्भुतम् ॥ १००॥

वसिष्ठः—

इत्युक्त्वा तं शमीगर्भे वह्निमालक्ष्य देवताः ।
तदेवायतनं चक्रुः पुण्यं सत्यं क्रियास्वपि ॥ १०१॥

तदाप्रभृति चाप्यग्निश् शमीगर्भेषु दृश्यते ।
उत्पादने तथोपायम् अभिजग्मुश्च मानुषाः ॥ १०२॥

आपो रसातले यास्तु संसृष्टाश्चित्रभानुना ।
तास्सर्वतःप्रस्रवणैर् ऊष्मां मुञ्चन्ति भार्गव ॥ १०३॥

पावकेनाधिशयितास् सन्तप्तास्तस्य तेजसा ।

तथाऽग्निर्देवता दृष्ट्वा बभूव व्यथितस्तदा ॥ १०४॥
किमागमनमित्येतत् तानपृच्छच्च पावकः ।
तमूचुर्विबुधास्सर्वे ते चैव परमर्षयः ॥ १०५॥

देवाः—

त्वां नियोक्ष्यामहे कार्ये तद्भवान् कर्तुमर्हति ॥
कृते च तस्मिन् भविता तवापि सुमहान् गुणः ॥ १०६॥

अग्निः—

ब्रूत यद्भवतां कार्यं सर्वं कर्तास्मि तत् सुराः ।
भवतां विनियोज्योऽहं न मेऽत्रास्ति विचारणा ॥ १०७॥

देवाः—

असुरस्तारको नाम ब्रह्मणो वरदर्पितः ।
अस्मान् प्रबाधते वीर्याद् वधस्तस्य विधीयताम् ॥ १०८॥
इमान् देवगणांस्तात प्रजापतिगणांस्तथा ।
ऋषींश्चापि महाभागान् परित्रायस्व पावक ॥ १०९॥
अपत्यं तेजसा युक्तं प्रवीरं जनय प्रभो ।
यद्भयं नोऽसुरात् तस्मान्नाशयेद्धव्यवाहन ॥ ११०॥
शप्तानां नो महादेव्या नान्यदस्ति परायणम् ।
अन्यत्र भवतो वीर तस्मात् त्रायस्व नस्ततः ॥ १११॥

वसिष्ठः—

इत्युक्तस्स तथेत्युक्त्वा भगवान् हव्यकव्यभुक् ।
जगामाथ दुराधर्षो गङ्गां भागीरथीं प्रति ॥ ११२॥

तया चास्याभवन्मिश्रो गर्भश्चास्याभवत्तदा ।
ववृधे स तदा गर्भः [1]कक्षे कृष्णगतिर्यथा ॥ ११३॥

तेजसा तस्य गर्भस्य गङ्गा [2]विह्वललोचना ।
सन्तापमगमत्तीव्रं प्रवोढुं न शशाक ह ॥ ११४॥

आहिते ज्वलनेनाथ गर्भे तेजस्समन्विते ।
गङ्गायामसुरः कश्चिद् भैरवं नादमुत्सृजत् ॥ ११५॥

अबुद्धिपतितेनाथ नादेन विपुलेन सा ।
वित्रस्तोद्भ्रान्तनयना गङ्गा विप्लुतलोचना ॥ ११६॥

विसंज्ञा नाशकद् गर्भं सन्धारयितुमात्मना ॥ ११७

सा तु तेजःपरीताङ्गी कम्पमाना च जाह्नवी ।
उवाच वचनं विप्र तदा बाला हुताशनम् ॥ ११८

गङ्गा—

[3]न ते शक्तास्मि भगवंस् तेजसोऽस्य विधारणे ।
विमूढाऽस्मि कृता तेन यथा स्वस्थं पुरा कृतम् ॥ ११९

विह्वला चास्मि भगवंस् तेजो नष्टं च मेऽनघ ।
धारणे नास्य [4]शक्ताऽहं गर्भस्य तपतां वर ॥ १२०

उत्स्रक्ष्येऽहमिमं दुःखान्न तु कामात् कथञ्चन ॥ १२०॥

---

1. क-घ—उष्णे
2. क—निश्चल
3. ख—अर्धाष्टकं नास्ति
4. क-घ—तप्ताङ्गा

[1]न चेतसोऽस्ति संस्पर्शो मम देव विभावसो ।
आपदर्थे न सम्बन्धस् सुसूक्ष्मोऽपि महाद्युते ॥ १२१॥

यदत्र गुणसम्पन्नम् इतरद्वा हुताशन ।
त्वय्येव तदहं मन्ये धर्माधर्मौ च केवलौ ॥ १२२॥

वसिष्ठः—

तामुवाच ततो वह्निर् धार्यतां धार्यतामयम् ।
गर्भो मत्तेजसा युक्तो महागुणफलोदयः ॥ १२३॥

सूर्यवैश्वानरसमः कान्त्या सोम इवापरः ॥ १२४

शक्ता ह्यसि महीं कृत्स्नां वोढुं धारयितुं यथा ।
न हि ते किञ्चिदप्राप्यम अन्यतो धारणादृते ॥ १२५

एवमुक्ता तु सा देवी तत्रैवान्तरधीयत ॥ १२५॥

पावकश्चापि तेजस्वी कृत्वा कार्यं दिवौकसाम् ।
जगामेष्टं तदा देशं ततो भार्गवनन्दन ॥ १२६॥

सा वह्निना वार्यमाणा देवैश्चपि सरिद्वरा ।
समुत्ससर्ज तं गर्भं मेरौ गिरिवरे तदा ॥ १२७॥

समर्था धारणेनापि रुद्रतेजःप्रधर्षिता ।
नाशकन्ती तदा गर्भं सन्धारयितुमोजसा ॥ १२८॥

सा समुत्सृज्य तं दुःखाद् दीप्तवैश्वानरप्रभम् ।

---

1. क-घ—न स्रोतसो

दर्शयामास चाग्निस्तां तदा गङ्गां भृगूद्वह ॥ १२९॥

पप्रच्छ सरितां श्रेष्ठां कच्चिद् गर्भस्सुखोदयः ।
कीदृग्गुणोऽपि वा देवि कीदृग्रूपश्च दृश्यते ॥ १३०॥

तेजसा केन वा युक्तस् सर्वमेतद् ब्रवीहि मे ॥ १३१

गङ्गा—

जातरूपस्स गर्भो वै तेजसा त्वमिवानल ।
सुवर्णो विमलो दीप्तः पर्वतं चावभासयन् ॥ १३२

पद्मोत्पलविचित्राणां ह्रदानामिव शीतलः ।
गन्धोऽस्य स कदम्बानां तुल्यो वै तपतां वर ॥ १३३

तेजसा तस्य गर्भस्य भास्करस्येव रश्मिभिः ।
यद्द्रव्यं परिसंस्पृष्टं पृथिव्यां पर्वतेषु वा ॥ १३४

तत् सर्वं काञ्चनीभूतं समन्तात् प्रत्यदृश्यत ॥ १३४॥

पर्यधावद्धि शैलांश्च नदीप्रस्रवणानि च ।
व्यदीपयत् तेजसा च त्रैलोक्यं सचराचरम् ॥ १३५॥

एवंरूपस्स भगवान् पुत्रस्ते हव्यवाहन ॥ १३६

वसिष्ठः—

स तु गर्भो महातेजा गाङ्गेयः पावकोद्भवः ।
दिव्यं शरवणं प्राप्य ववृधेऽद्भुतदर्शनः ॥ १३७

ददृशुः कृत्तिकास्तूर्णं बालार्कसदृशद्युतिम ।

जातस्नेहास्तु तं बालं पुपुषुस्स्तन्यविस्रवैः ॥ १३८

स ततः कार्तिकेयत्वम् अवाप परमद्युतिः ।
स्कन्नत्वात् स्कन्दतां चापि गुहावासाद् गुहोऽभवत् ॥ १३९

एवं सुवर्णमुत्पन्नम् अपत्यं जातवेदसः ।
पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ॥ १४०

तत्र जाम्बूनदं श्रेष्ठं देवानामपि भूषणम् ।
ततःप्रभृति चाप्येतज् जातरूपमुदाहृतम् ॥ १४१

[1]यत् सुवर्णं स भगवान् अग्निरीशः प्रजापतिः ।
पवित्राणां पवित्रं हि कनकं द्विजसत्तम ॥ १४२

अग्नीषोमात्मकं चैव जातरूपमुदाहृतम् ।
रत्नानामुत्तमं रत्नं भूषाणानां तथोत्तमम् ॥ १४३

एतेन कर्मणा लोके ततोऽग्निः परिगीयते ।
[2]हिरण्यरेता इति वै ऋषिभिर्विबुधैस्तदा ॥ १४४

पृथिवी च तदा देवी ख्याता वसुमतीति वै* ॥ १४४॥

अपि चेदं पुरा राम श्रुतं मे ब्रह्मदर्शनम् ।
पितामहस्य यद्वृत्तं ब्रह्मणः परमात्मनः ॥ १४५॥

1. ख—इदमर्धद्वयं नास्ति
2. घ—नास्तीदमर्धम्
* सर्वेषु कोशेषु अत्राध्यायसमाप्तिर्दृश्यते

देवस्य महतस्तात वारुणीं बिभ्रतस्तनुम् ।
ऐश्वर्ये वारुणे वाऽथ रुद्रस्येशस्य वै प्रभो ॥ १४६॥
आजग्मुर्मुनयस्सर्वे देवाश्चाग्निपुरोगमाः ॥ १४७
यज्ञाङ्गानि च सर्वाणि वषट्कारश्च मूर्तिमान् ।
मूर्तिमन्ति च सामानि यजूंषि च सहस्रशः ॥ १४८
[1]ऋग्वेदोऽथर्ववेदश्च पदक्रमविभूषितः ।
[2]लक्षणानि स्वरास्स्तोभा निरुक्तास्स्वरपङ्क्तयः ॥ १४९
ओङ्कारश्छन्दसां नेता निग्रहप्रग्रहौ तथा ।
वेदाश्च सोपनिषदो विद्या सावित्र्यथापि च ॥ १५०
भूतं भव्यं भविष्यच्च दधार शिरसा शिवः ॥ १५०॥
जुहुवुश्चात्मनाऽऽत्मानं स्वयञ्चैव तदा [3]प्रभुः ॥ १५१
देवपत्न्यश्च कन्याश्च देवतानां च मातरः ।
आजग्मुस्सहितास्तत्र तदा भृगुकुलोद्वह ॥ १५२
यज्ञं पशुपतेः प्रीता वरुणस्य महात्मनः ॥ १५२॥
स्वयम्भुवस्तु ता दृष्ट्वा रेतस्समपतद्भुवि ॥ १५३
तस्य शुक्रस्य निष्यन्दान् पांसून् सङ्गृह्य भूमितः ।
प्रास्यत् पूषा कराभ्यां वै तस्मिन्नेव हुताशने ॥ १५४

---

1. क-घ—ऋग्वेदश्च क्रमैस्तत्र पदैश्च सुविभूषितः । [पाठान्तरम्]
2. क-ख—अक्षराणि
3. अ-क-ख—प्रभोः

ततस्तस्मिन् सम्प्रवृत्ते सत्रे ज्वलितपावके ।
ब्रह्मणे जुह्वतस्तस्य प्रादुर्भावो बभूव ह ॥ १५५

स्कन्नमात्रं च तच्छुक्लं स्रुवेण प्रतिगृह्य सः ।
आज्यवन्मन्त्रतश्चापि सोऽजुहोद्भृगुनन्दन ॥ १५६

ततस्सञ्जनयामास भूतग्रामं स वीर्यवान् ।
ततस्तु तेजसस्तस्माज् जज्ञे लोकेषु तैजसम् ॥ १५७

तमसस्तामसो भावो व्यापि सत्त्वं तमोमयात् ।
सगुणस्तेजसो नित्यं तमस्याकाश एव च ॥ १५८

सर्वभूतेष्वपि तथा ससत्त्वस्तैजसस्तमः ॥ १५८॥

शुक्ले हुतेऽग्नौ तस्मिंस्तु प्रादुरासंस्त्रयः प्रभो ।
पुरुषा वपुषा युक्ता युक्ताः प्रवरजैर्गुणैः ॥ १५९॥

भर्जनाद्भृगुरित्येवम् अङ्गारादङ्गिराभवत् ।
सह यज्वभिरुत्पन्नो भृगुस्तस्माद् गुरुस्स्मृतः ॥ १६०॥

मरीचिभ्यो मरीचिस्तु मारीचः काश्यपो ह्यभूत् ।
अङ्गारेभ्योऽङ्गिरास्तात वालखि[1]ल्यशिशलोच्चयात् ॥ १६१॥

अत्रेरत्रिं च हि विभो जातमेवं वदन्त्यपि ॥ १६२

तथाऽग्नेस्तस्य भस्मभ्यो ब्रह्मर्षिगणसम्मिताः ।
वैखानसास्समुत्पन्नास् तथा भूतगुणेप्सवः ॥ १६३

---

1. क—ल्यः शरोच्चवान्  ख—ल्यः शिरोच्चयाम्  घ—ल्य गरोच्चवान्

अश्रुतश्च समुत्पन्नावश्विनौ रूपसम्मतौ ।
शेषाः प्रजानां पतयस् स्रोतोभ्यस्तस्य जज्ञिरे ॥ १६४

ऋषयो रोमकूपेभ्यस् स्वेदाच्छन्दो बलान्मखः ॥ १६४॥

एतस्मात् कारणादाहुर् अग्निस्सर्वा हि देवताः ।
ऋषयश्श्रुतसम्पन्ना वेदप्रामाण्यदर्शनात् ॥ १६५॥

यानि दारूणि ते मासा निर्यासाः पक्षसंज्ञिताः ।
अहोरात्रा मुहूर्ताश्च वीतज्योतिश्च वारुणम् ॥ १६६॥

रौद्रं लोहितमित्याहुर् लोहितात् कनकं स्मृतम् ।
तन्मैत्रमिति विज्ञेयं धूमाच्च वसवस्स्मृताः ॥ १६७॥

अर्चिषो याश्च ते रौद्रास् तथाऽऽदित्या महाप्रभाः ।
उद्दीप्तास्ते तथाऽङ्गारा ये धिष्ण्येषु दिवि स्थिताः ॥ १६८॥

अग्निर्नाथश्च लोकस्य तत् परं ब्रह्म तद्ध्रुवम् ।
सर्वकामदमित्याहुस् तत्र हव्यमुपावहन् ॥ १६९॥

ततोऽब्रवीन्महादेवो वरुणः परमात्मकः ॥ १७०

श्रीमहादेवः—

मम सत्रमिदं दिव्यम् अहं गृहपतिस्त्विह ।
त्रीणि पूर्वाण्यपत्यानि मम तानि न संशयः ॥ १७१

इति जानीत खगमा मम यज्ञफलं हि तत् ॥ १७१॥

अग्निः—

मदङ्गेभ्यः प्रसूतानि मदाश्रयकृतानि च ।

मम चैतान्यपत्यानि मम शुक्रं हुतं हि तत् ॥ १७२॥

श्रीमहादेवः—

अहं वक्ता च मन्त्रस्य होता शुक्रस्य चैव ह ।
यस्य बीजं फलं तस्य शुक्रं च कारणं मतम् ॥ १७३॥

वसिष्ठः—

ततोऽब्रुवन् देवगणाः पितामहमुपेत्य वै ।
कृताञ्जलिपुटास्सर्वे शिरोभिरभिवन्द्य च ॥ १७४॥

देवाः—

वयं च भगवन् सर्वे जगच्च सचराचरम् ।
तवैव प्रभवं सर्वं तस्मादग्निर्विभावसुः ॥ १७५॥
वरुणश्चेश्वरो देवो वहतां काममीप्सितम् ॥ १७६
निसर्गाद्वरुणश्चापि [1]ब्रह्मणो यादसां पतिः ।
जग्राह वै भृगुं पूर्वम् अपत्यं सूर्यवर्चसम् ॥ १७७
ईश्वरोऽङ्गिरसं चाग्नेर् अपत्यार्थे ह्यकल्पयत् ।
पितामहस्त्वपत्यं वै कविं जग्राह तत्त्ववित् ॥ १७८
तदा स वारुणिः ख्यातो भृगुः प्रसवकर्मकृत् ।
आग्नेयस्त्वङ्गिराश्श्रीमान् कविर्ब्राह्मो महायशाः ॥ १७९
भार्गवाङ्गिरसो लोके लोकसन्तानलक्षणाः ।
एते विप्रवरास्सर्वे प्रजानां पतयस्त्रयः ॥ १८०

1. क–ख—इतः अष्टौ पादा न सन्ति

सर्वं सन्तानमेतेषाम् इदमित्युपधारय ॥ १८०॥
भृगोस्तु पुत्रास्तत्रासन् सप्त तुल्या भृगोर्गुणैः ॥ १८१
च्यवनो वज्रशीर्षश्च शुचिरौर्वस्तथैव च ।
शुक्रो वरेण्यश्च विभुस् सवनश्चेति सप्त ते ॥ १८२
भार्गवा वारुणास्सर्वे [1]येषां वंशे भवानपि ।
अष्टावङ्गिरसः पुत्रा वारुणास्तेऽप्यवारुणाः ॥ १८३
बृहस्पतिरुचथ्यश्च वयस्यश्शान्तिरेव च ।
घोरो विरूपस्संवर्तस् सुधन्वा चाष्टमस्स्मृतः ॥ १८४
एतेऽष्टावग्निजास्सर्वे पावकिश्चाङ्गिरा विभुः ॥ १८४॥
ब्राह्मणाश्च कवेः पुत्रा वारुणास्तेऽप्युदाहृताः ।
अष्टौ प्रसवनैर्युक्ता गुणैर्ब्रह्मविदश्शुभाः ॥ १८५॥
कविः काव्यश्च विष्णुश्च बुद्धिमानुशना तथा ।
भृगुश्च वरुणश्चैव काश्यपोऽग्र्यश्च धर्मवित् ॥ १८६॥
अष्टौ कविसुता ह्येते सर्वमेतज्जगत्ततम् ।
प्रजापतय एते हि प्रजानां यैरिमाः प्रजाः ॥ १८७॥
एवमाङ्गिरसश्चैव कवेश्च प्रभवान्वये ।
भृगोश्च भृगुशार्दूल वंशजैस्सन्ततं जगत् ॥ १८८॥
वरुणश्चादितो विप्र जग्राह प्रभुरीश्वरः ।

1. क-घ—इतः अष्टौ पादा न सन्ति

कविं तात भृगुं चैव तस्मात्तौ वारुणौ स्मृतौ ॥ १८९॥
जग्राहाङ्गिरसं देवश् शिखी यस्माद्धुताशनः ।
तस्मादाङ्गिरसा ज्ञेयास् सर्वे एव हुताशनाः ॥ १९०॥

वसिष्ठः—

ब्रह्माऽपि चाहवैः पूर्वं देवताभिः प्रसादितः ॥ १९१

ब्रह्मा—

इमे सञ्जनयिष्यन्ति प्रजा हि जगदीश्वराः ॥ १९१॥
सर्वे प्रजानां पतयस् सर्वे चापि तपस्विनः ।
मत्प्रभावादिमं लोकं धारयिष्यन्ति शाश्वतम् ॥ १९२॥
तथैव वंशकर्तारस् तव तेजोविवर्धनाः ।
भवेयुर्वेदविदुषस् सर्वासां पतयस्तथा ॥ १९३॥
वेदपक्षधरास्सौम्याः प्राजापत्या महर्षयः ।
अनन्तं ब्रह्म सत्यं च तपश्च परमं भुवि ॥ १९४॥

देवाः—

सर्वे हि वयमेतावत् तवैव प्रसवा विभो ।
[1]देवानां ब्राह्मणानां च त्वं च कर्ता पितामह ॥ १९५॥
मारीचमादितः कृत्वा सर्वे ते भवतस्तव ।
अपत्यानीति सम्प्रेक्ष्य [2]क्षमाम च पितामह ॥ १९६॥
अथ स्वेनैव रूपेण प्रजनिष्यन्ति वै प्रभो ।

1. अ-क-ख—वेदानां     2. ख—क्षमयाम

स्थापयिष्यन्ति चात्यर्थं युगान्तनिधनाः प्रजाः ॥ १९७॥

वसिष्ठः—

एवमेतत् पुरावृत्तं तस्मिन् यज्ञे महात्मनः ।
देवश्रेष्ठस्य लोकादौ वारुणीं बिभ्रतस्तनुम् ॥ १९८॥

अग्निर्ब्रह्मा पशुपतिश् शर्वो रुद्रः प्रजापतिः ।
अग्नेरपत्यमेते हि सुवर्णमिति धारय ॥ १९९॥

अग्न्यभावे च कुर्व[1]न्ति ह्यग्निस्थानेषु काञ्चनम् ।
जामदग्न्य प्रमाणज्ञा वेदश्रुतिनिदर्शनाः ॥ २००॥

कुशस्तम्बे जुहोत्यग्निं सुवर्णं तत्र संस्थितम् ।
हुते प्रीतिगुणामृद्धिं भगवांस्तत्र मन्यते ॥ २०१॥

तस्मादग्निपरास्सर्वा देवता इति नश्श्रुतिः ॥ २०२

ब्रह्मणश्च प्रसूतोऽग्निर् अग्नेरपि च काञ्चनम् ।
तस्माद्देवाः प्रयच्छन्ति सुवर्णं धर्मदर्शनात् ॥ २०३

सुवर्णं ये प्रयच्छन्ति नराश्शुद्धेन चेतसा ।
देवतास्ते प्रयच्छन्ति समस्ता इति नश्श्रुतिः ॥ २०४

तस्य वा तपसो लोके गच्छतः परमां गतिम् ।
सौराज्ये राजराज्ये च सोऽभिषिच्यो ह्यनेकशः ॥ २०५

आदित्योदयने प्राप्ते विधिमन्त्रपुरस्कृतम् ।

---

1. क—न्ति अग्निस्थाने च ख—न्ति ह्यग्निस्थाक्षेपु
घ—न्ति शिरस्स्थाने च

ददाति कनकं यो वै दुस्स्वप्नं तं न बाधते ॥ २०६
ददात्युदितमात्रे यस् तस्य [1]पापोऽवधूयते ।
मध्याह्ने सर्वमेवास्य हन्ति पाप्मानमागतम् ॥ २०७
ददाति [2]पश्चिमां सन्ध्यां यस्सुवर्णं धृतव्रतः ।
ब्रह्मवाय्वग्निसोमानां सालोक्यमुपयास्यति ॥ २०८
सेन्द्रेषु चैव लोकेषु प्रतिष्ठां प्राप्नुयाच्छुभाम् ।
इह लोके यशश्चैव शान्तपाप्मा प्रमोदते ॥ २०९
इतस्स विद्यतेऽन्येषु लोकेष्वप्रतिमेषु च ।
अनावृतगतिर्नित्यं कामचारी भवत्युत ॥ २१०
न च क्षरति तेभ्यस्तु शश्वच्चोपाप्नुते महत् ।
सुवर्णमक्षयं दत्त्वा लोकानाप्नोति पुष्कलान् ॥ २११
यस्तु सञ्ज्वलयित्वाऽग्निम् आदित्योदयनं प्रति ।
दद्याद्वै व्रतमुद्दिश्य सर्वान् कामानवाप्नुयात् ॥ २१२
अग्निरित्येव तत् प्राहुः प्रजानां च सुखावहम् ।
यथेष्टगुणसंवृत्तः प्रवर्तक इति स्मृतम् ॥ २१३

भीष्मः—

एवमेतन्महाराज सुवर्णस्य महात्मनः ।
जन्म ते कथितं पुण्यं प्रदानं च युधिष्ठिर ॥ २१४

---

1. क-घ—पाप्माऽवधूयते　2. क-घ—परमां

इति राममुवाचेदं वसिष्ठश्श्रेष्ठवागृषिः ।
सुवर्णदाने माहात्म्यं तत् कुरुष्व युधिष्ठिर ॥ २१५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
[ अस्मिन्नध्याये २१५ श्लोकाः ]

## ॥ पञ्चसप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति कुमारोत्पत्तिप्रकारस्य देवादिभिस्तस्मै क्रीडनकादिदानस्य तारकासुरवधादेश्च कथनम् ॥

युधिष्ठिरः—

उक्ताः पितामहेनेह सुवर्णस्य विधानतः ।
विस्तरेण प्रदानेषु ये गुणाश्श्रुतिलक्षणाः ॥ १

यत्तु कारणमुत्पत्तेस् सुवर्णस्येह कीर्तितम् ।
स कथं तारकः प्राप्तो निधनं तद् ब्रवीहि मे ॥ २

[1]उक्तं स देवतानां हि अवध्य इति पार्थिव ।
न च तस्येह ते मृत्युर् विस्तरेण प्रकीर्तितः ॥ ३

एतदिच्छाम्यहं श्रोतुं त्वत्तः कुरुकुलोद्वह ।

1. ख—अर्धचतुष्टयं नास्ति

तारकस्यैव तु वधं परं कौतूहलं हि मे ॥ ४

भीष्मः—

विपन्नकृत्या राजेन्द्र देवता ऋषयस्तथा ।
कृत्तिकाश्चोदयामासुर् अपत्यभरणाय वै ॥ ५

न देवतानां काचिद्धि समर्था जातवेदसः ।
एता हि शक्तास्तं गर्भं सन्धारयितुमोजसा ॥ ६

षण्णां तासां गतः प्रीतिं पावको गर्भधारणात् ।
स्वेन तेजोविसर्गेण वीर्येण परमेण ह ॥ ७

तास्तु षड् कृत्तिका गर्भं पुपुषुर्जातवेदसः ।
तत् षड्वर्गेषु तेजोऽग्नेस् सकलं निहितं प्रभो ॥ ८

ततस्ता वर्धमानस्य कुमारस्य महात्मनः ।
तेजसा हि परीताङ्ग्यो न क्वचिच्छर्म लेभिरे ॥ ९

ततस्तेजःपरीताङ्ग्यस् सर्वाः काल उपस्थिते ।
स्वयं गर्भं सुषुविरे कृत्तिकास्ता नरर्षभ ॥ १०

ततस्तं षडधिष्ठानं गर्भमेकत्वमागतम् ।
पृथिवी परिजग्राह कृत्तिकानां समीपतः ॥ ११

स गर्भो दिव्यसंस्थानो दीप्तिमान् पावकप्रभः ।
दिव्यं शरवणं प्राप्य ववृधे प्रियदर्शनः ॥ १२

ददृशुः कृत्तिकास्तं तु बालं वह्निसमद्युतिम् ।

जातस्नेहाश्च सौहार्दात् पुपुपुस्तन्यविस्रवैः ॥ १३
अभवत् कार्तिकेयस्स त्रैलोक्ये सचराचरे ।
स्कन्नत्वात् स्कन्दता चापि गुहावासाद् गुहोऽभवत् ॥ १४
ततो देवास्त्रयस्त्रिंशद् ऋषयश्च महेश्वरः ।
तत्र धाता च विष्णुश्च [1]यमः पूषाऽर्यमा भगः ॥ १५
अंशो मित्रश्च साध्याश्च वासवो वसवोऽश्विनौ ।
आपो वायुर्भुवश्चन्द्रो नक्षत्राणि ग्रहा दिवः ॥ १६
[2]पृथग् भूतानि चान्यानि यानि देवगणानि वै ।
आजग्मुस्तत्र तं द्रष्टुं कुमारं ज्वलनात्मजम् ॥ १७
ऋषयस्तुष्टुवुश्चैव गन्धर्वाश्च जगुस्तथा ।
षडाननं कुमारं तं [3]द्विषट्काक्षं द्विजप्रियम् ॥ १८
पीनांसं द्वादशभुजं पावकादित्यवर्चसम् ।
शयानं शरगुल्माभं दृष्ट्वा देवास्सहर्षिभिः ॥ १९
लेभिरे परमं हर्षं मेनिरे चासुरं हतम् ॥ १९॥
ततो देवाः प्रियाण्यस्य सर्वे एव समाचरन् ।
क्रीडतः क्रीडनीयानि ददुः पक्षिगणांश्च ह ॥ २०॥
सुपर्णोऽस्य ददौ पत्रं मयूरं चित्रबर्हिणम् ।

---

1. क—यज्ञः + भंकः ख-घ—यज्ञः + भगः
2. क-घ—इदमर्धं नास्ति 3. क-घ—द्विपडक्षम्

राक्षसाश्च ददुस्तस्मै वराहमहिषावुभौ ॥ २१॥
कुक्कुटं चाग्निसङ्काशं प्रददौ वरुणस्स्वयम् ।
चन्द्रमाः प्रददौ मेषम् आदित्यो रुचिरां प्रभाम् ॥ २२॥
गवां माता प्रभां देवी ददौ शतसहस्रशः ।
छागमग्निर्गुणोपेतम् इला पुष्पफलं बहु ॥ २३॥
सुधन्वा शकटं चैव रथं चाक्ष्वितकूबरम् ।
वरुणो वारुणान् दिव्यान् भुजङ्गान् प्रददौ शुभान् ॥ २४॥
सिंहान् सुरेन्द्रो व्याघ्रांश्च द्विपानन्यांश्च दंष्ट्रिणः ।
श्वापदांश्च बहून् घोराञ् शस्त्राणि विविधानि च ॥ २५॥
राक्षसासुरसङ्घाश्च ये न जग्मुस्तमीश्वरम् ।
वर्धमानवधोपायं प्रार्थयामास तारकः ॥ २६॥
उपायैर्बहुभिर्हन्तुं नाशकच्चापि तं विभुम् ॥ २७
सैनापत्येन तं देवाः पूजयित्वाऽन्वपालयन् ।
शशंसुर्विप्रकारं तं तस्मै तारककारितम् ॥ २८
स प्रवृद्धो महावीर्यो देवसेनापतिः प्रभुः ।
जघानामोघया शक्त्या दानवं तारकं गुहः ॥ २९
तेन स्म तत्कुमारेण क्रीडता निहतेऽसुरे ।
सुरेन्द्रस्स्थापितो राज्ये देवानां पुनरीश्वरः ॥ ३०
स सेनापतिरेवाथ ददौ स्कन्दः प्रतापवान् ।

ईशो गोप्ता च देवानां प्रियकृच्छङ्करस्य च ॥ ३१
हिरण्यमूर्तिर्भगवांस् तेषामेव च पावकिः ।
सदा कुमारो देवानां सैनापत्यमवाप्तवान् ॥ ३२
तस्मात् सुवर्णं मङ्गल्यं [1]रत्नमक्षयमुत्तमम् ।
सहजं कार्तिकेयस्य वह्नेस्तेजः परं मतम् ॥ ३३
[2]एवं रामाय कौरव्य वसिष्ठोऽकथयत् पुरा ।
तस्मात् सुवर्णदानाय प्रयतस्व युधिष्ठिर ॥ ३४
रामस्सुवर्णं दत्त्वा हि विमुक्तस्सर्वकिल्बिषैः ।
त्रिविष्टपं महास्थानम् अवापासुलभं नरैः ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
[ अस्मिन्नध्याये ३५ श्लोकाः ]

---

1. क-घ—दत्त
2. ख—भीष्मः—

## ॥ षट्सप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति प्रतिपदादितिथिषु श्राद्धकरणस्य प्रत्येकं फलकथनम् ॥

युधिष्ठिरः—

चातुर्वर्ण्यस्य धर्मात्मन् धर्मः प्रोक्तस्त्वयाऽनघ ।
तथैव मे श्राद्धविधिं कृत्स्नं प्रब्रूहि पार्थिव ॥ १

वैशम्पायनः—

युधिष्ठिरेणैवमुक्तो [1]भीष्मश्शान्तनवस्तदा ।
इमं श्राद्धविधिं कृत्स्नं प्रवक्तुमुपचक्रमे ॥ २

भीष्मः—

शृणुष्वावहितो राजन् श्राद्धकल्पमिमं शुभम् ।
धन्यं यशस्यं पुत्रीयं पितृयज्ञं परन्तप ॥ ३

देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
पिशाचकिन्नराणां च पूज्या वै पितरस्सदा ॥ ४

पितॄन् पूज्य ततः पश्चाद् देवान् सन्तर्पयीत वै ।
तस्मात्तान् सर्वयत्नेन पुरुषः पूजयेत् पितॄन् ॥ ५

अन्वाहार्यं महाराज पितॄणां श्राद्धमुच्यते ।
तच्चामिषेण विधिना विधिः प्रथमकल्पितः ॥ ६

---

1. ख—भीष्मोऽथ जनमेजय

सर्वेष्वहस्सु प्रीयन्ते [1]कृतैश्श्राद्धैः पितामहाः ॥ ६॥
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥ ७
पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ॥ ७॥
पिण्डानां मासिकं श्राद्धम् अन्वाहार्यं विदुर्बुधाः ॥ ८
तदामिषेण कुर्वीत प्रयतः प्राञ्जलिश्शुचिः ॥ ८॥
प्रवक्ष्यामि तु ते सर्वास् [2]तिथ्यां तिथ्यां दिने गुणान् ॥ ९

येष्वहस्सु कृतैश्श्राद्धैर् यत् फलं प्राप्यते महत् ।
तत् सर्वं कीर्तयिष्यामि फलवत्तन्निबोध मे ॥ १०

पितृनर्चन् प्रतिपदि प्राप्नुयात् स्वगृहे स्त्रियः ।
अभिरूपप्रदायिन्यो दर्शनीया बहुप्रजाः ॥ ११

स्त्रियो द्वितीयां जायन्ते तृतीयायां तु वन्दिनः ।
चतुर्थ्यां क्षुद्रपशवो भवन्ति बहवो गृहे ॥ १२

पञ्चम्यां बहवः पुत्रा जायन्ते कुर्वतां नृप ।
कुर्वाणास्तु नराष्षष्ठ्यां भवन्ति [3]द्यूतभागिनः ॥ १३

कृषिभागी भवेच्छ्राद्धं कुर्वाणस्सप्तमीं नृप ।
कुर्वाणस्त्वष्टमीं पुष्टिं वाणिज्ये लाभमाप्नुयात् ॥ १४

नवम्यां कुर्वतश्श्राद्धं भवत्येकशफं बहु ।

1. ख—कृच्छ्रैः 2. अ-क-ख—तिथ्य तिथ्यान्
3. क-घ—व्रत

विवर्धन्ते तु दशमीं गावश्श्राद्धानि कुर्वतः ॥ १५
रूप्यभागी भवेन्मर्त्यः कुर्वन्नेकादशीं नृप ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते चात्मवेश्मनि ॥ १६
द्वादश्यामीहमानस्य नित्यमेव प्रदृश्यते ।
राजतं बहुवित्तं च सुवर्णं च मनोरमम् ॥ १७
ज्ञातीनां तु भवेच्छ्रेष्ठश् श्राद्धं कुर्वंस्त्रयोदशीम् ॥ १७॥
अवश्यं तु युवानोऽस्य प्रमीयन्ते नरा गृहे ।
युद्धभागी भवेन्मर्त्यश् श्राद्धं कुर्वंश्चतुर्दशीम् ॥ १८॥
अमावास्यां तु निवपन् सर्वान् कामानवाप्नुयात् ॥ १९
कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धकर्मणि तिथ्यस्स्युः प्रशस्ता न तथेतराः ॥ २०
यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णाद् अपराह्णो विशिष्यते ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

---

## ॥ सप्तसप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति श्राद्धे तिलमाषविशेषदानस्य फलविशेषकथनम् ॥ १ ॥ भीष्मेण युधिष्ठिरं प्रति कृत्तिकादिनक्षत्रेषु श्राद्धकरणस्य फलविशेषकथनम् ॥ २ ॥

युधिष्ठिरः—

किंस्विद्दत्तं पितृभ्यो वै भवत्यक्षयमीश्वर ।
किंस्विद्बहुफलं चोक्तं किमानन्त्याय कल्पते ॥ १

भीष्मः—

ब्रवीमि श्राद्धकल्पे वै यानि श्राद्धविदो विदुः ।
तानि मे शृणु वक्ष्यामि फलं चैषां युधिष्ठिर ॥ २

तिलैर्व्रीहियवैर्माषैर् अद्भिर्मूलैः फलैस्तथा ।
दत्तेन मासं प्रीयन्ते श्राद्धेन पितरो नृप ॥ ३

वर्धमानफलं चैवम् अक्षयं मनुरब्रवीत् ।
सर्वेष्वेव तु भोज्येषु तिलाः प्राधान्यतस्स्मृताः ॥ ४

द्वौ मासौ तु भवेत्तृप्तिर् मत्स्यैः पितृगणस्य तु ।
त्रीन् मासानाविकेनाहुश् [1]चतुर्मासं शशेन तु ॥ ५

गव्येन दत्ते श्राद्धे तु संवत्सरमिहोच्यते ॥ ५॥

यथा गव्यं तथा युक्तं पायसं सर्पिषा सह ।

---

1. क-ख—चातुर्मास्यमजेन तु

वार्ध्राणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ ६॥

आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये ।
कालशाकं च [1]रोहं चाप्यानन्त्यं छाग उच्यते ॥ ७॥

गाथाश्चाप्यत्र गायन्ति पितृगीता युधिष्ठिर ।
सनत्कुमारो भगवान् पुरा या अभ्यभाषत ॥ ८॥

अपि नस्स्वकुले जायाद् यो नो दद्यात् त्रयोदशीम् ।
मघासु सर्पिषा युक्तं पायसं दक्षिणायने ॥ ९॥

आजेन चाऽपि रोहेन मघास्वेवं यतव्रतः ।
हस्तिच्छायासु विधिवत् कर्णव्यजनवीजितम् ॥ १०॥

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यत्रासौ प्रथितो लोकेष्वक्षय्यकरणो वटः ॥ ११॥

आपो मूलं घृतं मांसम् अन्नं वाऽपि पितृक्षये ।
यत् किञ्चिन्मधुना मिश्रं तदानन्त्याय कल्पते* ॥ १२॥

यमस्तु यानि श्राद्धानि प्रोवाच [2]शशबिन्दवे ।
तानि मे शृणु काम्यानि नक्षत्रेषु पृथक् पृथक् ॥ १३॥

श्राद्धं यः कृत्तिकायोगे कुर्वीत सततं नरः ।

---

1. क-ख-घ—फलं
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
2. क-घ—शशि

अग्नीनाधाय सापत्यो यजेत विगतज्वरः ॥ १४॥
अपत्यकामो रोहिण्याम् ओजस्कामो [1]मृगोत्तमे ।
क्रूरकर्मा ददच्छ्राद्धम् आर्द्रायां मानवो भवेत् ॥ १५॥
कृषिभागी भवेन्मर्त्यः कुर्वञ् श्राद्धं पुनर्वसौ ।
पुष्टिकामस्तु पुष्ये वै श्राद्धमीहेत मानवः ॥ १६॥
आश्लेषासु ददच्छ्राद्धम् वीरान् पुत्रान् प्रजायते ।
ज्ञातीनां तु भवेच्छ्रेष्ठो मघासु श्राद्धमावहन् ॥ १७॥
फल्गुनीषु ददच्छ्राद्धं सुभगश्श्राद्धदो भवेत् ।
अपत्यवानुत्तरासु हस्तेषु फलभाग्भवेत् ॥ १८॥
चित्रायां तु ददच्छ्राद्धम् लभेद्रूपवतस्सुतान् ।
स्वातियोगे पितॄनर्च्य वाणिज्यमुपजीवति ॥ १९॥
बहुपुत्रो विशाखासु पितॄनिह यजन्नरः ।
अनुराधासु कुर्वाणो राजचक्रं प्रवर्तयेत् ॥ २०॥
[2]आधिपत्यं लभेन्मर्त्यो ज्येष्ठायामुपवर्तयन् ।
नरः कुरुकुलश्रेष्ठ श्राद्धं दमपुरस्सरः ॥ २१॥
मूले त्वारोग्यमृच्छेत यशोऽषाढास्वनुत्तमम् ।
उत्तरासु त्वषाढासु वीतशोकश्चरेन्महीम् ॥ २२॥

---

1. घ—नृपोत्तम
2. क-घ—अर्धद्वयं नास्ति

श्राद्धं त्वभिजितौ कुर्वन् विद्यां श्रेष्ठामवाप्नुयात् ।
[1]श्रवणे श्रुतिसम्पत्तिं धनिष्ठासु धनं लभेत् ॥ २३॥

तथा शतभिषग्योगे व्याधिमोक्षं बलं तथा ॥ २४

पूर्वप्रोष्ठपदां कुर्वन् बहु विन्देदजाविकम् ।
उत्तरास्वथ कुर्वाणो विन्दते रेवतीं श्रितः ॥ २५

बहु रूप्यकृतं वित्तम् विन्दते रेवतीं श्रितः ।
अश्वांश्चाश्वयुजे चेति भरणीष्वायुरुत्तमम् ॥ २६

इमं श्राद्धविधिं श्रुत्वा शशबिन्दुस्तथाऽकरोत् ।
अक्लेशेनाजयच्चापि महीं सोऽनुशशास च ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
[ अस्मिन्नध्याये २७ श्लोकाः ]

---

1. ख—इदमर्धं नास्ति

## ॥ अष्टसप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति श्राद्धे निमन्त्रणार्हानर्हाणां लक्षणनिरूपणम् ॥

युधिष्ठिरः—

कीदृशेभ्यः प्रदातव्यं भवेच्छ्राद्धं पितामह ।
द्विजेभ्यः कुरुशार्दूल तन्मे व्याख्यातुमर्हसि ॥ १

भीष्मः—

ब्राह्मणान् न परीक्षेत क्षत्रियो दानधर्मवित् ।
दैवे कर्मणि पित्र्ये तु न्याय्यमाहुः परीक्षणम् ॥ २

देवताः पावयन्तीह दैवेनैवेह तेजसा ।
उपेत्य तस्मिन् देवेभ्यस् सर्वेभ्यो दापयेन्नरः ॥ ३

श्राद्धे त्वथ महाराज परीक्षेद्ब्राह्मणान् मिथः ।
कुलशीलवयोरूपैर् विद्ययाऽभिजनेन च ॥ ४

एषामन्ये पङ्क्तिदूष्यास् तथाऽन्ये पङ्क्तिपावनाः ।
अपाङ्क्तेयास्तु ये राजन् कीर्तयिष्यामि ताञ् शृणु ॥ ५

कितवो [1]भ्रूणहा यक्ष्मी पशुपालो [2]निराकृतिः ।
ग्रामप्रेष्यो वार्धुषिको गायकस्सर्वविक्रयी ॥ ६

अगारदाही गरदः कुण्डाशी सोमविक्रयी ।

1. क-ख—ब्राह्मणोऽलक्ष्मोः 2. ख—महाकृतिः

सामुद्रो राजभृतकस् तैलिकः कूटदारिकः ॥ ७
[1]पित्रा विभजमानश्च यस्य चोपपतिर्गृहे ।
अभिशस्तस्तथा स्तेनश् शिल्पं यश्चोपजीवति ॥ ८

कर्मकारश्च मूली च मित्रध्रुक् पारदारिकः ।
अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च ॥ ९

[2]श्वभिर्यश्च परिक्रामेद् यश्शुना दष्ट एव च ।
परिवित्तिश्च यश्च स्याद् यश्च स्याद् गुरुतल्पगः ॥ १०

कुशीलवो देवलको नक्षत्रैर्यश्च जीवति ।
एतानिह विजानीयाद् अपाङ्क्तेयान् द्विजाधमान् ॥ ११
शूद्राणामुपदेशं च ये कुर्वन्त्यल्प[3]चेतसः ॥ ११॥
[4]कुष्ठी काणश्शतं वन्दी श्वित्री यावत् प्रपश्यति ।
पङ्क्त्यां समुपविष्टायां तावद् दूषयते नृप ॥ १२॥
यद्वेष्टितशिरा भुङ्क्ते [5]भुङ्क्ते यद्दक्षिणामुखः ।
सोपानत्कोऽन्नमश्नाति सर्वं विद्यात् तदासुरम् ॥ १३॥
असूयया च यद्दत्तं यच्च श्रद्धाविवर्जितम् ।
सर्वं तदसुरेन्द्राय ब्रह्मा भागमकल्पयत् ॥ १४॥

---

1. ख—पुत्रान् वि
2. घ—बहिर्यश्च
3. क—तेजसः
4. क-ख-घ—षष्टिम्
5. क—यो ददद्दक्षि

श्वानश्च पङ्क्तिदूषाश्च नावेक्षेरन् कथञ्चन ।
तस्मात् परिश्रिते दद्यात् तिलांश्चान्ववकीरयेत् ॥ १५॥

तिलदानेऽप्यदायादा ये च क्रोधवशा गणाः ।
यातुधानाः पिशाचाश्च विप्रलुम्पन्ति तद्धविः ॥ १६॥

यावद्ध्यपाङ्क्त्यः पङ्क्त्यां वै समासीनान् प्रपश्यति ।
तावत् फलाद्भ्रंशयति दातारं तस्य बालिशः ॥ १७॥

इमे तु भरतश्रेष्ठ विज्ञेयाः पङ्क्तिपावनाः ।
हेतुतस्तान् प्रवक्ष्यामि परीक्षस्वेह तान् द्विजान् ॥ १८॥

वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत ॥ १९

अथर्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः ।
सत्यवादी दानशीलस् स्वकर्मनिरतश्च यः ॥ २०

ये च पुण्येषु तीर्थेषु ह्यभिषेककृतश्रमाः ।
मखेषु च सहस्रेषु भवन्त्यवभृथाप्लुताः ॥ २१

अक्रोधना ह्यचपलाः क्षान्ता दान्ता जितेन्द्रियाः ।
सर्वभूतहिता ये च श्राद्धेष्वेतान् निमन्त्रय ॥ २२

एतेषु दत्तमक्षय्यम् एते वै पङ्क्तिपावनाः ॥ २२॥
इमे परे महाराज विज्ञेयाः पङ्क्तिपावनाः ॥ २३

यतयो मोक्षधर्मज्ञा योगिनश्चरितव्रताः ।
पाञ्चरात्रविदो मुख्यास् तथा भागवताः परे ॥ २४

[1]वैखानसाः कुलेश्रेष्ठा वैदिकाचारचारिणः ।
ये चेतिहासं प्रयताश् श्रावयन्ति द्विजोत्तमान् ॥ २५

ये च भाष्यविदः केचिद् ये च व्याकरणे रताः ।
अधीयते पुराणं ये धर्मशास्त्राण्यथापि च ॥ २६

अधीत्य च यथान्यायं विधिवत्तस्य कारिणः ।
उपपन्नो गुरुकुले सत्यवादी सहस्रशः ॥ २७

अग्र्यस्सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
यावदेते प्रपश्यन्ति पङ्क्तीस्तावत् पुनन्ति च ॥ २८

ततो हि पावनात् पङ्क्त्याः पङ्क्तिपावन उच्यते ।
क्रोशादर्धतृतीयात्तु पावयेदेक एव च ॥ २९

ब्रह्मदेयानुसन्तान इति ब्रह्मविदो विदुः ॥ २९॥

अनृत्विगनुपाध्यायस् स चेदग्र्यासनं व्रजेत् ।
ऋत्विग्भिरननुज्ञातः पङ्क्त्यां हरति दुष्कृतम् ॥ ३०॥

अथ चेद्वेदवित् सर्वैः पङ्क्तिदोषैर्विवर्जितः ।
न च स्यात् [2]पतितो राजन् पङ्क्तिपावन एव सः ॥ ३१॥

तस्मात् सर्वप्रयत्नेन परीक्ष्यामन्त्रयेद्द्विजान् ।
स्वकर्मनिरतान् दान्तान् कुले जातान् बहुश्रुतान् ॥ ३२॥

1. ख—इदमर्धं नास्ति
2. क—पलितो अ-घ—पालितो

यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।
न प्रीणाति पितॄन् देवान् स्वर्गं च न स पश्यति ॥ ३३॥

[1]यश्च श्राद्धेषु कुरुते सङ्गतानि
न देवयानेन पथा स याति ।
स वै मुक्तः पिप्प[2]लबन्धनाद्धि
स्वर्गाल्लोकाच्च्यवते श्राद्धमित्रः ॥ ३४॥

तस्मान्मित्रं श्राद्धतो नाददीत
दद्यान्मित्रेभ्य[3]स्सङ्गतार्थं धनानि ।
यं मन्यते नैव शत्रुं न मित्रं
तं मध्यस्थं भोजयेद्धव्यकव्यैः ॥ ३५॥

यथोषरे बीजमुप्तं न रोहे-
न्न चास्योप्ता प्राप्नुयाद्बीजभावम् ।
एवं श्राद्धं भुक्तमनर्हमाणैर्
न चेह चामुत्र फलं ददाति ॥ ३६॥

ब्राह्मणोऽप्यनधीयानस् तृणाग्निरिव शाम्यति ।
तस्मै श्राद्धं न दातव्यं न हि भस्मनि हूयते ॥ ३७॥

सम्भोजनी नाम पिशाचभिक्षा
सा नैव देवान् न पितॄनुपैति ।

1. ख—यच्छ्राद्धकाले कु 2. क-घ—लं बन्धनानि
3. ख—स्सङ्गृहार्थं अ—सङ्गरार्थं

इहैव सा चरति क्षीणपुण्या
शालान्तरे गौरिव [1]नष्टवत्सा ॥ ३८॥

तथा दत्तं नर्तके गायने च
यथाऽनृचे दक्षिणा चावृणोति ॥ ३९

उभौ हिनस्ति न भुनक्ति चैषा
येनानृचे दक्षिणा दीयते वै ।
अघादिनी गृहमेषां पतन्ती
तेषां प्रेतान् पातयेद्देवयानात् ॥ ४०

ऋषीणां समयं नित्यं ये रक्षन्ति युधिष्ठिर ।
[2]निश्चितान् सर्वधर्मज्ञांस् तादृशान् ब्राह्मणान् विदुः ॥ ४१

स्वाध्यायनिष्ठा ऋषयो ज्ञाननिष्ठास्तथैव च ।
तपोनिष्ठाश्च बोद्धव्याः कर्मनिष्ठाश्च भारत ॥ ४२

कव्यानि ज्ञाननिष्ठेभ्यः प्रतिष्ठाप्यानि भारत ।
तत्र ये ब्राह्मणाः केचिन्न च निन्दन्ति ते पराः ॥ ४३

ये तु निन्दन्ति [3]जल्पेषु न ताञ् श्राद्धेषु भोजयेत् ।
ब्राह्मणा निन्दिता राजन् हन्युस्त्रिपुरुषं कुलम् ॥ ४४

वैखानसानां वचनम् ऋषीणां श्रूयते नृप ।

---

1. घ—नव्य
2. अ-क-घ—निश्चितास्सर्वधर्मार्थास्तादृशा ब्राह्मणा विदुः
3. ख-घ—कल्पेषु

दूरादेव परीक्षेत ब्राह्मणान् वेदपारगान् ॥ ४५
[1]प्रियान् वा यदि वा द्वेष्यांस् तेषु तच्छ्राद्धमावपेत् ॥ ४५॥
यस्सहस्रं सहस्राणां भोजयेदनृचो नरः ।
एकस्तान् मन्त्रवित् पूतस् सर्वानर्हति भारत ॥ ४६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
[ अस्मिन्नध्याये ४६॥ श्लोकाः ]

---

अतः परं आनुशासनिकपर्वणि एकोनाशीतितमाध्याये
आद्यश्श्लोकः—

---

युधिष्ठिरः—
केन सङ्कल्पितं श्राद्धं कस्मिन् काले किमात्मकम् ।
येन सङ्कल्पितं चैव तन्मे ब्रूहि पितामह ॥ इति ॥

---

1. क—ब्राह्मणान् यदि वाऽन्वेष्यान् तेषु तच्छ्राद्धमाचरेत् ।
[पाठान्तरम ]

Printed by V. Venkateswara Sastrulu of
V. Ramaswamy Sastrulu & Sons at the 'Vavilla' Press, Madras.-1935.

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| २९४ | ६ | चा | सा |
| ३०० | ६ | इक्ष्वकोस्तु | इक्ष्वाकोस्तु |
| ३०९ | १७ | असुता | असूता |
| ,, | १९ | समाप्ति दृश्यते | समाप्तिर्दृश्यते |
| ३१४ | २० | ,, | ,, |
| ,, | १६ | मुज्यते | मुच्यते |
| ३२५ | २१ | त्यस्ति | अस्ति |
| ३२६ | ७ | घर्मश् | धर्मश् |
| ३३४ | १८ | समाप्तिदृश्यते | समाप्तिर्दृश्यते |
| ३७४ | ७ | ब्राह्यणानां | ब्राह्मणानां |
| ३८० | ३ | कामानवात्स्यथ | कामानवाप्स्यथ |
| ,, | १४ | दुरासदाश्व | दुरासदाश्च |
| ३९० | ५ | इषद्वा | ईषद्वा |
| ४०० | १३ | सत्तस | सत्तम |
| ४१९ | १९ | बाह्लीकोः | बाह्लीको |
| ४५५ | २ | चव | चैव |
| ४७४ | १३ | वनाद्दशे | वनोद्देशे |
| ४८४ | ४ | तथेऽत्युक्तः | तथेत्युक्तः |
| ५६६ | ४ | भूतभ्यस् | भूतेभ्यस् |
| ६७० | २१ | प्रभोः | प्रभो |

॥ श्रीः ॥

## महाभारतानुशासनपर्वप्रथमसम्पुटस्थानामशुद्धानां शोधनम्

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ११ | २ | कर्म तँद्जनुक | कर्म तदर्जुनक |
| १३ | ७ | महदाख्यानाम् | महदाख्यानम् |
| ५४ | १४ | पुत्रौ वै | पुत्रो वै |
| ६३ | २ | करेति | करोति |
| ७८ | २ | चंक | च कः |
| ८२ | २१ | श्लोको चास्ति | श्लोको नास्ति |
| ८८ | ७ | व्रासुदेव | वासुदेव |
| ९७ | ५ | मात्मनं | मात्मानं |
| १०६ | ४ | उभावव | उभावेव |
| २११ | ४ | हरस्यांङ्गेपु | हरस्याङ्गेपु |
| ,, | १३ | अवज्ञताः | अवज्ञाताः |
| २२८ | ७ | मुञ्श्रीयां | मुञ्जीयां |
| २४० | १२ | निष्ठनां | निष्ठानां |
| २४२ | ११ | ध्रवः | ध्रुवः |
| २४५ | २ | मत्प्रसादद्विज | मत्प्रसादाद्विज |
| २६१ | १२ | दीर्घ | दीर्घ |
| २७८ | ७ | स्वभर्त्रास्स्वजनो | स्वभर्त्रा स्वजनो |
| २८८ | ५ | ज्ञावा | ज्ञात्वा |